★ सर्व गणेश स्तोत्रे ★

॥ श्रीउच्छिष्टगणपतिसहस्रनामस्तोत्रम् ॥

श्रीगणेशाय नमः ।

श्रीभैरव उवाच ।

शृणु देवि रहस्यं मे यत्पुरा सूचितं मया । तव भक्त्या गणेशस्य वक्ष्ये नामसहस्रकम् ॥ १॥

श्रीदेव्युवाच ।

ॐ भगवन्गणनाथस्य उच्छिष्टस्य महात्मनः ।

श्रोतुं नाम सहस्रं मे हृदयं प्रोत्सुकायते ॥ २॥

श्रीभैरव उवाच ।

प्राङ्मुखे त्रिपुरानाथे जाता विघ्नकुलाः शिवे ।

मोहने मुच्यते चेतस्तैः सर्वैर्बलदर्पितैः ॥ ३॥

तदा प्रभुं गणाध्यक्षं स्तुत्वा नामसहस्रकैः ।

विघ्ना दूरात्पलायन्ते कालरुद्रादिव प्रजाः ॥ ४॥

तस्यानुग्रहतो देवि जातोऽहं त्रिपुरान्तकः ।

तमद्यापि गणेशानं स्तौमि नामसहस्रकैः ॥ ५॥

तदद्य तव भक्त्याहं साधकानां हिताय च ।

महागणपतेर्वक्ष्ये दिव्यं नामसहस्रकम् ॥ ६॥

ॐ अस्य श्रीउच्छिष्टगणेशसहस्रनामस्तोत्रमन्त्रस्य श्रीभैरव ऋषिः ।

गायत्री छन्दः । श्रीमहागणपतिर्देवता ।

गं बीजम् । ह्रीं शक्तिः । कुरुकुरु कीलकम् ।

मम धर्मार्थकाममोक्षार्थे जपे विनियोगः ॥

ॐ ह्रीं श्रीं क्लीं गणाध्यक्षो ग्लौं गँ गणपतिर्गुणी ।

गुणाढ्यो निर्गुणो गोप्ता गजवक्त्रो विभावसुः ॥ ७॥

विश्वेश्वरो विभादीप्तो दीपनो धीवरो धनी ।

सदा शान्तो जगत्त्राता विश्वावर्तो विभाकरः ॥ ८॥

विश्रम्भी विजयो वैद्यो वारान्निधिरनुत्तमः ।

अणिमाविभवः श्रेष्ठो ज्येष्ठो गाथाप्रियो गुरुः ॥ ९॥

सृष्टिकर्ता जगद्धर्ता विश्वभर्ता जगन्निधिः ।

पतिः पीतविभूषाङ्को रक्ताक्षो लोहिताम्बरः ॥ १०॥

विरूपाक्षो विमानस्थो विनीतः सदस्यः सुखी । सात्वतः

सुरूपः सात्त्विकः सत्यः शुद्धः शङ्करनन्दनः ॥ ११॥

नन्दीश्वरो जयानन्दी वन्द्यः स्तुत्यो विचक्षणः ।

दैत्यमर्द्दी सदाक्षीबो मदिरारुणलोचनः ॥ १२॥

सारात्मा विश्वसारश्च विश्वसारो(२) विलेपनः ।

परं ब्रह्म परं ज्योतिः साक्षी त्र्यक्षो विकत्थनः ॥ १३॥

विश्वेश्वरो वीरहर्ता सौभाग्यो भाग्यवर्द्धनः ।

भृङ्गिरिटी भृङ्गमाली भृङ्गकूजितनादितः ॥ १४॥

विनर्तको विनीतोऽपि विनतानन्दनार्चितः ।

वैनतेयो विनम्राङ्गो विश्वनायकनायकः ॥ १५॥

विराटको विराटश्च विदग्धो विधुरात्मभूः ।

पुष्पदन्तः पुष्पहारी पुष्पमालाविभूषणः ॥ १६॥

पुष्पेषुमथनः पुष्टो विवर्तः कर्तरीकरः ।

अन्त्योऽन्तकश्चित्तगणाश्चित्तचिन्तापहारकः ॥ १७॥

अचिन्त्योऽचिन्त्यरूपश्च चन्दनाकुलमुण्डकः ।

लोहितो लिपितो लुप्तो लोहिताक्षो विलोभकः ॥ १८॥

लब्धाशयो लोभरतो लोभदोऽलङ्घ्यगर्धकः ।

सुन्दरः सुन्दरीपुत्रः समस्तासुरघातकः ॥ १९॥

नूपुराढ्यो विभवेन्द्रो नरनारायणो रविः ।

विचारो वान्तदो वाग्मी वितर्की विजयीश्वरः ॥ २०॥

सुजो बुद्धः सदारूपः सुखदः सुखसेवितः ।

विकर्तनो विपच्चारी विनटो नटनर्तकः ॥ २१॥

नटो नाट्यप्रियो नादोऽनन्तोऽनन्तगुणात्मकः ।

गङ्गाजलपानप्रियो गङ्गातीरविहारकृत् ॥ २२।

गङ्गाप्रियो गङ्गजश्च वाहनादिपुरःसरः ।

गन्धमादनसंवासो गन्धमादनकेलिकृत् ॥ २३॥

गन्धानुलिप्तपूर्वाङ्गः सर्वदेवस्मरः सदा ।

गणगन्धर्वराजेशो गणगन्धर्वसेवितः ॥ २४॥

गन्धर्वपूजितो नित्यं सर्वरोगविनाशकः ।

गन्धर्वगणसंसेव्यो गन्धर्ववरदायकः ॥ २५॥

गन्धर्वो गन्धमातङ्गो गन्धर्वकुलदैवतः ।

गन्धर्वगर्वसंवेगो गन्धर्ववरदायकः ॥ २६॥

गन्धर्वप्रबलार्तिघ्नो गन्धर्वगणसंयुतः ।

गन्धर्वादिगुणानन्दो नन्दोऽनन्तगुणात्मकः ॥ २७॥

विश्वमूर्तिर्विश्वधाता विनतास्यो विनर्तकः ।

करालः कामदः कान्तः कमनीयः कलानिधिः ॥ २८॥

कारुण्यरूपः कुटिलः कुलाचारी कुलेश्वरः ।

विकरालो रणश्रेष्ठः संहारो हारभूषणः ॥ २९॥

उरुरभ्यमुखो रक्तो देवतादयितौरसः ।

महाकालो महादंष्ट्रो महोरगभयानकः ॥ ३०॥

उन्मत्तरूपः कालाग्निरग्निसूर्येन्दुलोचनः ।

सितास्यः सितमाल्यश्च सितदन्तः सितांशुमान् ॥ ३१॥

असितात्मा भैरवेशो भाग्यवान्भगवान्भवः ।

गर्भात्मजो भगावासो भगदो भगवर्द्धनः ॥ ३२॥

शुभङ्करः शुचिः शान्तः श्रेष्ठः श्रव्यः शचीपतिः ।

वेदाद्यो वेदकर्ता च वेदवेद्यः सनातनः ॥ ३३॥

विद्याप्रदो वेदरसो वैदिको वेदपारगः ।

वेदध्वनिरतो वीरो वेदविद्यागमोऽर्थवित् ॥ ३४॥

तत्त्वज्ञः सर्वगः साधुः सदयः सदसन्मयः ।

शिवशङ्करः शिवसुतः शिवानन्दविवर्द्धनः ॥ ३५॥

शैत्यः श्वेतः शतमुखो मुग्धो मोदकभूषणः ।

देवो दिनकरो धीरो घृतिमान्द्युतिमान्धवः ॥ ३६॥

शुद्धात्मा शुद्धमतिमाञ्छुद्धदीप्तिः शुचिव्रतः ।

शरण्यः शौनकः शूरः शरदम्भोजधारकः ॥ ३७॥ न्

दारकः शिखिवाहेष्टः सितः शङ्करवल्लभः ।

शङ्करो निर्भयो नित्यो लयकृल्लास्यतत्परः ॥ ३८॥

लूतो लीलारसोल्लासी विलासी विभ्रमो भ्रमः ।

भ्रमणः शशिभृत्सुर्यः शनिर्धरणिनन्दनः ॥ ३९॥

बुधो विबुधसेव्यश्च बुधराजो बलंधरः ।

जीवो जीवप्रदो जेता स्तुत्यो नित्यो रतिप्रियः ॥ ४०॥

जनको जनमार्गज्ञो जनरक्षणतत्परः ।

जनानन्दप्रदाता च जनकाह्लादकारकः ॥ ४१।

विबुधो बुधमान्यश्च जैनमार्गनिवर्तकः ।

गच्छो गणपतिर्गच्छनायको गच्छगर्वहा ॥ ४२॥

गच्छराजोथ गच्छेथो गच्छराजनमस्कृतः ।

गच्छप्रियो गच्छगुरुर्गच्छत्राकृद्यमातुरः ॥ ४३॥

गच्छप्रभुर्गच्छचरो गच्छप्रियकृताद्यमः ।

गच्छगीतगुणोगर्तो मर्यादाप्रतिपालकः ॥ ४४॥

गीर्वाणागमसारस्य गर्भो गीर्वाणदेवता ।

गौरीसुतो गुरुवरो गौराङ्गो गणपूजितः ॥ ४५॥

परम्पदं परन्धाम परमात्मा कविः कुजः ।

राहुर्दैत्यशिरश्छेदी केतुः कनककुण्डलः ॥ ४६॥

ग्रहेन्द्रो ग्रहितो ग्राह्योऽग्रणीर्घुर्घुरनादितः ।

पर्जन्यः पीवरः पत्री पीनवक्षाः पराक्रमी ॥ ४७॥

वनेचरो वनस्पतिर्वनवासी स्मरोपमः ।

पुण्यः पूतः पवित्रश्च परात्मा पूर्णाविग्रहः ॥ ४८॥

पूर्णेन्दुसुकलाकारो मन्त्रपूर्णमनोरथः ।

युगात्मा युगकृद्यज्वा याज्ञिको यज्ञवत्सलः ॥ ४९॥

यशस्यो यजमानेष्टो वज्रभृद्वज्रपञ्जरः ।

मणिभद्रो मणिमयो मान्यो मीनध्वजाश्रितः ॥ ५०॥

मीनध्वजो मनोहारी योगिनां योगवर्धनः ।

द्रष्टा स्रष्टा तपस्वी च विग्रही तापसप्रियः ॥ ५१॥

तपोमयस्तपोमूर्तिस्तपनश्च तपोधनः ।

सम्पत्तिसदनाकारः सम्पत्तिसुखदायकः ॥ ५२॥

सम्पत्तिसुखकर्ता च सम्पत्तिसुभगाननः ।

सम्पत्तिशुभदो नित्यसम्पत्तिश्च यशोधनः ॥ ५३॥

रुचको मेचकस्तुष्टः प्रभुस्तोमरघातकः ।

दण्डी चण्डांशुरव्यक्तः कमण्डलुधरोऽनघः ॥ ५४॥

कामी कर्मरतः कालः कोलः क्रन्दितदिक्तटः ।

भ्रामको जातिपूज्यश्च जाड्यहा जडसूदनः ॥ ५५॥

जालन्धरो जगद्वासी हास्यकृद्गहनो गुहः ।

हविष्मान्हव्यवाहाक्षो हाटको हाटकाङ्गदः ॥ ५६॥

सुमेरुर्हिमवान्होता हरपुत्रो हलङ्कषः ।

हालाप्रियो हृदा शान्तः कान्ताहृदयपोषणः ॥ ५७॥

शोषणः क्लेशहा क्रूरः कठोरः कठिनाकृतिः ।

कुबेरो धीमयो ध्याता ध्येयो धीमान्दयानिधिः ॥ ५८॥

दविष्ठो दमनो हृष्टो दाता त्राता पितासमः ।

निर्गतो नैगमोऽगम्यो निर्जयो जटिलोऽजरः ॥ ५९॥

जनजीवो जितारातिर्जगद्व्यापी जगन्मयः ।

चामीकरनिभो नाभ्यो नलिनायतलोचनः ॥ ६०॥

रोचनो मोचको मन्त्री मन्त्रकोटिसमाश्रितः ।

पञ्चभूतात्मकः पञ्चसायकः पञ्चवक्त्रकः ॥ ६१॥

पञ्चमः पश्चिमः पूर्वः पूर्णः कीर्णालकः कुणिः ।

कठोरहृदयो ग्रीवालङ्कृतो ललिताशयः ॥ ६२॥

लोलचित्तो बृहन्नासो मासपक्षर्तुरूपवान् ।

ध्रुवो द्रुतगतिर्बन्धो धर्मी नाकिप्रियोऽनलः ॥ ६३॥

अङ्गुल्यग्रस्थभुवनो भुवनैकमलापहः ।

सागरः स्वर्गतिः स्वक्षः सानन्दः साधुपूजितः ॥ ६४॥

सतीपतिः समरसः सनकः सरलः सरः ।

सुरप्रियो वसुमतिर्वासवो वसुपूजितः ॥ ६५॥

वित्तदो वित्तनाथश्च धनिनां धनदायकः ।

राजीवनयनः स्मार्तः स्मृतिदः कृत्तिकाम्बरः ॥ ६६॥

अश्विनोऽश्वमुखः शुभ्रो हरिणो हरिणीप्रियः ।

कृत्तिकासनकः कोलो रोहिणीरमणोपमः ॥ ६७॥

रौहिणेयप्रेमकरो रोहिणीमोहनो मृगः ।

मृगराजो मृगशिरा माधवो मधुरध्वनिः ॥ ६८॥

आर्द्राननो महाबुद्धिर्महोरगविभूषणः ।

भ्रूक्षेपदत्तविभवो भ्रूकरालः पुनर्मयः ॥ ६९॥

पुनर्देवः पुनर्जेता पुनर्जीवः पुनर्वसुः ।

तिमिरास्तिमिकेतुश्च तिमिषासुरघातनः ॥ ७०॥

तिष्यस्तुलाधरो जृम्भो विश्लेषाश्लेषदानराट् ।

मानदो माधवो माधो वाचालो मघवोपमः ॥ ७१॥

मध्यो मघाप्रियो मेघो महाशुण्डो महाभुजः ।

पूर्वफाल्गुनिकः स्फीत फल्गुरुत्तरफाल्गुनः ॥ ७२॥

फेनिलो ब्रह्मदो ब्रह्मा सप्ततन्तुसमाश्रयः ।

घोणाहस्तश्चतुर्हस्तो हस्तिवन्ध्यो हलायुधः ॥ ७३॥

चित्राम्बरार्चितपदः स्वस्तिदः स्वस्तिनिग्रहः ।

विशाखः शिखिसेव्यश्च शिखिध्वजसहोदरः ॥ ७४॥

अणुरेणूत्करः स्फारो रुरुरेणुसुतो नरः ।

अनुराधाप्रियो राधः श्रीमाञ्छुक्लः शुचिस्मितः ॥ ७५॥

ज्येष्ठः श्रेष्ठार्चितपदो मूलं च त्रिजगद्गुरुः ।

शुचिश्चैव पूर्वाषाढश्चोत्तराषाढ ईश्वरः ॥ ७६॥

श्रव्योऽभिजिदनन्तात्मा श्रवो वेपितदानवः ।

श्रावणः श्रवणः श्रोता धनी धन्यो धनिष्ठकः ॥ ७७॥

शातातपः शातकुम्भः शरज्ज्योतिः शताभिषक् ।

पूर्वाभाद्रपदो भद्रश्चोत्तराभाद्रपादितः ॥ ७८॥

रेणुकातनयो रामो रेवतीरमणो रमी ।

आश्वयुक्कार्तिकेयेष्टो मार्गशीर्षो मृगोत्तमः ॥ । ७९॥

पोषेश्वरः फाल्गुनात्मा वसन्तश्चैत्रको मधुः ।

राज्यदोऽभिजिदात्मेयस्तारेशस्तारकद्युतिः ॥ ८०॥

प्रतीतः प्रोर्जितः प्रीतः परमः परमो हितः ।

परहा पञ्चभूः पञ्चवायुपूज्यपरिग्रहः ॥ ८१॥

पुराणागमविद्योगी महिषो रासभोऽग्रजः ।

ग्रहो मेषो मृषो मन्दो मन्मथो मिथुनाकृतिः ॥ ८२॥

कल्पभृत्कटको दीपो मर्कटः कर्कटो धृणिः ।

कुक्कुटो वनजो हंसः परमहंसः सृगालकः ॥ ८३॥

सिंहा सिंहासनाभूष्यो मद्गुर्मूषकवाहनः ।

पुत्रदो नरकत्राता कन्याप्रीतः कुलोद्वहः ॥ ८४॥

अतुल्यरूपो बलदस्तुल्यभृत्तुल्यसाक्षिकः ।

अलिश्चापधरो धन्वी कच्छपो मकरो मणिः ॥ ८५॥

कुम्भभृत्कलशः कुब्जो मीनमांससुतर्पितः ।

राशिताराग्रहमयस्तिथिरूपो जगद्विभुः ॥ ८६॥

प्रतापी प्रतिपत्प्रेयोऽद्वितीयोऽद्वैतनिश्चितः ।

त्रिरूपश्च तृतीयाग्निस्त्रयीरूपस्त्रयीतनुः ॥ ८७॥

चतुर्थीवल्लभो देवो परागः पञ्चमीश्वरः ।

षड्रसास्वादविज्ञानः षष्ठीषष्टिकवत्सलः ॥ ८८॥

सप्तार्णवगतिः सारः सप्तमीश्वररोहितः ।

अष्टमीनन्दनोत्तंसो नवमीभक्तिभावितः ॥ ८९॥

दशदिक्पतिपूज्यश्च दशमी द्रुहिणो द्रुतः ।

एकादशात्मगणयो द्वादशीयुगचर्चितः ॥ ९०॥

त्रयोदशमणिस्तुत्यश्चतुर्दशस्वरप्रियः ।

चतुर्दशेन्द्रसंस्तुत्यः पूर्णिमानन्दविग्रहः ॥ ९१॥

दर्शदर्शो दर्शनश्च वानप्रस्थो महेश्वरः ।

मौर्वी मधुरवाङ्मूलमूर्तिमान्मेघवाहनः ॥ ९२॥

महागजो जितक्रोधो जितशत्रुर्जयाश्रयः ।

रौद्रो रुद्रप्रियो रुद्रो रुद्रपुत्रोऽघनाशनः ॥ ९३॥

भवप्रियो भवानीष्टो भारभृद्भूतभावनः ।

गान्धर्वकुशलोऽकुण्ठो वैकुण्ठो विष्टरश्रवाः ॥ ९४॥

वृत्रहा विघ्नहा सीरः समस्तदुःखतापहा ।

मञ्जुलो मार्जरो मत्तो दुर्गापुत्रो दुरालसः ॥ ९५॥

अनन्तचित्सुधाधोरो वीरो वीर्यैकसाधकः ।

भास्वन्मुकुटमाणिक्यः कूजत्किङ्किणिजालकः ॥ ९६॥

शुण्डाधारी तुण्डचलः कुण्डली मुण्डमालकः ।

पद्माक्षः पद्महस्तश्च पद्मनाभसमर्चितः ॥ ९७॥

उद्घृताधरदन्ताढ्यो मालाभूषणभूषितः ।

मारदो वारणो लोलश्रवणः शूर्पकर्णकः ॥ ९८॥

बृहदुल्लासनासाढ्यो व्याप्तत्रैलोक्यमण्डलः ।

रत्नमण्डलमध्यस्थः कृशानुरूपशीलकः ॥ ९९॥

बृहत्कर्णाञ्चलोद्धूतवायुवीजितदिक्तटः ।

बृहदास्यरवाक्रान्तभीतब्रह्माण्डभाण्डकः ॥ १००॥

बृहत्पादसमाक्रान्तसप्तपातालदीपितः ।

बृहद्दन्तकृतात्युग्ररणानन्दरसालसः ॥ १०१॥

बृहद्धस्तधृताशेषायुधनिर्जितदानवः ।

स्फूरत्सिन्दूरवदनः स्फूरत्तेजोऽग्निलोचनः ॥ १०२॥

उद्दीपितमणिः स्फूर्जन्नूपुरध्वनिनादितः ।

चलत्तोयप्रवाहाढ्यो नदीजलकणाकरः ॥ १०३॥

भ्रमत्कुञ्जरसङ्घातवन्दिताङ्घ्रिसरोरुहः ।

ब्रह्माच्युतमहारुद्रपुरस्सरसुरार्चितः ॥ १०४॥

अशेषशेषप्रभृतिव्यालजालोपसेवितः ।

गर्जत्पञ्चाननारावव्याप्ताकाशधरातलः ॥ १०५॥

हाहाहूहूगतात्युग्रस्वरविभ्रान्तमानसः ।

पञ्चाशद्वर्णबीजाख्यमन्त्रमन्त्रितविग्रहः ॥ १०६॥

वेदान्तशास्त्रपीयूषधाराऽऽप्लावितभूतलः ।

शङ्खध्वनिसमाक्रान्तपातालादिनभस्तलः ॥ १०७॥

चिन्तामणिर्महामल्लो बल्लहस्तो बलिः कविः ।

कृतत्रेतायुगोल्लासभासमानजगत्त्रयः ॥ १०८॥

द्वापरः परलोकैकः कर्मध्वान्तसुधाकरः ।

सुधाऽऽसिक्तवपुर्व्यासो ब्रह्माण्डादिकबाहुकः ॥ १०९॥

अकारादिक्षकारान्तवर्णपङ्क्तिसमुज्ज्वलः ।

अकाराकारप्रोद्गीततताननादनिनादितः ॥ ११०॥

इकारेकारमत्राढ्यमालाभ्रमणलालसः ।

उकारोकारप्रोद्गारिघोरनागोपवीतकः ॥ १११॥

ऋवर्णाङ्कितॠकारिपद्मद्वयसमुज्ज्वलः ।

लृकारयुतलॄकारशङ्खपूर्णदिगन्तरः ॥ ११२॥

एकारैककारगिरिजास्तनपानविचक्षणः ।

ओकारौकारविश्वादिकृतसृष्टिक्रमालसः ॥ ११३॥

अंअः वर्णावलीव्याप्तपादादिशीर्षमण्डलः ।

कर्णतालकृतात्युच्चैर्वायुवीजितनिर्झरः ॥ ११४॥

खगेशध्वजरत्नाङ्ककिरीटारुणपादकः ।

गर्विताशेषगन्धर्वगीततत्परश्रोत्रकः ॥ ११५॥

घनवाहनवागीशपुरस्सरसुरार्चितः ।

ङवर्णामृतधाराढ्यशोभमानैकदन्तकः ॥ ११६॥

चन्द्रकुङ्कुमजम्बाललिप्तसिन्दूरविग्रहः ।

छत्रचामररत्नाढ्यभ्रुकुटालङ्कृताननः ॥ ११७॥

जटाबद्धमहानर्घमणिपङ्क्तिविराजितः ।

झङ्कारिमधुपव्रातगाननादविनादितः ॥ ११८॥

ञवर्णकृतसंहारदैत्यासृक्पर्णमुद्गरः ।

टकाराख्याफलास्वादवेपिताशेषमूर्धजः ॥ ११९॥

ठकाराद्यडकाराङ्कढकारानन्दतोषितः ।

णवर्णामृतपीयूषधाराधारसुधाकरः ॥ १२०॥

ताम्रसिन्दूरपूजाढ्यललाटफलकच्छविः ।

थकारघनपङ्क्त्यातिसन्तोषिताद्विजव्रजः ॥ १२१॥

दयामृतहृदम्भोजधृतत्रैलोक्यमण्डलः ।

धनदादिमहायक्षसंसेवितपदाम्बुजः ॥ १२२॥

नमिताशेषदेवौघकिरीटमणिरञ्जितः ।

परवर्गापवर्गादिभोगेच्छेदनदक्षकः ॥ १२३॥

फणिचक्रसमाक्रान्तगलमण्डलमण्डितः ।

बद्धभ्रूयुगभीमोग्रसन्तर्जितसुरसुरः ॥ १२४॥

भवानीहृदयानन्दवर्द्धनैकनिशाकरः ।

मदिराकलशस्फीतकरालैककराम्बुजः ॥ १२५॥

यज्ञान्तरायसङ्घातसज्जीकृतवरायुधः ।

रत्नाकरसुताकान्तिक्रान्तिकीर्तिविवर्धनः ॥ १२६॥

लम्बोदरमहाभीमवपुर्दीप्तकृतासुरः ।

वरुणादिदिगीशानस्वर्चितार्चनचर्चितः ॥ १२७॥

शङ्करैकप्रियप्रेमनयनान्दवर्द्धनः ।

षोडशस्वरितालापगीतगानविचक्षणः ॥ १२८॥

समस्तदुर्गतिसरिन्नाथोत्तारणकोडुपः ।

हरादिब्रह्मवैकुण्ठब्रह्मगीतादिपाठकः ॥ १२९॥

क्षमापूरितहृत्पद्मसंरक्षितचराचरः ।

ताराङ्कमन्त्रवर्णैकाविग्रहोज्ज्वलविग्रहः ॥ १३०॥

अकारादिक्षकारान्तविद्याभूषितविग्रहः ।

ॐ श्रीविनायको ॐ ह्रीं विघ्नाध्यक्षो गणाधिपः ॥ १३१॥

हेरम्बो मोदकाहारो वक्रतुण्डो विधिः स्मृतः ।

वेदान्तगीतो विद्यार्थिसिद्धमन्त्रः षडक्षरः ॥ १३२॥

गणेशो वरदो देवो द्वादशाक्षरमन्त्रितः ।

सप्तकोटिमहामन्त्रमन्त्रिताशेषविग्रहः ॥ १३३॥

गाङ्गेयो गणसेव्यश्च ॐ श्रीद्वैमातुरः शिवः ।

ॐ ह्रीं श्रीं क्लीं ग्लौं गँ देवो महागणपतिः प्रभुः ॥ १३४॥

इदं नामसहस्रं तु महागणपतेः स्मृतम् ।

गुह्यं गोप्यतमं सिद्धं सर्वतन्त्रेषु गोपितम् ॥ १३५॥

सर्वमन्त्रमयं दिव्यं सर्वविघ्नविनाशनम् ।

ग्रहतारामयं राशिवर्णपङ्क्तिसमन्वितम् ॥ १३६॥

सर्वाविद्यामयं ब्रह्मसाधनं साधकप्रियम् ।

गणेशस्य च सर्वस्वं रहस्यं त्रिदिवौकसाम् ॥ १३७॥

यथेष्टफलदं लोके मनोरथप्रपूरणम् ।

अष्टसिद्धिमयं श्रेष्ठं साधकानां जयप्रदम् ॥ १३८॥

विनार्चनं विना होमं विनान्यासं विना जपम् ।

अणिमाद्यष्टसिद्धीनां साधनं स्मृतिमात्रतः ॥ १३९॥

चतुर्थ्यामर्धरात्रे तु पठेन्मन्त्री चतुष्पथे ।

लिखेद्भूर्जे महादेवि ! पुण्यं नामसहस्रकम् ॥ १४०॥

धारयेत्तं चतुर्दश्यां मध्याह्ने मूर्ध्नि वा भुजे ।

योषिद्वामकरे चैव पुरुषो दक्षिणे भुजे ॥ १४१॥

स्तम्भयेदपि ब्रह्माणं मोहयेदपि शङ्करम् ।

वशयेदपि त्रैलोक्यं मारयेदखिलान् रिपून् ॥ १४२॥

उच्चाटयेच्च गीर्वाणं शमयेच्च धनञ्जयम् ।

वन्ध्या पुत्रं लभेच्छीघ्रं निर्धनो धनमाप्नुयात् ॥ १४३॥

त्रिवारं यः पठेद्रात्रौ गणेशस्य पुरः शिवे ।

नग्नः शक्तियुतो देवि भुक्त्वा भोगान्यथेप्सितान् ॥ १४४॥

प्रत्यक्षवरदं पश्येद्गणेशं साधकोत्तमः ।

य इदं पठते नाम्नां सहस्रं भक्तिपूर्वकम् ॥ १४५॥

तस्य वित्तादिविभवोदारायुः सम्पदः सदा ।

रणे राजमये द्यूते पठेन्नामसहस्रकम् ॥ १४६॥

सर्वत्र जयमाप्नोति गणेशस्य प्रसादतः ॥ १४७॥

इतीदं पुण्यसर्वस्वं मन्त्रनामसहस्रकम् ।

महागणपतेः पुण्यं गोपनीयं स्वयोनिवत् ॥ १४७॥

॥ इति श्रीरुद्रयामलतन्त्रे

श्रीमदुच्छिष्टगणेशसहस्रनामस्तोत्रं सम्पूर्णम् ॥

★★★★★★★★★★★★★★★

॥ उच्छिष्टगणेशकवचम् ॥

अथ श्रीउच्छिष्टगणेशकवचम् प्रारम्भः

देव्युवाच ॥

देवदेव जगन्नाथ सृष्टिस्थितिलयात्मक । विना ध्यानं विना मन्त्रं  विना होमं विना जपम् ॥ १॥

येन स्मरणमात्रेण लभ्यते चाशु चिन्तितम् । तदेव श्रोतुमिच्छामि कथयस्व जगत्प्रभो ॥ २॥

ईश्वर उवाच ॥

श्रुणु देवी प्रवक्ष्यामि गुह्याद्गुह्तरं महत् । उच्छिष्टगणनाथस्य कवचं सर्वसिद्धिदम् ॥ ३॥

अल्पायासैर्विना कष्टैर्जपमात्रेण सिद्धिदम् । एकान्ते निर्जनेऽरण्ये गह्वरे च रणाङ्गणे ॥  ४॥

सिन्धुतिरे च गङ्गायाः कूले वृक्षतले जले । सर्वदेवालये तीर्थे लब्ध्वा सम्यग् जपं चरेत् ॥ ५॥

स्नानशौचादिकं नास्ति नास्ति निर्बंधनं प्रिये । दारिद्र्यान्तकरं शीघ्रं सर्वतत्त्वं जनप्रिये ॥ ६॥ सहस्रशपथं कृत्वा यदि स्नेहोऽस्ति मां प्रति । निन्दकाय कुशिष्याय खलाय कुटिलाय च ॥ ७॥ दुष्टाय परशिष्याय घातकाय शठाय च । वञ्चकाय वरघ्नाय ब्राह्मणीगमनाय च ॥ ८॥

अशक्ताय च क्रूराय गुरूद्रोहरताय च । न दातव्यं न दातव्यं न दातव्यं कदाचन ॥ ९॥

गुरूभक्ताय दातव्यं सच्छिष्याय विशेषतः । तेषां सिध्यन्ति शीघ्रेण ह्यन्यथा न च सिध्यति ॥ १०॥ गुरूसन्तुष्टिमात्रेण कलौ प्रत्यक्षसिद्धिदम् । देहोच्छिष्टैः प्रजप्तव्यं तथोच्छिष्टैर्महामनुः ॥ ११॥

आकाशे च फलं प्राप्तं नान्यथा वचनं मम । एषा राजवती विद्या विना पुण्यं न लभ्यते ॥ १२॥

अथ वक्ष्यामि देवेशि कवचं मन्त्रपूर्वकम् । येन विज्ञातमात्रेण राजभोगफलप्रदम् ॥ १३॥

ऋषिर्मे गणकः पातु शिरसि च निरन्तरम् । त्राहि मां देवि गायत्रीछन्दो ऋषिः सदा मुखे ॥ १४॥

हृदये पातु मां नित्यमुच्छिष्टगणदेवता । गुह्ये रक्षतु तद्बीजं स्वाहा शक्तिश्च पादयोः ॥ १५॥

कामकीलकसर्वाङ्गे विनियोगश्च सर्वदा । पार्श्वद्वये सदा पातु स्वशक्तिं गणनायकः ॥ १६॥

शिखायां पातु तद्बीजं भ्रूमध्ये तारबीजकम् । हस्तिवक्त्रश्च शिरसी लम्बोदरो ललाटके ॥ १७॥

उच्छिष्टो नेत्रयोः पातु कर्णौ पातु महात्मने । पाशाङ्कुशमहाबीजं नासिकायां च रक्षतु ॥ १८॥

भूतीश्वरः परः पातु आस्यं जिह्वां स्वयंवपुः । तद्बीजं पातु मां नित्यं ग्रीवायां कण्ठदेशके ॥ १९॥

गम्बीजं च तथा रक्षेत्तथा त्वग्रे च पृष्टके । सर्वकामश्च हृत् पातु पातु मां च करद्वये ॥ २०॥

उच्छिष्टाय च हृदये वह्निबीजं तथोदरे । मायाबीजं तथा कट्यां द्वैआ ऊरू सिद्धिदायकः ॥ २१॥

जङ्घायां गणनाथश्च पादौ पातु विनायकः । शिरसः पादपर्यन्तमुच्छिष्ठगणनायकः ॥ २२॥

आपादमस्तकान्तं च उमापुत्रश्च पातु माम् । दिशोऽष्टौ च तथाकाशे पाताले विदिशाष्टके ॥ २३॥

अहर्निशं च मां पातु मदचञ्चललोचनः । जलेऽनले च सङ्ग्रामे दुष्टकारागृहे वने ॥ २४॥

राजद्वारे घोरपथे मातु मां गणनायकः । इदं तु कवचं गुह्यं मम वक्त्राद्विनिर्गतम्  ॥ २५॥

त्रैलौक्ये सततं पातु द्विभुजश्च चतुर्भूजः । वाह्यमाभ्यन्तरं पातु सिद्धिबुद्धिर्विनायकः ॥ २६॥

सर्वसिद्धि प्रदं देवि कवचमृद्धिसिद्धिदम् । एकान्ते प्रजपेन्मन्त्रं कवचं युक्तिसंयुतम् ॥ २७॥

इदं रहस्यं कवचमुच्छिष्टगणनायकम् । सर्ववर्मसु देवेशि इदं कवचनायकम् ॥ २८॥

एतत् कवचंमहात्म्यं वर्णितुं नैव शक्यते । धर्मार्थकाममोक्षं च नानाफलप्रदं नृणाम् ॥ २९॥

शिवपुत्रः सदा पातु पातु मां सुरार्चितः । गजाननः सदा पातु गणराजश्च पातु माम् ॥ ३०॥

सदा शक्तिरतः पातु पातु मां कामविह्वलः । सर्वाभरणभूषाढयः पातु मां सिन्दूरार्चितः ॥ ३१॥

पञ्चमोदकरः पातु पातु मां पार्वतीसुतः। पाशाङ्कुशधरः पातु पातु मां च धनेश्वरः ॥ ३२॥

गदाधरः सदा पातु पातु मां काममोहितः । नग्ननारीरतः पातु पातु मां च गणेश्वरः ॥ ३३॥

अक्षयं वरदः पातु शक्तियुक्तिः सदाऽवतु । भालचन्द्रः सदा पातु नानारत्नविभूषितः ॥ ३४॥

उच्छिष्टगणनाथश्च मदाघूर्णितलोचनः । नारीयोनिरसास्वादः पातु मां गजकर्णकः ॥ ३५॥

प्रसन्नवदनः पातु पातु मां भगवल्लभः । जटाधरः सदा पातु पातु मां च किरीटिकः ॥ ३६॥

पद्मासनास्थितः पातु रक्तवर्णश्च पातु माम् । नग्नसाममदोन्मत्तः पातु मां गणदैवतः ॥ ३७॥

वामाङ्गे सुन्दरीयुक्तः पातु मां मन्मथप्रभुः । क्षेत्रपः पिशितं पातु पातु मां श्रुतिपाठकः ॥ ३८॥

भूषणाढ्यस्तु मां पातु नानाभोगसमन्वितः । स्मिताननः सदा पातु श्रीगणेशकुलान्वितः ॥ ३९॥

श्रीरक्तचन्दनमयः सुलक्षणगणेश्वरः । श्वेतार्कगणनाथश्च हरिद्रागणनायकः ॥ ४०॥

पारभद्रगणेशश्च पातु सप्तगणेश्वरः । प्रवालकगणाध्यक्षो गजदन्तो गणेश्वरः ॥ ४१॥

हरबीजगणेशश्च भद्राक्षगणनायकः । दिव्यौषधिसमुद्भूतो गणेशाश्चिन्तितप्रदः ॥ ४२॥

लवणस्य गणाध्यक्षो मृत्तिकागणनायकः । तण्डुलाक्षगणाध्यक्षो गोमयश्च गणेश्वरः ॥ ४३॥

स्फटिकाक्षगणाध्यक्षो रूद्राक्षगणदैवतः । नवरत्नगणेशश्च आदिदेवो गणेश्वरः ॥ ४४॥

पञ्चाननश्चतुर्वक्त्रः षडाननगणेश्वरः । मयूरवाहनः पातु पातु मां मूषकासनः ॥ ४५॥

पातु मां देवदेवेशः पातु मामृषिपूजितः । पातु मां सर्वदा देवो देवदानवपूजितः ॥ ४६॥

त्रैलोक्यपूजितो देवः पातु मां च विभुः प्रभुः । रङ्गस्थं च सदा पातु सागरस्थं सदाऽवतु ॥ ४७॥

भूमिस्थं च सदा पातु पातलस्थं च पातु माम् । अन्तरिक्षे सदा पातु आकाशस्थं सदाऽवतु ॥ ४८॥

चतुष्पथे सदा पातु त्रिपथस्थं च पातु माम् । बिल्वस्थं च वनस्थं च पातु मां सर्वतस्तनम् ॥ ४९॥ राजद्वारस्थितं पातु पातु मां शीघ्रसिद्धिदः। भवानीपूजितः पातु ब्रह्माविष्णुशिवार्चितः ॥ ५०॥

इदं तु कवचं देवि पठनात्सर्वसिद्धिदम् । उच्छिष्ठगणनाथस्य समन्त्रं कवचं परम् ॥ ५१॥

स्मरणाद्भूभुजत्वं च लभते साङ्गतां ध्रूवम् । वाचः सिद्धिकरं शीघ्रं परसैन्यविदारणम् ॥ ५२॥

प्रातर्मध्याह्नसायाह्ने दिवा रात्रौ पठेन्नरः। चतुर्थ्यां दिवसे रात्रौ पूजने मानदायकम् ॥ ५३॥

सर्वसौभाग्यदं शीघ्रं दारिद्र्यार्णवघातकम् । सुदारसुप्रजासौख्यं सर्वसिद्धिकरं नृणाम् ॥ ५४॥

जलेऽथवाऽनलेऽरण्ये सिन्धुतीरे सरित्तटे। स्मशाने दूरदेशे च रणे पर्वतगह्वरे ॥ ५५॥

राजद्वारे भये घोरे निर्भयो जायते ध्रुवम् । सागरे च महाशीते दुर्भिक्षे दुष्टसङ्कटे ॥ ५६॥

भूतप्रेतपिशाचादियक्षराक्षसजे भये । राक्षसीयक्षिणीक्रूराशाकिनीडाकीनीगणाः ॥ ५७॥

राजमृत्युहरं देवि कवचं कामधेनुवत् । अनन्तफलदं देवि सति मोक्षं च पार्वति ॥ ५८॥

कवचेन विना मन्त्रं यो जपेद्गणनायकम् । इह जन्मानि पापिष्ठो जन्मान्ते मूषको भवेत् ॥ ५९॥

इति परमरहस्यं देवदेवार्चनं च

कवचपरमदिव्यं पार्वती पुत्ररूपम् । पठति  परमभोगैश्वर्यमोक्षप्रदं च

लभति सकलसौख्यं शक्तिपुत्रप्रसादात् ॥ ६०॥

॥ इति श्रीरूद्रयामलतन्त्रे उमामहेश्वरसंवादे

उच्छिष्ठगणेशकवचं समाप्तम् ॥॥

**************************

॥ उच्छिष्टगणेशस्तवराजः ॥

श्री गणेशाय नमः ।

देव्युवाच ।

पूजान्ते ह्यनया स्तुत्या स्तुवीत गणनायकम् ।

नमामि देवं सकलार्थदं तं सुवर्णवर्णं भुजगोपवीतम् ।

गजाननं भास्करमेकदन्तं लम्बोदरं वारिभवासनं च ॥ १॥

केयुरिणं हारकिरीटजुष्टं चतुर्भुजं पाशवराभयानि ।

सृणिं च हस्तं गणपं त्रिनेत्रं सचामरस्त्रीयुगलेन युक्तम् ॥ २॥

षडक्षरात्मानमनल्पभूषं मुनीश्वरैर्भार्गवपूर्वकैश्च ।

संसेवितं देवमनाथकल्पं रूपं मनोज्ञं शरणं प्रपद्ये ॥ ३॥

वेदान्तवेद्यं जगतामधीशं देवादिवन्द्यं सुकृतैकगम्यम् ।

स्तम्बेरमास्यं ननु चन्द्रचूडं विनायकं तं शरणं प्रपद्ये ॥ ४॥

भवाख्यदावानलदह्यमानं भक्तं स्वकीयं परिषिञ्चते यः ।

गण्डस्रुताम्भोभिरनन्यतुल्यं वन्दे गणेशं च तमोऽरिनेत्रम् ॥ ५॥

शिवस्य मौलाववलोक्य चन्द्रं सुशुण्डया मुग्धतया स्वकीयम् ।

भग्नं विषाणं परिभाव्य चित्ते आकृष्टचन्द्रो गणपोऽवतान्नः ॥ ६॥

पितुर्जटाजूटतटे सदैव भागीरथी तत्र कुतूहलेन ।

विहर्तुकामः स महीध्रपुत्र्या निवारितः पातु सदा गजास्यः ॥ ७॥

लम्बोदरो देवकुमारसङ्घै क्रीडन्कुमारं जितवान्निजेन ।

करेण चोत्तोल्य ननर्त रम्यं दन्तावलास्यो भयतः स पायात् ॥ ८॥

आगत्य योच्चैर्हरिनाभिपद्मं ददर्श तत्राशु करेण तच्च ।

उद्धर्तुमिच्छन्विधिवादवाक्यं मुमोच भूत्वा चतुरो गणेशः ॥ ९॥

निरन्तरं संकृतदानपट्टे लग्नां तु गुञ्जद्भ्रमरावलीं वै ।

तं श्रोत्रतालैरपसारयन्तं स्मरेद्गजास्यं निजहृत्सरोजे ॥ १०॥

विश्वेशमौलिस्थितजह्नुकन्याजलं गृहीत्वा निजपुष्करेण ।

हरं सलीलं पितरं स्वकीयं प्रपूजयन्हस्तिमुखः स पायात् ॥ ११॥

स्तम्बेरमास्यं घुसृणाङ्गरागं सिन्दूरपूरारुणकान्तकुम्भम् ।

कुचन्दनाश्लिष्टकरं गणेशं ध्यायेत्स्वचित्ते सकलेष्टदं तम् ॥ १२॥

स भीष्ममातुर्निजपुष्करेण जलं समादाय कुचौ स्वमातुः ।

प्रक्षालयामास षडास्यपीतौ स्वार्थं मुदेऽसौ कलभाननोऽस्तु ॥ १३॥

सिञ्चाम नागं शिशुभावमाप्तं केनापि सत्कारणतो धरित्र्याम् ।

वक्तारमाद्यं नियमादिकानां लोकैकवन्द्यं प्रणमामि विघ्नम् ॥ १४॥

आलिङ्गितं चारुरुचा मृगाक्ष्या सम्भोगलोलं मदविह्वलाङ्गम् ।

विघ्नौघविध्वंसनसक्तमेकं नमामि कान्तं द्विरदाननं तम् ॥ १५॥

हेरम्ब उद्यद्रविकोटिकान्तः पञ्चाननेनापि विचुम्बितास्यः ।

मुनीन्सुरान्भक्तजनांश्च सर्वान्स पातु रथ्यासु सदा गजास्यः ॥ १६॥

द्वैपायनोक्तानि स निश्चयेन स्वदन्तकोट्या निखिलं लिखित्वा ।

दन्तं पुराणं शुभमिन्दुमौलिस्तपोभिरुग्रं मनसा स्मरामि ॥ १७॥

क्रीडातटान्ते जलधाविभास्ये वेलाजले लम्बपतिः प्रभीतः ।

विचिन्त्य कस्येति सुरास्तदा तं विश्वेश्वरं वाग्भिरभिष्टुवन्ति ॥ १८॥

वाचां निमित्तं स निमित्तमाद्यं पदं त्रिलोक्यामददत्स्तुतीनाम् ।

सर्वैश्च वन्द्यं न च तस्य वन्द्यः स्थाणोः परं रूपमसौ स पायात् ॥ १९॥

इमां स्तुतिं यः पठतीह भक्त्या समाहितप्रीतिरतीव शुद्धः ।

संसेव्यते चेन्दिरया नितान्तं दारिद्र्यसङ्घं स विदारयेन्नः ॥ २०॥

॥ इति श्रीरुद्रयामलतन्त्रे हरगौरीसंवादे

उच्छिष्टगणेशस्तोत्रं समाप्तम् ॥

******************************

॥ श्रीउच्छिष्टमहागणपति ध्यानम् ॥

मूलाधारे सुयोन्याख्ये चिदग्निवरमण्डले ।

समासीनं पराशक्तिविग्रहं गणनायकम् ॥ १॥

रक्तोत्पलसमप्रख्यं नीलमेघसमप्रभम् ।

रत्नप्रभालसद्दीप्तमुकुटाञ्चितमस्तकम् ॥ २॥

करुणारससुधाधारास्रवदक्षित्रयान्वितम् ।

अक्षिकुक्षिमहावक्षः गण्डशूकादिभूषणम् ॥ ३॥

पाशाङ्कुशेक्षुकोदण्डपञ्चबाणलसत्करम् ।

नीलकान्तिघनीभूतनीलवाणीसुपार्श्वकम् ॥ ४॥

सुत्रिकोणाख्यनीलाङ्गरसास्वादनतत्परम् ।

पत्न्यालिङ्गतवामाङ्गं सप्तमातृनिषेवितम् ॥ ५॥

ब्रह्मविष्णुमहेन्द्रादिसम्प्रपूजितपादुकम् ।

महद्द्वयपदोवाच्यपादुकामन्त्रसारकम् ॥ ६॥

नवावरणयज्ञाख्य वरिवस्याविधिप्रियम् ।

पञ्चावरणयज्ञाख्य विधिसम्पूज्यपादुकम् ॥ ७॥

अखण्डकोटिब्रह्माण्डामण्डलेश्वरमव्ययम् ।

रदनाक्षरसम्पूर्णमन्त्रराजस्वरूपिणम् ॥ ८॥

गिरिव्याहृतिवर्णात्ममन्त्रतत्वप्रदर्शकम् ।

अरुणारुणतनुच्छायमहाकामकलात्मकम् ॥ ९॥

महागोप्यमहाविद्या प्रकाशितकलेबरम् ।

चिच्छिवं चिद्भवं शान्तं त्रिगुणादिविवर्जितम् ॥ १०॥

अष्टोत्तरशताभिख्यकलान्यासविधिप्रियम् ।

चिदाकारमहाद्वीपमध्यवाससुविग्रहम् ॥ ११॥

चिदब्धिमथनोत्पन्नचित्सारघनविग्रहम् ।

वाचामगोचरं शान्तं शुद्धचैतन्यरूपिणम् ॥ १२॥

मूलकन्दस्थचिद्देशनवताण्डवपण्डितम् ।

षडम्बुरुहसंस्थायिपरचिद्व्योमभासुरम् ॥ १३॥

अकारादिक्षकारान्तवर्णलक्षितचित्सुखम् ।

अकाराक्षरनिर्दिष्टप्रकाशमयविग्रहम् ॥ १४॥

हकाराख्यविमर्शात्मप्रभादीप्तजगत्त्रयम् ।

महाहंसजपध्यानविधिज्ञातस्वरूपकम् ॥ १५॥

सदोदितमहाप्रज्ञाकारं संसारतारकम् ।

मोक्षलक्ष्मीप्रदातारं कालातीतमहाप्रभुम् ॥ १६॥

नामरूपादिसम्भिन्ननित्यपूर्णचिदुत्तमम् ।

प्रत्यग्भूतमहाप्रज्ञागात्रगोचरविग्रहम् ॥ १७॥

महाकुण्डलिनीरूपं षट्चक्रनगरेश्वरम् ।

अप्राकृतमहादिव्यचैतन्यात्मस्वरूपिणम् ॥ १८॥

नादबिन्दुकलातीतं कार्यकारणवर्जितम् ।

षडम्बुरुहचक्रान्तः स्फुरत्सौदामिनीप्रभम् ॥ १९॥

तत्त्वमस्यादिवाक्यार्थपरिबोधनपण्डितम् ।

ब्रह्मादिकीटपर्यन्तव्याप्तसंवित्सुधारसम् ॥ २०॥

इच्छाज्ञानक्रियानन्दसर्वतन्त्र स्वतन्त्रिणम् ।

हृदयग्रन्थिभिद्विद्यादर्शनोत्सुकमानसम् ॥ २१॥

पञ्चकृत्यपरेशानं महात्रैपुरविग्रहम् ।

श्रीचक्रराजमध्यस्थशून्यग्राममहेश्वरम् ॥ २२॥

ब्रह्मविद्यास्वरूपश्रीललितारूपधारिणम् ।

वशिन्याद्यावृतं साध्यं अद्वयानन्दवर्धनम् ॥ २३॥

आदिशङ्कररूपेशदक्षिणामूर्तिपूजितम् ।

असंस्पृष्टमहाप्रज्ञाभिख्याद्वैतस्थितिप्रभम् ॥ २४॥

एवं सञ्चितयेद्देवं उच्छिष्टगणनायकम् ।

नीलतारासमेतं तु सच्चिदानन्दविग्रहम् ॥ २५॥

******************************

॥ ऋणहरगणेशस्तोत्रम् ॥

सिन्दूरवर्णं द्विभुजं गणेशं

लम्बोदरं पद्मदले निविष्टम् ।

ब्रह्मादिदेवैः परिसेव्यमानं

सिद्धैर्युतं तं प्रणमामि देवम् ॥ १॥

सृष्ट्यादौ ब्रह्मणा सम्यक् पूजितः फलसिद्धये ।

सदैव पार्वतीपुत्रः ऋणनाशं करोतु मे ॥ २॥

त्रिपुरस्यवधात् पूर्वं शम्भुना सम्यगर्चितः ।

सदैव पार्वतीपुत्रः ऋणनाशं करोतु मे ॥ ३॥

हिरण्यकशिप्वादीनां वधार्ते विष्णुनार्चितः ।

सदैव पार्वतीपुत्रः ऋणनाशं करोतु मे ॥ ४॥

महिषस्य वधे देव्या गणनाथः प्रपूजितः ।

सदैव पार्वतीपुत्रः ऋणनाशं करोतु मे ॥ ५॥

तारकस्य वधात् पूर्वं कुमारेण प्रपूजितः ।

सदैव पार्वतीपुत्रः ऋणनाशं करोतु मे ॥ ६॥

भास्करेण गणेशो हि पूजितश्च स्वसिद्धये।

सदैव पार्वतीपुत्रः ऋणनाशं करोतु मे ॥ ७॥

शशिना कान्तिवृद्ध्यर्थं पूजितो गणनायकः ।

सदैव पार्वतीपुत्रः ऋणनाशं करोतु मे ॥ ८॥

पालनाय च तपसां विश्वामित्रेण पूजितः ।

सदैव पार्वतीपुत्रः ऋणनाशं करोतु मे ॥ ९॥

इदं त्वृणहरं स्तोत्रं तीव्रदारिद्र्यनाशनम् ।

एकवारं पठेन्नित्यं वर्षमेकं समाहितः ।

दारिद्र्यं दारुणं त्यक्त्वा कुबेरसमतां व्रजेत् ॥ १०॥

॥ इति ऋणहर गणेश स्तोत्रम् ॥

**************************************

॥ एकदंतगणेशस्तोत्रम् ॥

श्रीगणेशाय नमः ।

मदासुरं सुशान्तं वै दृष्ट्वा विष्णुमुखाः सुराः ।

भृग्वादयश्च मुनय एकदन्तं समाययुः ॥ १॥

प्रणम्य तं प्रपूज्यादौ पुनस्तं नेमुरादरात् ।

तुष्टुवुर्हर्षसंयुक्ता एकदन्तं गणेश्वरम् ॥ २॥

देवर्षय ऊचुः

सदात्मरूपं सकलादि-भूतममायिनं सोऽहमचिन्त्यबोधम् ।

अनादि-मध्यान्त-विहीनमेकं तमेकदन्तं शरणं व्रजामः ॥ ३॥

अनन्त-चिद्रूप-मयं गणेशं ह्यभेद-भेदादि-विहीनमाद्यम् ।

हृदि प्रकाशस्य धरं स्वधीस्थं तमेकदन्तं शरणं व्रजामः ॥ ४॥

विश्वादिभूतं हृदि योगिनां वै प्रत्यक्षरूपेण विभान्तमेकम् ।

सदा निरालम्ब-समाधिगम्यं तमेकदन्तं शरणं व्रजामः ॥ ५॥

स्वबिम्बभावेन विलासयुक्तं बिन्दुस्वरूपा रचिता स्वमाया ।

तस्यां स्ववीर्यं प्रददाति यो वै तमेकदन्तं शरणं व्रजामः ॥ ६॥

त्वदीय-वीर्येण समर्थभूता माया तया संरचितं च विश्वम् ।

नादात्मकं ह्यात्मतया प्रतीतं तमेकदन्तं शरणं व्रजामः ॥ ७॥

त्वदीय-सत्ताधरमेकदन्तं गणेशमेकं त्रयबोधितारम् ।

सेवन्त आपुस्तमजं त्रिसंस्थास्तमेकदन्तं शरणं व्रजामः ॥ ८॥

ततस्त्वया प्रेरित एव नादस्तेनेदमेवं रचितं जगद्वै ।

आनन्दरूपं समभावसंस्थं तमेकदन्तं शरणं व्रजामः ॥ ९॥

तदेव विश्वं कृपया तवैव सम्भूतमाद्यं तमसा विभातम् ।

अनेकरूपं ह्यजमेकभूतं तमेकदन्तं शरणं व्रजामः ॥ १०॥

ततस्त्वया प्रेरितमेव तेन सृष्टं सुसूक्ष्मं जगदेकसंस्थम् ।

सत्त्वात्मकं श्वेतमनन्तमाद्यं तमेकदन्तं शरणं व्रजामः ॥ ११॥

तदेव स्वप्नं तपसा गणेशं संसिद्धिरूपं विविधं वभूव ।

सदेकरूपं कृपया तवाऽपि तमेकदन्तं शरणं व्रजामः ॥ १२॥

सम्प्रेरितं तच्च त्वया हृदिस्थं तथा सुसृष्टं जगदंशरूपम् ।

तेनैव जाग्रन्मयमप्रमेयं तमेकदन्तं शरणं व्रजामः ॥ १३॥

जाग्रत्स्वरूपं रजसा विभातं विलोकितं तत्कृपया यदैव ।

तदा विभिन्नं भवदेकरूपं तमेकदन्तं शरणं व्रजामः ॥ १४॥

एवं च सृष्ट्वा प्रकृतिस्वभावात्तदन्तरे त्वं च विभासि नित्यम् ।

बुद्धिप्रदाता गणनाथ एकस्तमेकदन्तं शरणं व्रजामः ॥ १५॥

त्वदाज्ञया भान्ति ग्रहाश्च सर्वे नक्षत्ररूपाणि विभान्ति खे वै ।

आधारहीनानि त्वया धृतानि तमेकदन्तं शरणं व्रजामः ॥ १६॥

त्वदाज्ञया सृष्टिकरो विधाता त्वदाज्ञया पालक एव विष्णुः ।

त्वदाज्ञया संहरको हरोऽपि तमेकदन्तं शरणं व्रजामः ॥ १७॥

यदाज्ञया भूर्जलमध्यसंस्था यदाज्ञयाऽपः प्रवहन्ति नद्यः ।

सीमां सदा रक्षति वै समुद्रस्तमेकदन्तं शरणं व्रजामः ॥ १८॥

यदाज्ञया देवगणो दिविस्थो ददाति वै कर्मफलानि नित्यम् ।

यदाज्ञया शैलगणोऽचलो वै तमेकदन्तं शरणं व्रजामः ॥ १९॥

यदाज्ञया शेष इलाधरो वै यदाज्ञया मोहप्रदश्च कामः ।

यदाज्ञया कालधरोऽर्यमा च तमेकदन्तं शरणं व्रजामः ॥ २०॥

यदाज्ञया वाति विभाति वायुर्यदाज्ञयाऽग्निर्जठरादिसंस्थः ।

यदाज्ञया वै सचराऽचरं च तमेकदन्तं शरणं व्रजामः ॥ २१॥

सर्वान्तरे संस्थितमेकगूढं यदाज्ञया सर्वमिदं विभाति ।

अनन्तरूपं हृदि बोधकं वै तमेकदन्तं शरणं व्रजामः ॥ २२॥

यं योगिनो योगबलेन साध्यं कुर्वन्ति तं कः स्तवनेन स्तौति ।

अतः प्रणामेन सुसिद्धिदोऽस्तु तमेकदन्तं शरणं व्रजामः ॥ २३॥

गृत्समद उवाच

एवं स्तुत्वा च प्रह्लाद देवाः समुनयश्च वै ।

तूष्णीं भावं प्रपद्यैव ननृतुर्हर्षसंयुताः ॥ २४॥

स तानुवाच प्रीतात्मा ह्येकदन्तः स्तवेन वै ।

जगाद तान् महाभागान् देवर्षीन् भक्तवत्सलः ॥ २५॥

एकदन्त उवाच

प्रसन्नोऽस्मि च स्तोत्रेण सुराः सर्षिगणाः किल ।

वृणुध्वं वरदोऽहं वो दास्यामि मनसीप्सितम् ॥ २६॥

भवत्कृतं मदीयं वै स्तोत्रं प्रीतिप्रदं मम ।

भविष्यति न सन्देहः सर्वसिद्धिप्रदायकम् ॥ २७॥

यं यमिच्छति तं तं वै दास्यामि स्तोत्रपाठतः ।

पुत्र-पौत्रादिकं सर्वं लभते धन-धान्यकम् ॥ २८॥

गजाश्वादिकमत्यन्तं राज्यभोगं लभेद् ध्रुवम् ।

भुक्तिं मुक्तिं च योगं वै लभते शान्तिदायकम् ॥ २९॥

मारणोच्चाटनादीनि राज्यबन्धादिकं च यत् ।

पठतां शृण्वतां नृणां भवेच्च बन्धहीनता ॥ ३०॥

एकविंशतिवारं च श्लोकांश्चैवैकविंशतिम् ।

पठते नित्यमेवं च दिनानि त्वेकविंशतिम् ॥ ३१॥

न तस्य दुर्लभं किंचित् त्रिषु लोकेषु वै भवेत् ।

असाध्यं साधयेन् मर्त्यः सर्वत्र विजयी भवेत् ॥ ३२॥

नित्यं यः पठते स्तोत्रं ब्रह्मभूतः स वै नरः ।

तस्य दर्शनतः सर्वे देवाः पूता भवन्ति वै ॥ ३३॥

एवं तस्य वचः श्रुत्वा प्रहृष्टा देवतर्षयः ।

ऊचुः करपुटाः सर्वे भक्तियुक्ता गजाननम् ॥ ३४॥

॥ इती श्री'एकदन्तस्तोत्रं सम्पूर्णम् ॥

****************************

॥ एकदन्तशरणागतिस्तोत्रम् ॥

श्रीगणेशाय नमः ।

देवर्षय ऊचुः ।

सदात्मरूपं सकलादिभूतममायिनं सोऽहमचिन्त्यबोधम् ।

अनादिमध्यान्तविहीनमेकं तमेकदन्तं शरणं व्रजामः ॥ १॥

अनन्तचिद्रूपमयं गणेशमभेदभेदादिविहीनमाद्यम् ।

हृदि प्रकाशस्य धरं स्वधीस्थं तमेकदन्तं शरणं व्रजामः ॥ २॥

समाधिसंस्थं हृदि योगिनां यं प्रकाशरूपेण विभातमेतम् ।

सदा निरालम्बसमाधिगम्यं तमेकदन्तं शरणं व्रजामः ॥ ३॥

स्वबिम्बभावेन विलासयुक्तां प्रत्यक्षमायां विविधस्वरूपाम् ।

स्ववीर्यकं तत्र ददाति यो वै तमेकदन्तं शरणं व्रजामः ॥ ४॥

त्वदीयवीर्येण समर्थभूतस्वमायया संरचितं च विश्वम् ।

तुरीयकं ह्यात्मप्रतीतिसंज्ञं तमेकदन्तं शरणं व्रजामः ॥ ५॥

स्वदीयसत्ताधरमेकदन्तं गुणेश्वरं यं गुणबोधितारम् ।

भजन्तमत्यन्तमजं त्रिसंस्थं तमेकदन्तं शरणं व्रजामः ॥ ६॥

ततस्वया प्रेरितनादकेन सुषुप्तिसंज्ञं रचितं जगद्वै ।

समानरूपं ह्युभयत्रसंस्थं तमेकदन्तं शरणं व्रजामः ॥ ७॥

तदेव विश्वं कृपया प्रभूतं द्विभावमादौ तमसा विभान्तम् ।

अनेकरूपं च तथैकभूतं तमेकदन्तं शरणं व्रजामः ॥ ८॥

ततस्त्वया प्रेरितकेन सृष्टं बभूव सूक्ष्मं जगदेकसंस्थम् ।

सुसात्विकं स्वप्नमनन्तमाद्यं तमेकदन्तं शरण व्रजामः ॥ ९॥

तदेव स्वप्नं तपसा गणेश सुसिद्धरूपं विविधं बभूव ।

सदैकरूपं कृपया च तेऽद्य तमेकदन्तं शरणं व्रजामः ॥ १०॥

त्वदाज्ञया तेन त्वया हृदिस्थं तथा सुसृष्टं जगदंशरूपम् ।

विभिन्नजाग्रन्मयमप्रमेयं तमेकदन्तं शरणं व्रजामः ॥ ११॥

तदेव जाग्रद्रजसा विभातं विलोकितं त्वत्कृपया स्मृतेन ।

बभूव भिन्नं च सदैकरूपं तमेकदन्तं शरणं व्रजामः ॥ १२॥

सदेव सृष्ट्वा प्रकृतिस्वभावात्तदन्तरे त्वं च विभासि नित्यम् ।

धियः प्रदाता गणनाथ एकस्तमेकदन्तं शरणं व्रजामः ॥ १३॥

त्वदाज्ञया भान्ति ग्रहाश्च सर्वे प्रकाशरूपाणि विभान्ति खे वै ॥

भ्रमन्ति नित्यं स्वविहारकार्यास्तमेकदन्तं शरणं व्रजामः ॥ १४॥

त्वदाज्ञया सृष्टिकरो विधाता त्वदाज्ञया पालक एव विष्णुः ।

त्वदाज्ञया संहरको हरोऽपि तमेकदन्तं शरणं व्रजामः ॥ १५॥

यदाज्ञया भूमिजलेऽत्र संस्थे यदाज्ञयापः प्रवहन्ति नद्यः ।

स्वतीर्थसंस्थश्च कृतः समुद्रस्तमेकदन्तं शरणं व्रजामः॥ १६॥

यदाज्ञया देवगणा दिविस्था ददन्ति वै कर्मफलानि नित्यम् ।

यदाज्ञया शैलगणाः स्थिरा वै तमेकदन्तं शरणं व्रजामः ॥ १७॥

यदाज्ञया शेषधराधरो वै यदाज्ञया मोहप्रदश्च कामः ।

यदाज्ञया कालधरोऽर्यमा च तमेकदन्तं शरणं व्रजामः ॥ १८॥

यदाज्ञया वाति विभाति वायुर्यदाज्ञयाग्निर्जठरादिसंस्थः ।

यदाज्ञयेदं सचराचरं च तमेकदन्तं शरणं व्रजामः ॥ १९॥

यदन्तरे संस्थितमेकदन्तस्तदाज्ञया सर्वमिदं विभाति ।

अनन्तरूपं हृदि बोधकं यस्तमेकदन्तं शरणं व्रजामः ॥ २०॥

सुयोगिनो योगबलेन साध्यं प्रकुर्वते कः स्तवनेन स्तौति ।

अतः प्रणामेन सुसिद्धिदोऽस्तु तमेकदन्तं शरणं व्रजामः ॥ २१॥

गृत्समद उवाच ।

एवं स्तुत्वा गणेशानं देवाः समुनयः प्रभुम् ॥

तूष्णीम्भावं प्रपद्यैव ननृतुर्हर्षसंयुताः ॥ २२॥

स तानुवाच प्रीतात्मा देवर्षीणां स्तवेन वै ॥

एकदन्तो महाभागो देवर्षीन् भक्तवत्सलः ॥ २३॥

एकदन्त उवाच ।

स्तोत्रेणाऽहं प्रसन्नोऽस्मि सुराः सर्षिगणाः किल ।

वरदं भो वृणुत वो दास्यामि मनसीप्सितम् ॥ २४॥

भवत्कृतं मदीयं यत्स्तोत्रं प्रीतिप्रदं च तत् ।

भविष्यति न सन्देहः सर्वसिद्धिप्रदायकम् ॥ २५॥

यं यमिच्छति तं तं वै दास्यामि स्तोत्रपाठतः ।

पुत्रपौत्रादिकं सर्वं कलत्रं धनधान्यकम् ॥ २६ ।

गजाश्वादिकमत्यन्तं राज्यभोगादिकं ध्रुवम् ।

भुक्तिं मुक्तिं च योगं वै लभते शान्तिदायकम् ॥ २७॥

मारणोच्चाटनादीनि राज्यबन्धादिकं च यत् ।

पठतां श्रृण्वतां नृणां भवेच्च बन्धहीनताम् ॥ २८॥

एकविंशतिवारं यः श्लोकानेवैकविंशतीन् ।

पठेच्च हृदि मां स्मृत्वा दिनानि त्वेकविंशतिः ॥ २९॥

न तस्य दुर्लभं किञ्चित्त्रिषु लोकेषु वै भवेत् ।

असाध्यं साधयेन्मर्त्यः सर्वत्र विजयी भवेत् ॥ ३०॥

नित्यं यः पठति स्तोत्रं ब्रह्मभूतः स वै नरः ।

तस्य दर्शनतः सर्वे देवाः पूता भवन्ति च ॥ ३१॥

इति श्रीमुद्गलपुराणे एकदन्तशरणागतिस्तोत्रं सम्पूर्णम् ।

********************************

॥ एकाक्षरगणपतिकवचम् ॥

त्रैलोक्यमोहनकवचम् ।

श्रीगणेशाय नमः ।

नमस्तस्मै गणेशाय सर्वविघ्नविनाशिने ।

कार्यारम्भेषु सर्वेषु पूजितो यः सुरैरपि ॥ १॥

पार्वत्युवाच ।

भगवन् देवदेवेश लोकानुग्रहकारकः ।

इदानी श्रोतृमिच्छामि कवचं यत्प्रकाशितम् ॥ २॥

एकाक्षरस्य मन्त्रस्य त्वया प्रीतेन चेतसा ।

वदैतद्विधिवद्देव यदि ते वल्लभास्म्यहम् ॥ ३॥

ईश्वर उवाच ।

श्रृणु देवि प्रवक्ष्यामि नाख्येयमपि ते ध्रुवम् ।

एकाक्षरस्य मन्त्रस्य कवचं सर्वकामदम् ॥ ४॥

यस्य स्मरणमात्रेण न विघ्नाः प्रभवन्ति हि ।

त्रिकालमेककालं वा ये पठन्ति सदा नराः ॥ ५॥

तेषां क्वापि भयं नास्ति सङ्ग्रामे सङ्कटे गिरौ ।

भूतवेतालरक्षोभिर्ग्रहैश्चापि न बाध्यते ॥ ६॥

इदं कवचमज्ञात्वा यो जपेद् गणनायकम् ।

न च सिद्धिमाप्नोति मूढो वर्षशतैरपि ॥ ७॥

अघोरो मे यथा मन्त्रो मन्त्राणामुत्तमोत्तमः ।

तथेदं कवचं देवि दुर्लभं भुवि मानवैः ॥ ८॥

गोपनीयं प्रयत्नेन नाज्येयं यस्य कस्यचित् ।

तव प्रीत्या महेशानि कवचं कथ्यतेऽद्भुतम् ॥ ९॥

एकाक्षरस्य मन्त्रस्य गणकश्चर्षिरीरितः ।

त्रिष्टुप् छन्दस्तु विघ्नेशो देवता परिकीर्तिता ॥ १०॥

गँ बीजं शक्तिरोङ्कारः सर्वकामार्थसिद्धये ।

सर्वविघ्नविनाशाय विनियोगस्तु कीर्तितः ॥ ११॥

ध्यानम् ।

रक्ताम्भोजस्वरूपं लसदरुणसरोजाधिरूढं त्रिनेत्रं पाशं

चैवाङ्कुशं वा वरदमभयदं बाहुभिर्धारयन्तम् ।

शक्त्या युक्तं गजास्यं पृथुतरजठरं नागयज्ञोपवीतं देवं

चन्द्रार्धचूडं सकलभयहरं विघ्नराजं नमामि ॥ १२॥

कवचम् ।

गणेशो मे शिरः पातु भालं पातु गजाननः ।

नेत्रे गणपतिः पातु गजकर्णः श्रुती मम ॥ १३॥

कपोलौ गणनाथस्तु घ्राणं गन्धर्वपूजितः ।

मुखं मे सुमुखः पातु चिबुकं गिरिजासुतः ॥ १४॥

जिह्वां पातु गणक्रीडो दन्तान् रक्षतु दुर्मुखः ।

वाचं विनायकः पातु कष्टं पातु महोत्कटः ॥ १५॥

स्कन्धौ पातु गजस्कन्धो बाहू मे विघ्ननाशनः ।

हस्तौ रक्षतु हेरम्बो वक्षः पातु महाबलः ॥ १६॥

हृदयं मे गणपतिरुदरं मे महोदरः ।

नाभि गम्भीरहृदयः पृष्ठं पातु सुरप्रियः ॥ १७॥

कटिं मे विकटः पातु गुह्यं मे गुहपूजितः ।

ऊरु मे पातु कौमारं जानुनी च गणाधिपः ॥ १८॥

जङ्घे गजप्रदः पातु गुल्फौ मे धूर्जटिप्रियः ।

चरणौ दुर्जयः पातुर्साङ्गं गणनायकः ॥ १९॥

आमोदो मेऽग्रतः पातु प्रमोदः पातु पृष्ठतः ।

दक्षिणे पातु सिद्धिशो वामे विघ्नधरार्चितः ॥ २०॥

प्राच्यां रक्षतु मां नित्यं चिन्तामणिविनायकः ।

आग्नेयां वक्रतुण्डो मे दक्षिणस्यामुमासुतः ॥ २१॥

नैऋत्यां सर्वविघ्नेशः पातु नित्यं गणेश्वरः ।

प्रतीच्यां सिद्धिदः पातु वायव्यां गजकर्णकः ॥ २२॥

कौबेर्यां सर्वसिद्धिशः ईशान्यामीशनन्दनः ।

ऊर्ध्वं विनायकः पातु अधो मूषकवाहनः ॥ २३॥

दिवा गोक्षीरधवलः पातु नित्यं गजाननः ।

रात्रौ पातु गणक्रीडः सन्ध्योः सुरवन्दितः ॥ २४॥

पाशाङ्कुशाभयकरः सर्वतः पातु मां सदा ।

ग्रहभूतपिशाचेभ्यः पातु नित्यं गजाननः ॥ २५॥

सत्वं रजस्तमो वाचं बुद्धिं ज्ञानं स्मृतिं दयाम् ।

धर्मचतुर्विधं लक्ष्मीं लज्जां कीर्तिं कुलं वपुः ॥ २६॥

धनं धान्यं गृहं दारान् पौत्रान् सखींस्तथा ।

एकदन्तोऽवतु श्रीमान् सर्वतः शङ्करात्मजः ॥ २७॥

सिद्धिदं कीर्तिदं देवि प्रपठेन्नियतः शुचिः ।

एककालं द्विकालं वापि भक्तिमान् ॥ २८॥

न तस्य दुर्लभं किञ्चित् त्रिषु लोकेषु विद्यते ।

सर्वपापविनिर्मुक्तो जायते भुवि मानवः ॥ २९॥

यं यं कामयते नित्यं सुदुर्लभमनोरथम् ।

तं तं प्राप्नोति सकलं षण्मासान्नात्र संशयः ॥ ३०॥

मोहनस्तम्भनाकर्षमारणोच्चाटनं वशम् ।

स्मरणादेव जायन्ते नात्र कार्या विचारणा ॥ ३१॥

सर्वविघ्नहरं देवं ग्रहपीडानिवारणम् ।

सर्वशत्रुक्षयकरं सर्वापत्तिनिवारणम् ॥ ३२॥

धृत्वेदं कवचं देवि यो जपेन्मन्त्रमुत्तमम् ।

न वाच्यते स विघ्नौघैः कदाचिदपि कुत्रचित् ॥ ३३॥

भूर्जे लिखित्वा विधिवद्धारयेद्यो नरः शुचिः ।

एकबाहो शिरः कण्ठे पूजयित्वा गणाधिपम् ॥ ३४॥

एकाक्षरस्य मन्त्रस्य कवचं देवि दुर्लभम् ।

यो धारयेन्महेशानि न विघ्नैरभिभूयते ॥ ३५॥

गणेशहृदयं नाम कवचं सर्वसिद्धिदम् ।

पठेद्वा पाठयेद्वापि तस्य सिद्धिः करे स्थिता ॥ ३६॥

न प्रकाश्यं महेशानि कवचं यत्र कुत्रचित् ।

दातव्यं भक्तियुक्ताय गुरुदेवपराय च ॥ ३७॥

॥ इति श्रीरुद्रयामले एकाक्षरगणपतिकवचं अथवा

त्रैलोक्यमोहनकवचं सम्पूर्णम् ॥

****************************

॥ गकारादि श्रीगणपतिसहस्रनामस्तोत्रम् ॥

अस्य श्रीगणपतिगकारादिसहस्रनाममालामन्त्रस्य ।

दुर्वासा ऋषिः । अनुष्टुप् छन्दः । श्रीगणपतिर्देवता ।

गं बीजम् । स्वाहा शक्तिः । ग्लौं कीलकम् ।

मम सकलाभीष्टसिद्ध्यर्थे जपे विनियोगः ॥

॥ करन्यासः ॥

ॐ अङ्गुष्ठाभ्यां नमः । श्रीं तर्जनीभ्यां नमः ।

ह्रीं मध्यमाभ्यां नमः । क्रीं अनामिकाभ्यां नमः ।

ग्लौं कनिष्ठिकाभ्यां नमः । गं करतलकरपृष्ठाभ्यां नमः ।

एवं हृदयादिन्यासः ।

अथवा षड्दीर्घभाजागमितिबीजेन कराङ्गन्यासः ॥

॥ ध्यानम् ॥

ओङ्कार सन्निभमिभाननमिन्दुभालम् मुक्ताग्रबिन्दुममलद्युतिमेकदन्तम् ।

लम्बोदरं कलचतुर्भुजमादिदेवं ध्यायेन्महागणपतिं मतिसिद्धिकान्तम् ॥

॥ स्तोत्रम् ॥

ॐ गणेश्वरो गणाध्यक्षो गणाराध्यो गणप्रियः ।

गणनाथो गणस्वामी गणेशो गणनायकः ॥ १॥

गणमूर्तिर्गणपतिर्गणत्राता गणञ्जयः ।

गणपोऽथ गणक्रीडो गणदेवो गणाधिपः ॥ २॥

गणज्येष्ठो गणश्रेष्ठो गणप्रेष्ठो गणाधिराट् ।

गणराड् गणगोप्ताथ् गणाङ्गो गणदैवतम् ॥ ३॥

गणबन्धुर्गणसुहृद् गणाधीशो गणप्रथः ।

गणप्रियसखः शश्वद् गणप्रियसुहृत् तथा ॥ ४॥

गणप्रियरतो नित्यं गणप्रीतिविवर्धनः ।

गणमण्डलमध्यस्थो गणकेलिपरायणः ॥ ५॥

गणाग्रणीर्गणेशानो गणगीतो गणोच्छ्रयः ।

गण्यो गणहितो गर्जद्गणसेनो गणोद्धतः ॥ ६॥

गणभीतिप्रमथनो गणभीत्यपहारकः ।

गणनार्हो गणप्रौढो गणभर्ता गणप्रभुः ॥ ७॥

गणसेनो गणचरो गणप्रज्ञो गणैकराट् ।

गणाग्र्यो गणनामा च गणपालनतत्परः ॥ ८॥

गणजिद्गणगर्भस्थो गणप्रवणमानसः ।

गणगर्वपरीहर्ता गणो गणनमस्कृतः ॥ ९॥

गणार्चिताङ्घ्रियुगळो गणरक्षणकृत् सदा ।

गणध्यातो गणगुरुर्गणप्रणयतत्परः ॥ १०॥

गणागणपरित्राता गणाधिहरणोद्धुरः ।

गणसेतुर्गणनुतो गणकेतुर्गणाग्रगः ॥ ११॥

गणहेतुर्गणग्राही गणानुग्रहकारकः ।

गणागणानुग्रहभूर्गणागणवरप्रदः ॥ १२॥

गणस्तुतो गणप्राणो गणसर्वस्वदायकः ।

गणवल्लभमूर्तिश्च गणभूतिर्गणेष्टदः ॥ १३॥

गणसौख्यप्रदाता च गणदुःखप्रणाशनः ।

गणप्रथितनामा च गणाभीष्टकरः सदा ॥ १४॥

गणमान्यो गणख्यातो गणवीतो गणोत्कटः ।

गणपालो गणवरो गणगौरवदायकः ॥ १५॥

गणगर्जितसन्तुष्टो गणस्वच्छन्दगः सदा ।

गणराजो गणश्रीदो गणाभयकरः क्षणात् ॥ १६॥

गणमूर्धाभिषिक्तश्च गणसैन्यपुरस्सरः ।

गुणातीतो गुणमयो गुणत्रयविभागकृत् ॥ १७॥

गुणी गुणाकृतिधरो गुणशाली गुणप्रियः ।

गुणपूर्णो गुणाम्भोधिर्गुणभाग् गुणदूरगः ॥ १८॥

गुणागुणवपुर्गौणशरीरो गुणमण्डितः ।

गुणस्त्रष्टा गुणेशानो गुणेशोऽथ गुणेश्वरः ॥ १९॥

गुणसृष्टजगत्सङ्घो गुणसङ्घो गुणैकराट् ।

गुणप्रवृष्टो गुणभूर्गुणीकृतचराचरः ॥ २०॥

गुणप्रवणसन्तुष्टो गुणहीनपराङ्मुखः ।

गुणैकभूर्गुणश्रेष्ठो गुणज्येष्ठो गुणप्रभुः ॥ २१॥

गुणज्ञो गुणसम्पूज्यो गुणैकसदनं सदा ।

गुणप्रणयवान् गौणप्रकृतिर्गुणभाजनम् ॥ २२॥

गुणिप्रणतपादाब्जो गुणिगीतो गुणोज्ज्वलः ।

गुणवान् गुणसम्पन्नो गुणानन्दितमानसः ॥ २३॥

गुणसञ्चारचतुरो गुणसञ्चयसुन्दरः ।

गुणगौरो गुणाधारो गुणसंवृतचेतनः ॥ २४॥

गुणकृद्गुणभृन्नित्यं गुणाग्र्यो गुणपारदृक् ।

गुणप्रचारी गुणयुग् गुणागुणविवेककृत् ॥ २५॥

गुणाकरो गुणकरो गुणप्रवणवर्धनः ।

गुणगूढचरो गौणसर्वसंसारचेष्टितः ॥ २६॥

गुणदक्षिणसौहार्दो गुणलक्षणतत्त्ववित् ।

गुणहारी गुणकलो गुणसङ्घसखः सदा ॥ २७॥

गुणसंस्कृतसंसारो गुणतत्त्वविवेचकः ।

गुणगर्वधरो गौणसुखदुःखोदयो गुणः ॥ २८॥

गुणाधीशो गुणलयो गुणवीक्षणलालसः ।

गुणगौरवदाता च गुणदाता गुणप्रदः ॥ २९॥

गुणकृद्गुणसम्बन्धो गुणभृद्गुणबन्धनः ।

गुणहृद्यो गुणस्थायी गुणदायी गुणोत्कटः ॥ ३०॥

गुणचक्रधरो गौणावतारो गुणबान्धवः ।

गुणबन्धुर्गुणप्रज्ञो गुणप्राज्ञो गुणालयः ॥ ३१॥

गुणधाता गुणप्राणो गुणगोपो गुणाश्रयः ।

गुणयायी गुणाधायी गुणपो गुणपालकः ॥ ३२॥

गुणाहृततनुर्गौणो गीर्वाणो गुणगौरवः ।

गुणवत्पूजितपदो गुणवत्प्रीतिदायकः ॥ ३३॥

गुणवद्गीतकीर्तिष्च गुणवद्बद्धसौहृदः ।

गुणवद्वरदो नित्यं गुणवत्प्रतिपालकः ॥ ३४॥

गुणवद्गुणसन्तुष्टो गुणवद्रचितस्तवः ।

गुणवद्रक्षणपरो गुणवत्प्रणयप्रियः ॥ ३५॥

गुणवच्चक्रसञ्चारो गुणवत्कीर्तिवर्धनः ।

गुणवद्गुणचित्तस्थो गुणवद्गुणरक्षकः ॥ ३६॥

गुणवत्पोषणकरो गुनवच्छत्रुसूदनः ।

गुणवत्सिद्धिदाता च गुणवद्गौरवप्रदः ॥ ३७॥

गुणवत्प्रवणस्वान्तो गुणवद्गुणभूषणः ।

गुणवत्कुलविद्वेषिविनाषकरणक्षमः ॥ ३८॥

गुणिस्तुतगुणो गर्जप्रलयाम्बुदनिःस्वनः ।

गजो गजपतिर्गर्जद्गजयुद्धविषारदः ॥ ३९॥

गजास्यो गजकर्णोऽथ गजराजो गजाननः ।

गजरूपधरो गर्जद्गजयूथोद्धुरध्वनिः ॥ ४०॥

गजाधीषो गजाधारो गजासुरजयोद्धुरः ।

गजदन्तो गजवरो गजकुम्भो गजध्वनिः ॥ ४१॥

गजमायो गजमयो गजश्रीर्गजगर्जितः ।

गजामयहरो नित्यं गजपुष्टिप्रदायकः ॥ ४२॥

गजोत्पत्तिर्गजत्राता गजहेतुर्गजाधिपः ।

गजमुख्यो गजकुलप्रवरो गजदैत्यहा ॥ ४३॥

गजकेतुर्गजाध्यक्षो गजसेतुर्गजाकृतिः ।

गजवन्द्यो गजप्राणो गजसेव्यो गजप्रभुः ॥ ४४॥

गजमत्तो गजेशानो गजेशो गजपुङ्गवः ।

गजदन्तधरो गुञ्जन्मधुपो गजवेषभृत् ॥ ४५॥

गजच्छन्नो गजाग्रस्थो गजयायी गजाजयः ।

गजराड्गजयूथस्थो गजगञ्जकभञ्जकः ॥ ४६॥

गर्जितोज्झितदैत्यासुर्गर्जितत्रातविष्टपः ।

गानज्ञो गानकुशलो गानतत्त्वविवेचकः ॥ ४७॥

गानश्लाघी गानरसो गानज्ञानपरायणः ।

गानागमज्ञो गानाङ्गो गानप्रवणचेतनः ॥ ४८॥

गानकृद्गानचतुरो गानविद्याविशारदः ।

गानध्येयो गानगम्यो गानध्यानपरायणः ॥ ४९॥

गानभूर्गानशीलश्च गानशाली गतश्रमः ।

गानविज्ञानसम्पन्नो गानश्रवणलालसः ॥ ५०॥

गानयत्तो गानमयो गानप्रणयवान् सदा ।

गानध्याता गानबुद्धिर्गानोत्सुकमनाः पुनः ॥ ५१॥

गानोत्सुको गानभूमिर्गानसीमा गुणोज्ज्वलः ।

गानङ्ज्ञानवान् गानमानवान् गानपेशलः ॥ ५२॥

गानवत्प्रणयो गानसमुद्रो गानभूषणः ।

गानसिन्धुर्गानपरो गानप्राणो गणाश्रयः ॥ ५३॥

गानैकभूर्गानहृष्टो गानचक्षुर्गणैकदृक् ।

गानमत्तो गानरुचिर्गानविद्गानवित्प्रियः ॥ ५४॥

गानान्तरात्मा गानाढ्यो गानभ्राजत्सभः सदा ।

गानमयो गानधरो गानविद्याविशोधकः ॥ ५५॥

गानाहितघ्नो गानेन्द्रो गानलीनो गतिप्रियः ।

गानाधीशो गानलयो गानाधारो गतीश्वरः ॥ ५६॥

गानवन्मानदो गानभूतिर्गानैकभूतिमान् ।

गानतानततो गानतानदानविमोहितः ॥ ५७॥

गुरुर्गुरुदरश्रोणिर्गुरुतत्त्वार्थदर्शनः ।

गुरुस्तुतो गुरुगुणो गुरुमायो गुरुप्रियः ॥ ५८॥

गुरुकीर्तिर्गुरुभुजो गुरुवक्षा गुरुप्रभः ।

गुरुलक्षणसम्पन्नो गुरुद्रोहपराङ्मुखः ॥ ५९॥

गुरुविद्यो गुरुप्राणो गुरुबाहुबलोच्छ्रयः ।

गुरुदैत्यप्राणहरो गुरुदैत्यापहारकः ॥ ६०॥

गुरुगर्वहरो गुह्यप्रवरो गुरुदर्पहा ।

गुरुगौरवदायी च गुरुभीत्यपहारकः ॥ ६१॥

गुरुशुण्डो गुरुस्कन्धो गुरुजङ्घो गुरुप्रथः ।

गुरुभालो गुरुगलो गुरुश्रीर्गुरुगर्वनुत् ॥ ६२॥

गुरूरुगुरुपीनांसो गुरुप्रणयलालसः ।

गुरुमुख्यो गुरुकुलस्थायी गुरुगुणः सदा ॥ ६३॥

गुरुसंशयभेत्ता च गुरुमानप्रदायकः ।

गुरुधर्मसदाराध्यो गुरुधर्मनिकेतनः ॥ ६४॥

गुरुदैत्यकुलच्छेत्ता गुरुसैन्यो गुरुद्युतिः ।

गुरुधर्माग्रगण्योऽथ गुरुधर्मधुरन्धरः ।

गरिष्ठो गुरुसन्तापशमनो गुरुपूजितः ॥ ६५॥

गुरुधर्मधरो गौरधर्माधारो गदापहः ।

गुरुशास्त्रविचारज्ञो गुरुशास्त्रकृतोद्यमः ॥ ६६॥

गुरुशास्त्रार्थनिलयो गुरुशास्त्रालयः सदा ।

गुरुमन्त्रो गुरुशेष्ठो गुरुमन्त्रफलप्रदः ॥ ६७॥

गुरुस्त्रीगमनोद्दामप्रायश्चित्तनिवारकः ।

गुरुसंसारसुखदो गुरुसंसारदुःखभित् ॥ ६८॥

गुरुश्लाघापरो गौरभानुखण्डावतंसभृत् ।

गुरुप्रसन्नमूर्तिश्च गुरुशापविमोचकः ॥ ६९॥

गुरुकान्तिर्गुरुमयो गुरुशासनपालकः ।

गुरुतन्त्रो गुरुप्रज्ञो गुरुभो गुरुदैवतम् ॥ ७०॥

गुरुविक्रमसञ्चारो गुरुदृग्गुरुविक्रमः ।

गुरुक्रमो गुरुप्रेष्ठो गुरुपाखण्डखण्डकः ॥ ७१॥

गुरुगर्जितसम्पूर्णब्रह्माण्डो गुरुगर्जितः ।

गुरुपुत्रप्रियसखो गुरुपुत्रभयापहः ॥ ७२॥

गुरुपुत्रपरित्राता गुरुपुत्रवरप्रदः ।

गुरुपुत्रार्तिशमनो गुरुपुत्राधिनाशनः ॥ ७३॥

गुरुपुत्रप्राणदाता गुरुभक्तिपरायणः ।

गुरुविज्ञानविभवो गौरभानुवरप्रदः ॥ ७४॥

गौरभानुस्तुतो गौरभानुत्रासापहारकः ।

गौरभानुप्रियो गौरभानुर्गौरववर्धनः ॥ ७५॥

गौरभानुपरित्राता गौरभानुसखः सदा ।

गौरभानुर्प्रभुर्गौरभानुभीतिप्रणशनः ॥ ७६॥

गौरीतेजःसमुत्पन्नो गौरीहृदयनन्दनः ।

गौरीस्तनन्धयो गौरीमनोवाञ्छितसिद्धिकृत् ॥ ७७॥

गौरो गौरगुणो गौरप्रकाशो गौरभैरवः ।

गौरीशनन्दनो गौरीप्रियपुत्रो गदाधरः ॥ ७८॥

गौरीवरप्रदो गौरीप्रणयो गौरसच्छविः ।

गौरीगणेश्वरो गौरीप्रवणो गौरभावनः ॥ ७९॥

गौरात्मा गौरकीर्तिश्च गौरभावो गरिष्ठदृक् ।

गौतमो गौतमीनाथो गौतमीप्राणवल्लभः ॥ ८०॥

गौतमाभीष्टवरदो गौतमाभयदायकः ।

गौतमप्रणयप्रह्वो गौतमाश्रमदुःखहा ॥ ८१॥

गौतमीतीरसञ्चारी गौतमीतीर्थनायकः ।

गौतमापत्परिहारो गौतमाधिविनाशनः ॥ ८२॥

गोपतिर्गोधनो गोपो गोपालप्रियदर्शनः ।

गोपालो गोगणाधीशो गोकश्मलनिवर्तकः ॥ ८३॥

गोसहस्रो गोपवरो गोपगोपीसुखावहः ।

गोवर्धनो गोपगोपो गोपो गोकुलवर्धनः ॥ ८४॥

गोचरो गोचराध्यक्षो गोचरप्रीतिवृद्धिकृत् ।

गोमी गोकष्टसन्त्राता गोसन्तापनिवर्तकः ॥ ८५॥

गोष्ठो गोष्ठाश्रयो गोष्ठपतिर्गोधनवर्धनः ।

गोष्ठप्रियो गोष्ठमयो गोष्ठामयनिवर्तकः ॥ ८६॥

गोलोको गोलको गोभृद्गोभर्ता गोसुखावहः ।

गोधुग्गोधुग्गणप्रेष्ठो गोदोग्धा गोमयप्रियः ॥ ८७॥

गोत्रं गोत्रपतिर्गोत्रप्रभुर्गोत्रभयापहः ।

गोत्रवृद्धिकरो गोत्रप्रियो गोत्रार्तिनाशनः ॥ ८८॥

गोत्रोद्धारपरो गोत्रप्रवरो गोत्रदैवतम् ।

गोत्रविख्याततनामा च गोत्री गोत्रप्रपालकः ॥ ८९॥

गोत्रसेतुर्गोत्रकेतुर्गोत्रहेतुर्गतक्लमः ।

गोत्रत्राणकरो गोत्रपतिर्गोत्रेशपूजितः ॥ ९०॥

गोत्रभिद्गोत्रभित्त्राता गोत्रभिद्वरदायकः ।

गोत्रभित्पूजितपदो गोत्रभिच्छत्रुसूदनः ॥ ९१॥

गोत्रभित्प्रीतिदो नित्यं गोत्रभिद्गोत्रपालकः ।

गोत्रभिद्गीतचरितो गोत्रभिद्राज्यरक्षकः ॥ ९२॥

गोत्रभिज्जयदायी च गोत्रभित्प्रणयः सदा ।

गोत्रभिद्भयसम्भेत्ता गोत्रभिन्मानदायकः ॥ ९३॥

गोत्रभिद्गोपनपरो गोत्रभित्सैन्यनायकः ।

गोत्राधिपप्रियो गोत्रपुत्रीपुत्रो गिरिप्रियः ॥ ९४॥

ग्रन्थज्ञो ग्रन्थकृद्ग्रन्थग्रन्थिभिद्ग्रन्थविघ्नहा ।

ग्रन्थादिर्ग्रन्थसञ्चारो ग्रन्थश्रवणलोलुपः ॥ ९५॥

ग्रन्थादीनक्रियो ग्रन्थप्रियो ग्रन्थार्थतत्त्ववित् ।

ग्रन्थसंशयसञ्छेदी ग्रन्थवक्ता ग्रहाग्रणीः ॥ ९६॥

ग्रन्थगीतगुणो ग्रन्थगीतो ग्रन्थादिपूजितः ।

ग्रन्थारम्भस्तुतो ग्रन्थग्राही ग्रन्थार्थपारदृक् ॥ ९७॥

ग्रन्थदृग्ग्रन्थविज्ञानो ग्रन्थसन्दर्भषोधकः ।

ग्रन्थकृत्पूजितो ग्रन्थकरो ग्रन्थपरायणः ॥ ९८॥

ग्रन्थपारायणपरो ग्रन्थसन्देहभञ्जकः ।

ग्रन्थकृद्वरदाता च ग्रन्थकृद्वन्दितः सदा ॥ ९९॥

ग्रन्थानुरक्तो ग्रन्थज्ञो ग्रन्थानुग्रहदायकः ।

ग्रन्थान्तरात्मा ग्रन्थार्थपण्डितो ग्रन्थसौहृदः ॥ १००॥

ग्रन्थपारङ्गमो ग्रन्थगुणविद्ग्रन्थविग्रहः ।

ग्रन्थसेतुर्ग्रन्थहेतुर्ग्रन्थकेतुर्ग्रहाग्रगः ॥ १०१॥

ग्रन्थपूज्यो ग्रन्थगेयो ग्रन्थग्रथनलालसः ।

ग्रन्थभूमिर्ग्रहश्रेष्ठो ग्रहकेतुर्ग्रहाश्रयः ॥ १०२॥

ग्रन्थकारो ग्रन्थकारमान्यो ग्रन्थप्रसारकः ।

ग्रन्थश्रमज्ञो ग्रन्थाङ्गो ग्रन्थभ्रमनिवारकः ॥ १०३॥

ग्रन्थप्रवणसर्वाङ्गो ग्रन्थप्रणयतत्परः ।

गीतं गीतगुणो गीतकीर्तिर्गीतविशारदः ॥ १०४॥

गीतस्फीतयशा गीतप्रणयो गीतचञ्चुरः ।

गीतप्रसन्नो गीतात्मा गीतलोलो गतस्पृहः ॥ १०५॥

गीताश्रयो गीतमयो गीततत्त्वार्थकोविदः ।

गीतसंशयसञ्छेत्ता गीतसङ्गीतशाशनः ॥ १०६॥

गीतार्थज्ञो गीततत्त्वो गीतातत्त्वं गताश्रयः ।

गीतासारोऽथ गीताकृद्गीताकृद्विघ्ननाशनः ॥ १०७॥

गीताशक्तो गीतलीनो गीताविगतसञ्ज्वरः ।

गीतैकदृग्गीतभूतिर्गीतप्रीतो गतालसः ॥ १०८॥

गीतवाद्यपटुर्गीतप्रभुर्गीतार्थतत्त्ववित् ।

गीतागीतविवेकज्ञो गीताप्रवणचेतनः ॥ १०९॥

गतभीर्गतविद्वेषो गतसंसारबन्धनः ।

गतमायो गतत्रासो गतदुःखो गतज्वरः ॥ ११०॥

गतासुहृद्गतज्ञानो गतदुष्टाशयो गतः ।

गतार्तिर्गतसङ्कल्पो गतदुष्टविचेष्टितः ॥ १११॥

गताहङ्कारसञ्चारो गतदर्पो गताहितः ।

गतविघ्नो गतभयो गतागतनिवारकः ॥ ११२॥

गतव्यथो गतापायो गतदोषो गतेः परः ।

गतसर्वविकारोऽथ गतगञ्जितकुञ्जरः ॥ ११३॥

गतकम्पितभूपृष्ठो गतरुग्गतकल्मषः ।

गतदैन्यो गतस्तैन्यो गतमानो गतश्रमः ॥ ११४॥

गतक्रोधो गतग्लानिर्गतम्लानो गतभ्रमः ।

गताभावो गतभवो गततत्त्वार्थसंशयः ॥ ११५॥

गयासुरशिरश्छेत्ता गयासुरवरप्रदः ।

गयावासो गयानाथो गयावासिनमस्कृतः ॥ ११६॥

गयातीर्थफलाध्यक्षो गयायात्राफलप्रदः ।

गयामयो गयाक्षेत्रं गयाक्षेत्रनिवासकृत् ॥ ११७॥

गयावासिस्तुतो गयान्मधुव्रतलसत्कटः ।

गायको गायकवरो गायकेष्टफलप्रदः ॥ ११८॥

गायकप्रणयी गाता गायकाभयदायकः ।

गायकप्रवणस्वान्तो गायकः प्रथमः सदा ॥ ११९॥

गायकोद्गीतसम्प्रीतो गायकोत्कटविघ्नहा ।

गानगेयो गानकेशो गायकान्तरसञ्चरः ॥ १२०॥

गायकप्रियदः शश्वद्गायकाधीनविग्रहः ।

गेयो गेयगुणो गेयचरितो गेयतत्त्ववित् ॥ १२१॥

गायकत्रासहा ग्रन्थो ग्रन्थतत्त्वविवेचकः ।

गाढानुरागो गाढाङ्गो गाढागङ्गाजलोऽन्वहम् ॥ १२२॥

गाढावगाढजलधिर्गाढप्रज्ञो गतामयः ।

गाढप्रत्यर्थिसैन्योऽथ गाढानुग्रहतत्परः ॥ १२३॥

गाढश्लेषरसाभिज्ञो गाढनिर्वृतिसाधकः ।

गङ्गाधरेष्टवरदो गङ्गाधरभयापहः ॥ १२४॥

गङ्गाधरगुरुर्गङ्गाधरध्यातपदः सदा ।

गङ्गाधरस्तुतो गङ्गाधराराध्यो गतस्मयः ॥ १२५॥

गङ्गाधरप्रियो गङ्गाधरो गङ्गाम्बुसुन्दरः ।

गङ्गाजलरसास्वादचतुरो गाङ्गतीरयः ॥ १२६॥

गङ्गाजलप्रणयवान् गङ्गातीरविहारकृत् ।

गङ्गाप्रियो गङ्गाजलावगाहनपरः सदा ॥ १२७॥

गन्धमादनसंवासो गन्धमादनकेलिकृत् ।

गन्धानुलिप्तसर्वाङ्गो गन्धलुब्धमधुव्रतः ॥ १२८॥

गन्धो गन्धर्वराजोऽथ गन्धर्वप्रियकृत् सदा ।

गन्धर्वविद्यातत्त्वज्ञो गन्धर्वप्रीतिवर्धनः ॥ १२९॥

गकारबीजनिलयो गकारो गर्विगर्वनुत् ।

गन्धर्वगणसंसेव्यो गन्धर्ववरदायकः ॥ १३०॥

गन्धर्वो गन्धमातङ्गो गन्धर्वकुलदैवतम् ।

गन्धर्वगर्वसञ्छेत्ता गन्धर्ववरदर्पहा ॥ १३१॥

गन्धर्वप्रवणस्वान्तो गन्धर्वगणसंस्तुतः ।

गन्धर्वार्चितपादाब्जो गन्धर्वभयहारकः ॥ १३२॥

गन्धर्वाभयदः शश्वद् गन्धर्वप्रतिपालकः ।

गन्धर्वगीतचरितो गन्धर्वप्रणयोत्सुकः ॥ १३३॥

गन्धर्वगानश्रवणप्रणयी गर्वभञ्जनः ।

गन्धर्वत्राणसन्नद्धो गन्धर्वसमरक्षमः ॥ १३४॥

गन्धर्वस्त्रीभिराराध्यो गानं गानपटुः सदा ।

गच्छो गच्छपतिर्गच्छनायको गच्छगर्वहा ॥ १३५॥

गच्छराजोऽथ गच्छेशो गच्छराजनमस्कृतः ।

गच्छप्रियो गच्छगुरुर्गच्छत्राणकृतोद्यमः ॥ १३६॥

गच्छप्रभुर्गच्छचरो गच्छप्रियकृतोद्यमः ।

गच्छगीतगुणो गच्छमर्यादाप्रतिपालकः ॥ १३७॥

गच्छधाता गच्छभर्ता गच्छवन्द्यो गुरोर्गुरुः ।

गृत्सो गृत्समदो गृत्समदाभीष्टवरप्रदः ॥ १३८॥

गीर्वाणगीतचरितो गीर्वाणगणसेवितः ।

गीर्वाणवरदाता च गीर्वाणभयनाशकृत् ॥ १३९॥

गीर्वाणगुणसंवीतो गीर्वाणारातिसूदनः ।

गीर्वाणधाम गीर्वाणगोप्ता गीर्वाणगर्वहृत् ॥ १४०॥

गीर्वाणार्तिहरो नित्यं गीर्वाणवरदायकः ।

गीर्वाणशरणं गीतनामा गीर्वाणसुन्दरः ॥ १४१॥

गीर्वाणप्राणदो गन्ता गीर्वाणानीकरक्षकः ।

गुहेहापूरको गन्धमत्तो गीर्वाणपुष्टिदः ॥ १४२॥

गीर्वाणप्रयुतत्राता गीतगोत्रो गताहितः ।

गीर्वाणसेवितपदो गीर्वाणप्रथितो गलत् ॥ १४३॥

गीर्वाणगोत्रप्रवरो गीर्वाणफलदायकः ।

गीर्वाणप्रियकर्ता च गीर्वाणागमसारवित् ॥ १४४॥

गीर्वाणागमसम्पत्तिर्गीर्वाणव्यसनापहहृ् ।

गीर्वाणप्रणयो गीतग्रहणोत्सुकमानसः ॥ १४५॥

गीर्वाणभ्रमसम्भेत्ता गीर्वाणगुरुपूजितः ।

ग्रहो ग्रहपतिर्ग्राहो ग्रहपीडाप्रणाशनः ॥ १४६॥

ग्रहस्तुतो ग्रहाध्यक्षो ग्रहेशो ग्रहदैवतम् ।

ग्रहकृद्ग्रहभर्ता च ग्रहेशानो ग्रहेश्वरः ॥ १४७॥

ग्रहाराध्यो ग्रहत्राता ग्रहगोप्ता ग्रहोत्कटः ।

ग्रहगीतगुणो ग्रन्थप्रणेता ग्रहवन्दितः ॥ १४८॥

गवी गवीश्वरो गर्वी गर्विष्ठो गर्विगर्वहा ।

गवाम्प्रियो गवान्नाथो गवीशानो गवाम्पती ॥ १४९॥

गव्यप्रियो गवाङ्गोप्ता गविसम्पत्तिसाधकः ।

गविरक्षणसन्नद्धो गवाम्भयहरः क्षणात् ॥ १५०॥

गविगर्वहरो गोदो गोप्रदो गोजयप्रदः ।

गजायुतबलो गण्डगुञ्जन्मत्तमधुव्रतः ॥ १५१॥

गण्डस्थललसद्दानमिळन्मत्ताळिमण्डितः ।

गुडो गुडप्रियो गुण्डगळद्दानो गुडाशनः ॥ १५२॥

गुडाकेशो गुडाकेशसहायो गुडलड्डुभुक् ।

गुडभुग्गुडभुग्गणयो गुडाकेशवरप्रदः ॥ १५३॥

गुडाकेशार्चितपदो गुडाकेशसखः सदा ।

गदाधरार्चितपदो गदाधरवरप्रदः ॥ १५४॥

गदायुधो गदापाणिर्गदायुद्धविशारदः ।

गदहा गददर्पघ्नो गदगर्वप्रणाशनः ॥ १५५॥

गदग्रस्तपरित्राता गदाडम्बरखण्डकः ।

गुहो गुहाग्रजो गुप्तो गुहाशायी गुहाशयः ॥ १५६॥

गुहप्रीतिकरो गूढो गूढगुल्फो गुणैकदृक् ।

गीर्गीष्पतिर्गिरीशानो गीर्देवीगीतसद्गुणः ॥ १५७॥

गीर्देवो गीष्प्रियो गीर्भूर्गीरात्मा गीष्प्रियङ्करः ।

गीर्भूमिर्गीरसन्नोऽथ गीःप्रसन्नो गिरीश्वरः ॥ १५८॥

गिरीशजो गिरौशायी गिरिराजसुखावहः ।

गिरिराजार्चितपदो गिरिराजनमस्कृतः ॥ १५९॥

गिरिराजगुहाविष्टो गिरिराजाभयप्रदः ।

गिरिराजेष्टवरदो गिरिराजप्रपालकः ॥ १६०॥

गिरिराजसुतासूनुर्गिरिराजजयप्रदः ।

गिरिव्रजवनस्थायी गिरिव्रजचरः सदा ॥ १६१॥

गर्गो गर्गप्रियो गर्गदेहो गर्गनमस्कृतः ।

गर्गभीतिहरो गर्गवरदो गर्गसंस्तुतः ॥ १६२॥

गर्गगीतप्रसन्नात्मा गर्गानन्दकरः सदा ।

गर्गप्रियो गर्गमानप्रदो गर्गारिभञ्जकः ॥ १६३॥

गर्गवर्गपरित्राता गर्गसिद्धिप्रदायकः ।

गर्गग्लानिहरो गर्गभ्रमहृद्गर्गसङ्गतः ॥ १६४॥

गर्गाचार्यो गर्गमुनिर्गर्गसम्मानभाजनः ।

गम्भीरो गणितप्रज्ञो गणितागमसारवित् ॥ १६५॥

गणको गणकश्लाघ्यो गणकप्रणयोत्सुकः ।

गणकप्रवणस्वान्तो गणितो गणितागमः ॥ १६६॥

गद्यं गद्यमयो गद्यपद्यविद्याविशारदः ।

गललग्नमहानागो गलदर्चिर्गलसन्मदः ॥ १६७॥

गलत्कुष्ठिव्यथाहन्ता गलत्कुष्ठिसुखप्रदः ।

गम्भीरनाभिर्गम्भीरस्वरो गम्भीरलोचनः ॥ १६८॥

गम्भीरगुणसम्पन्नो गम्भीरगतिशोभनः ।

गर्भप्रदो गर्भरूपो गर्भापद्विनिवारकः ॥ १६९॥

गर्भागमनसन्नाशो गर्भदो गर्भशोकनुत् ।

गर्भत्राता गर्भगोप्त गर्भपुष्टिकरः सदा ॥ १७०॥

गर्भाश्रयो गर्भमयो गर्भामयनिवारकः ।

गर्भाधारो गर्भधरो गर्भसन्तोषसाधकः ॥ १७१॥

गर्भगौरवसन्धानसन्धानं गर्भवर्गहृत् ।

गरीयान् गर्वनुद्गर्वमर्दी गरदमर्दकः ॥ १७२॥

गरसन्तापशमनो गुरुराज्यसुखप्रदः ।

॥ फलश्रुतिः ॥

नाम्नां सहस्रमुदितं महद्गणपतेरिदम् ॥ १७४॥

गकारादि जगद्वन्द्यं गोपनीयं प्रयत्नतः ।

य इदं प्रयतः प्रातस्त्रिसन्ध्यं वा पठेन्नरः ॥ १७३॥

वाञ्छितं समवाप्नोति नात्र कार्या विचारणा ।

पुत्रार्थी लभते पुत्रान् धनार्थी लभते धनम् ॥ १७४॥

विद्यार्थी लभते विद्यां सत्यं सत्यं न संशयः ।

भूर्जत्वचि समालिख्य कुङ्कुमेन समाहितः ॥ १७५॥

चतुर्थ्यां भौमवारो च चन्द्रसूर्योपरागके ।

पूजयित्वा गणधीशं यथोक्तविधिना पुरा ॥ १७६॥

पूजयेद् यो यथाशक्त्या जुहुयाच्च शमीदलैः ।

गुरुं सम्पूज्य वस्त्राद्यैः कृत्वा चापि प्रदक्षिणम् ॥ १७७॥

धारयेद् यः प्रयत्नेन स साक्षाद्गणनायकः ।

सुराश्चासुरवर्याश्च पिशाचाः किन्नरोरगः ॥ १७८॥

प्रणमन्ति सदा तं वै दुष्ट्वां विस्मितमानसाः ।

राजा सपदि वश्यः स्यात् कामिन्यस्तद्वशो स्थिराः ॥ १७९॥

तस्य वंशो स्थिरा लक्ष्मीः कदापि न विमुञ्चति ।

निष्कामो यः पठेदेतद् गणेश्वरपरायणः ॥ १८०॥

स प्रतिष्ठां परां प्राप्य निजलोकमवाप्नुयात् ।

इदं ते कीर्तितं नाम्नां सहस्रं देवि पावनम् ॥ १८१॥

न देयं कृपणयाथ शठाय गुरुविद्विषे ।

दत्त्वा च भ्रंशमाप्नोति देवतायाः प्रकोपतः ॥ १८२॥

इति श्रुत्वा महादेवी तदा विस्मितमानसा ।

पूजयामास विधिवद्गणेश्वरपदद्वयम् ॥ १८३॥

॥ इति श्रीरुद्रयामले महागुप्तसारे शिवपार्वतीसंवादे

गकारादि श्रीगणपतिसहस्रनामस्तोत्रं सम्पूर्णम् ॥

***********************************

॥ श्रीगजाननस्तोत्रम् ॥

श्रीगणेशाय नमः ।

जय देव गजानन प्रभो जय सर्वासुरगर्वभेदक ।

जय सङ्कटपाशमोचन प्रणवाकार विनायकाऽव माम् ॥ १॥

तव देव जयन्ति मूर्तयः कलितागण्यसुपुण्यकीर्तयः ।

मनसा भजतां हतार्तयः कृतशीघ्राधिककामपूर्तयः ॥ २॥

तव रम्यकथास्वनादरः स नरो जन्मलयैकमन्दिरम् ।

न परत्र न चेह सौख्यभाङ् निजदुष्कर्मवशाद्विमोहभाक् ॥ ३॥

गजवक्त्र तवाङ्घ्रिपङ्कजे ध्वजवज्राङ्कयुते सदा भजे ।

तव मूर्तिमहं परिष्वजे त्वयि हृन्मेऽस्तु सुमूषकध्वजे ॥ ४॥

त्वदृते हि गजानन प्रभो न हि भक्तौघसुखौघदायकः ।

सुदृढा मम भक्तिरस्तु ते चरणाब्जे विबुधेश विश्वपाः ॥ ५॥

फलपूरगदेक्षुकार्मुकैर्युत रुक्चक्रधराब्जपाशधृक् ।

अव वारिजशालिमञ्जरीरदधृग्रत्नघटाढ्यशुण्ड माम् ॥ ६॥

करयुग्मसुहेमशृङ्खल द्विजराजाढ्यक तुन्दिलोदर ।

शशिसुप्रभ विद्यया युत स्तनभारानमितेड्य रक्ष माम् ॥ ७॥

शशिभास्करवीतिहोत्रदृक् शुभसिन्दूररुचे विनायक ।

द्विपवक्त्र महाहिभूषण त्रिदिवेशासुरवन्द्य पाहि माम् ॥ ८॥

सृणिपाशवरद्विजैर्युत द्विजराजार्धक मूषकध्वज ।

शुभलोहितचन्दनोक्षित श्रुतिवेद्याभयदायकाऽव माम् ॥ ९॥

स्मरणात्तव शम्भुविध्यजेन्द्विनशक्रादिसुराः कृतार्थताम् ।

गणपाऽऽपुरघौघभञ्जन द्विपराजास्य सदैव पाहि माम् ॥ १०॥

शरणं भगवान्विनायकः शरणं मे सततं च सिद्धिका ।

शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥ ११॥

गलद्दानगण्डं महाहस्तितुण्डं सुपर्वप्रचण्डं धृतार्धेन्दुखण्डम् ।

करास्फोटिताण्डं महाहस्तदण्डं हृताढ्यारिमुण्डं भजे वक्रतुण्डम् ॥ १२॥

गणनाथ निबन्धसंस्तवं कृपयाङ्गीकुरु मत्कृतं ह्यमुम् ।

इदमेव सदा प्रदीयतां करुणा मय्यतुलाऽस्तु सर्वदा ॥ १३॥

इति गजाननस्तोत्रं सम्पूर्णम् ॥

********************************

॥ गजाननस्तोत्रं देवर्षिकृतम् ॥

श्री गणेशाय नमः ॥

देवर्षय ऊचुः ॥

विदेहरूपं भवबन्धहारं सदा स्वनिष्ठं स्वसुखप्रदम् तम् ।

अमेयसांख्येन च लक्ष्मीशं गजाननं भक्तियुतं भजामः ॥ १॥

मुनीन्द्रवन्द्यं विधिबोधहीनं सुबुद्धिदं बुद्धिधरं प्रशान्तम् ।

विकारहीनं सकलांमकं वै गजाननं भक्तियुतं भजामः ॥ २॥

अमेय रूपं हृदि संस्थितं तं ब्रह्माऽहमेकं भ्रमनाशकारम् ।

अनादि-मध्यान्तमपाररूपं गजाननं भक्तियुतं भजामः ॥ ३॥

जगत्प्रमाणं जगदीशमेवमगम्यमाद्यं जगदादिहीनम् ।

अनात्मनां मोहप्रदं पुराणं गजाननं भक्तियुतं भजामः ॥ ४॥

न पृथ्विरूपं न जलप्रकाशनं न तेजसंस्थं न समीरसंस्थम् ।

न खे गतं पंचविभूतिहीनं गजाननं भक्तियुतं भजामः ॥ ५॥

न विश्वगं तैजसगं न प्राज्ञं समष्टि-व्यष्टिस्थ-मनन्तगं तम् ।

गुणैर्विहीनं परमार्थभूतं गजाननं भक्तियुतं भजामः ॥ ६॥

गणेशगं नैव च बिन्दुसंस्थं न देहिनं बोधमयं न ढुण्ढी ।

सुयोगहीनं प्रवदन्ति तत्स्थं गजाननं भक्तियुतं भजामः ॥ ७॥

अनागतं ग्रैवगतं गणेशं कथं तदाकारमयं वदामः ।

तथापि सर्वं प्रतिदेहसंस्थं गजाननं भक्तियुतं भजामः ॥ ८॥

यदि त्वया नाथ! घृतं न किंचित्तदा कथं सर्वमिदं भजामि ।

अतो महात्मानमचिन्त्यमेवं गजानन भक्तियुतं भजामः ॥ ९॥

सुसिद्धिदं भक्तजनस्य देवं सकामिकानामिह सौख्यदं तम् ।

अकामिकानां भवबन्धहारं गजाननं भक्तियुतं भजामः ॥ १०॥

सुरेन्द्रसेव्यं ह्यसुरैः सुसेव्यं समानभावेन विराजयन्तम् ।

अनन्तबाहु मूषकध्वजं तं गजाननं भक्तियुतं भजामः ॥ ११॥

सदा सुखानन्दमयं जले च समुद्रजे इक्षुरसे निवासम् ।

द्वन्द्वस्य यानेन च नाशरूपे गजाननं भक्तियुतं भजामः ॥ १२॥

चतुःपदार्था विविधप्रकाशस्तदेव हस्तं सुचतुर्भुजं तम् ।

अनाथनाथं च महोदरं वै गजाननं भक्तियुतं भजामः ॥ १३॥

महाखुमारूढमकालकालं विदेहयोगेन च लभ्यमानम् ।

अमायिनं मायिकमोहदं तं गजाननं भक्तियुतं भजामः ॥ १४॥

रविस्वरूपं रविभासहीनं हरिस्वरूपं हरिबोधहीनम् ।

शिवस्वरूपं शिवभासनाशं गजाननं भक्तियुतं भजामः ॥ १५॥

महेश्वरीस्थं च सुशक्तिहीनं प्रभुं परेशं परवन्द्यमेवम् ।

अचालकं चालकबीजरूपं गजाननं भक्तियुतं भजामः ॥ १६॥

शिवादि-देवैश्च खगैश्च वन्द्यं नरैर्लता-वृक्ष-पशुप्रमुख्यैः ।

चराऽचरैर्लोक-विहीनमेवं गजाननं भक्तियुतं भजामः ॥ १७॥

मनोवचोहीनतया सुसंस्थं निवृत्तिमात्रं ह्यजमव्ययं तम् ।

तथाऽपि देवं पुरसंस्थितं तं गजाननं भक्तियुतं भजामः ॥ १८॥

वयं सुधन्या गणपस्तवेन तथैव मर्त्यार्चनतस्तथैव ।

गणेशरूपाश्च कृतास्त्वया तं गजाननं भक्तियुतं भजामः ॥ १९॥

गजाख्यबीजं प्रवदन्ति वेदास्तदेव चिह्नेन च योगिनस्त्वाम् ।

गच्छन्ति तेनैव गजाननं तं गजाननं भक्तियुतं भजामः ॥ २०॥

पुराणवेदाः शिवविष्णुकाद्यामराः शुकाद्या गणपस्तवे वै ।

विकुण्ठिताः किं च वयं स्तवामो गजाननं भक्तियुतं भजामः ॥ २१॥

मुद्गल उवाच ॥

एवं स्तुत्वा गणेशानं नेमुः सर्वे पुनः पुनः ।

तानुत्थाप्य वचो रम्यं गजानन उवाच ह ॥ २२॥

गजानन उवाच ॥

वरं ब्रूत महाभागा देवाः सर्षिगणाः परम् ।

स्तोत्रेण प्रीतिसंयुक्तो दास्यामि वांछितं परम् ॥ २३॥

गजाननवचः श्रुत्वा हर्षयुक्ता सुरर्षयः ।

जगुस्तं भक्तिभावेन साश्रुनेत्रा प्रजापते ॥ २४॥

देवर्षय ऊचुः ॥

यदि गजानन स्वामिन् प्रसन्नो वरदोऽसि मे ।

तदा भक्तिं दृढां देहि लोभहीनां त्वदीयकाम् ॥ २५॥

लोभासुरस्य देवेश कृता शान्तिः सुखप्रदा ।

तया गजदिदं सर्वं वरयुक्तं कृतं त्वया ॥ २६॥

अधुना देवदेवेश! कर्मयुक्ता द्विजातयः ।

भविष्यन्ति धरायां वै वयं स्वस्थानगास्तथा ॥ २७॥

स्व-स्वधर्मरताः सर्वे कृतास्त्वया गजानन!।

अतः परं वरं ढुण्ढे याचमानः किमप्यहो!॥ २८॥

यदा ते स्मरणं नाथ करिष्यामो वयं प्रभो ।

तदा संकटहीनान् वै कुरू त्वं नो गजानन!॥ २९॥

एवमुक्त्वा प्रणेमुस्तं गजाननमनामयम् ।

तानुवाच सप्रीत्यात्मा भक्ताधीनः स्वभावतः ॥ ३०॥

गजानन उवाच ॥

यद्यच्च प्रार्थितं देवा मुनयः सर्वमंजसा ।

भविष्यति न सन्देहो मत्स्मृत्या सर्वदा हि वः ॥ ३१॥

भवत्कृतमदीयं वै स्तोत्रं सर्वत्र सिद्धिदम् ।

भविष्यति विशेषेण मम भक्ति-प्रदायकम् ॥ ३२॥

पुत्र-पौत्र-प्रदं पूर्णं धन-धान्य-प्रवर्धनम् ।

सर्वसम्पत्करं देवाः पठनाच्छ्रवणान्नृणाम् ॥ ३३॥

मारणोच्चाटनादीनि नश्यन्ति स्तोत्रपाठतः ।

परकृत्यं च विप्रेन्द्रा अशुभं नैव बाधते ॥ ३४॥

संग्रामे जयदं चैव यात्राकाले फलप्रदम् ।

शत्रूच्चाटनादिषु च प्रशस्तं तद् भविष्यति ॥ ३५॥

कारागृहगतस्यैव बन्धनाशकरं भवेत् ।

असाध्यं साधयेत् सर्वमनेनैव सुरर्षयः ॥ ३६॥

एकविंशति वारं तत् चैकविंशद्दिनावधिम् ।

प्रयोगं यः करोत्येव सर्वसिद्धियुतो भवेत् ॥ ३७॥

धर्माऽर्थकाम-मोक्षाणां ब्रह्मभूतस्य दायकम् ।

भविष्यति न सन्देहः स्तोत्रं मद्भक्तिवर्धनम् ॥ ३८॥

एवमुक्त्वा गणाधीशस्तत्रैवान्तरधीयत ॥

इति मुद्गलपुराणान्तर्गतं गजाननस्तोत्रं सम्पूर्णम् ॥

**********************************

॥ गजाननस्तोत्र ॥

मुद्गलपुराणान्तर्गतम्

श्रीगणेशाय नमः ।

देवर्षय ऊचुः ।

नमस्ते गजवक्त्राय गजाननसुरूपिणे ।

पराशरसुतायैव वत्सलासूनवे नमः ॥ १॥

व्यासभ्रात्रे शुकस्यैव पितृव्याय नमो नमः ।

अनादिगणनाथाय स्वानन्दावासिने नमः ॥ २॥

रजसा सृष्टिकर्त्रे ते सत्त्वतः पालकाय वै ।

तमसा सर्वसंहर्त्रे गणेशाय नमो नमः ॥ ३॥

सुकृतेः पुरुषस्यापि रूपिणे परमात्मने ।

बोधाकाराय वै तुभ्यं केवलाय नमो नमः ।४॥

स्वसंवेद्याय देवाय योगाय गणपाय च ।

शान्तिरूपाय तुभ्यं वै नमस्ते ब्रह्मनायक ॥ ५॥

विनायकाय वीराय गजदैत्यस्य शत्रवे ।

मुनिमानसनिष्ठाय मुनीनां पालकाय च ॥ ६॥

देवरक्षकरायैव विघ्नेशाय नमो नमः ।

वक्रतुण्डाय धीराय चैकदन्ताय ते नमः ॥ ७॥

त्वयाऽयं निहतो दैत्यो गजनामा महाबलः ।

ब्रह्माण्डे मृत्यु संहीनो महाश्चर्यं कृतं विभो!॥ ८॥

हते दैत्येऽधुना कृत्स्नं जगत्सन्तोषमेष्यति ।

स्वाहा-स्वधा युतं पूर्णं स्वधर्मस्थं भविष्यति ॥ ९॥

एवमुक्त्वा गणाधीश सर्वे देवर्षयस्ततः ।

प्रणम्य तूष्णीभावं ते सम्प्राप्ता विगतज्वराः ॥ १०॥

कर्णौ सम्पीड्य गणप-चरणे शिरसो ध्वनिः ।

मधुरः प्रकृतस्तैस्तु तेन तुष्टो गजाननः ॥ ११॥

तानुवाच मदीया ये भक्ताः परमभाविताः ।

तैश्च नित्यं प्रकर्तव्यं भवद्भिर्नमनं यथा ॥ १२॥

तेभ्योऽहं प्ररमप्रीतो दास्यामि मनसीप्सिताम् ।

एतादृशं प्रियं मे च मननं नाऽत्र संशयः ॥ १३॥

एवमुक्त्वा स तान् सर्वान् सिद्धि-बुद्ध्यादि-संयुतः ।

अन्तर्दधे ततो देवा मनुयः स्वस्थलं ययुः ॥ १४॥

॥ इति श्रीमदान्त्ये मौद्गले द्वितीयखण्डे गजासुरवधे गजाननस्तोत्रं सम्पूर्णम् ॥

****************************************

॥ गजाननस्तोत्रं शंकरादिकृतम् ॥

श्री गणेशाय नमः ।

देवा ऊचुः ।

गजाननाय पूर्णाय सांख्यरूपमयाय ते ।

विदेहेन च सर्वत्र संस्थिताय नमो नमः ॥ १॥

अमेयाय च हेरम्ब परशुधारकाय ते ।

मूषकवाहनायैव विश्वेशाय नमो नमः ॥ २॥

अनन्तविभवायैव परेशां पररूपिणे ।

शिवपुत्राय देवाय गुहाग्रजाय ते नमः ॥ ३॥

पार्वतीनन्दनायैव देवानां पालकाय ते ।

सर्वेषां पूज्यदेहाय गणेशाय नमो नमः ॥ ४॥

स्वानन्दवासिने तुभ्यं शिवस्य कुलदैवत ।

विष्णवादीनां विशेषेण कुलदेवाय ते नमः ॥ ५॥

योगाकाराय सर्वेषां योगशान्तिप्रदाय च ।

ब्रह्मेशाय नमस्तुभ्यं ब्रह्मभूतप्रदाय ते ॥ ६॥

सिद्धि-बुद्धिपते नाथ! सिद्धि-बुद्धिप्रदायिने ।

मायिने मायिकेभ्यश्च मोहदाय नमो नमः ॥ ७॥

लम्बोदराय वै तुभ्यं सर्वोदरगताय च ।

अमायिने च मायाया आधाराय नमो नमः ॥ ८॥

गजः सर्वस्य बीजं यत्तेन चिह्नेन विघ्नप!।

योगिनस्त्वां प्रजानन्ति तदाकारा भवन्ति ते ॥ ९॥

तेन त्वं गजवक्त्रश्च किं स्तुमस्तवां गजानन ।

वेदादयो विकुण्ठाश्च शंकराद्याश्च देवपाः ॥ १०॥

शुक्रादयश्च शेषाद्याः स्तोतुं शक्ता भवन्ति नः ।

तथापि संस्तुतोऽसि त्वं स्फूर्त्या त्वद्दर्शनात्मना ॥ ११॥

एवमुक्त्वा प्रणेमुस्तं गजाननं शिवादयः ।

स तानुवाच प्रीतात्मा भक्तिभावेन तोषितः ॥ १२॥

गजानन उवाच ।

भवत्कृतमिदं स्तोत्रं मदीयं सर्वदं भवेत् ।

पठते शृण्वते चैव ब्रह्मभूतप्रदायकम् ॥ १३॥

इति मौद्गलोक्तं गजाननस्तोत्रं समाप्तम् ॥

********************************

॥ सर्वेष्टप्रदं गजाननस्तोत्रम् ॥

श्रीगणेशाय नमः ।

कपिल उवाच ।

नमस्ते विघ्नराजाय भक्तानां विघ्नहारिणे ।

अभक्तानां विशेषेण विघ्नकर्त्रे नमो नमः ॥ १॥

आकाशाय च भूतानां मनसे चामरेषु ते ।

बुद्ध्यैरिन्द्रियवर्गेषु त्रिविधाय नमो नमः ॥ २॥

देहानां बिन्दुरूपाय मोहरूपाय देहिनाम् ।

तयोरभेदभावेषु बोधाय ते नमो नमः ॥ ३॥

साङ्ख्याय वै विदेहानां संयोगानां निजात्मने ।

चतुर्णां पञ्च मायैव सर्वत्र ते नमो नमः ॥ ४॥

नामरूपात्मकानां वै शक्तिरूपाय ते नमः ।

आत्मनां रवये तुभ्यं हेरम्बाय नमो नमः ॥ ५॥

आनन्दानां महाविष्णुरूपाय नेति धारिणाम् ।

शङ्कराय च सर्वेषां संयोगे गणपाय ते ॥ ६॥

कर्मणां कर्मयोगाय ज्ञानयोगाय जानताम्।

समेषु समरूपाय लम्बोदर नमोऽस्तु ते ॥ ७॥

स्वाधीनानां गणाध्यक्ष सहजाय नमो नमः ।

तेषामभेदभावेषु स्वानन्दाय च ते नमः ॥ ८॥

निर्मायिकस्वरूपाणामयोगाय नमो नमः ।

योगानां योगरूपाय गणेशाय नमो नमः ॥ ९॥

शान्तियोगप्रदात्रे ते शान्तियोगमयाय च ।

किं स्तौमि तत्र देवेश अतस्त्वां प्रणमाम्यहम् ॥ १०॥

ततस्तं गणनाथो वै जगाद भक्तमुत्तमम् ।

हर्षेण महता युक्तो हर्षयन्मुनिसत्तम ॥ ११॥

श्रीगणेश उवाच ।

त्वया कृतं मदीयं यत्स्तोत्रं योगप्रदं भवेत् ।

धर्मार्थकाममोक्षाणां दायकं प्रभविष्यति ॥ १२॥

वरं वरय मत्तस्त्वं दास्यामि भक्तियन्त्रितः ।

त्वत्समो न भवेत्तात तत्त्वज्ञानप्रकाशकः ॥ १३॥

तस्य तद्वचनं श्रुत्वा कपिलस्तमुवाच ह ।

त्वदीयामचलां भक्तिं देहि विघ्नेश मे पराम् ॥ १४॥

त्वदीयभूषणं दैत्यो हृत्वा सद्यो जगाम ह ।

ततश्चिन्तामणिं नाथ तं जित्वा मणिमानय ॥ १५॥

यदाहं त्वां स्मरिष्यामि तदात्मानं प्रदर्शय ।

एतदेव वरं पूर्णं देहि नाथ नमोऽस्तु ते ॥ १६॥

गृत्समद उवाच ।

तस्य तद्वचनं श्रुत्वा हर्षयुक्तो गजाननः ।

उवाच तं महाभक्तं प्रेमयुक्तं विशेषतः ॥ १७॥

त्वया यत्प्रार्थितं विष्णो तत्सर्वं प्रभविष्यति ।

तव पुत्रो भविष्यामि गणासुरवधाय च ॥ १८॥

इति श्रीमुद्गलपुराणे गजाननस्तोत्रं समाप्तम् ।

**********************************

॥ गणनायकाष्टकम् ॥

एकदन्तं महाकायं तप्तकाञ्चनसन्निभम् ।

लम्बोदरं विशालाक्षं वन्देऽहं गणनायकम् ॥ १॥

मौञ्जीकृष्णाजिनधरं नागयज्ञोपवीतिनम् ।

बालेन्दुसुकलामौलिं वन्देऽहं गणनायकम् ॥ २॥

अम्बिकाहृदयानन्दं मातृभिः परिवेष्टितम् ।

भक्तिप्रियं मदोन्मत्तं वन्देऽहं गणनायकम् ॥ ३॥

चित्ररत्नविचित्राङ्गं चित्रमालाविभूषितम् ।

चित्ररूपधरं देवं वन्देऽहं गणनायकम् ॥ ४॥

गजवक्त्रं सुरश्रेष्ठं कर्णचामरभूषितम् ।

पाशाङ्कुशधरं देवं वन्देऽहं गणनायकम् ॥ ४॥

मूषकोत्तममारुह्य देवासुरमहाहवे

योद्धुकामं महावीर्यं वन्देऽहं गणनायकम् ॥ ५॥

यक्षकिन्नरगन्धर्वक्ष् सिद्धविद्याधरैस्सदा

स्तूयमानं महाबाहुं वन्देऽहं गणनायकम् ॥ ६॥

सर्वविघ्नहरं देवं सर्वविघ्नविवर्जितम् ।

सर्वसिद्धिप्रदातारं वन्देऽहं गणनायकम् ॥ ८॥

गणाष्टकमिदं पुण्यं यः पठे सततं नरः

सिद्ध्यन्ति सर्वकार्याणि विद्यावान् धनवान् भवेत् ॥

इति श्रीगणनायकाष्टकं सम्पूर्णम् ।

********************************

॥ श्रीगणपतिसहस्रनामावली ॥

ॐ गणेश्वराय नमः ।

ॐ गणक्रीडाय नमः ।

ॐ गणनाथाय नमः ।

ॐ गणाधिपाय नमः ।

ॐ एकदंष्ट्राय नमः ।

ॐ वक्रतुण्डाय नमः ।

ॐ गजवक्त्राय नमः ।

ॐ महोदराय नमः ।

ॐ लम्बोदराय नमः ।

ॐ धूम्रवर्णाय नमः ।

ॐ विकटाय नमः ।

ॐ विघ्ननायकाय नमः ।

ॐ सुमुखाय नमः ।

ॐ दुर्मुखाय नमः ।

ॐ बुद्धाय नमः ।

ॐ विघ्नराजाय नमः ।

ॐ गजाननाय नमः ।

ॐ भीमाय नमः ।

ॐ प्रमोदाय नमः ।

ॐ आमोदाय नमः ।

ॐ सुरानन्दाय नमः ।

ॐ मदोत्कटाय नमः ।

ॐ हेरम्बाय नमः ।

ॐ शम्बराय नमः ।

ॐ शम्भवे नमः ।

ॐ लम्बकर्णाय नमः ।

ॐ महाबलाय नमः ।

ॐ नन्दनाय नमः ।

ॐ अलम्पटाय नमः ।

ॐ अभीरवे नमः ।

ॐ मेघनादाय नमः ।

ॐ गणञ्जयाय नमः ।

ॐ विनायकाय नमः ।

ॐ विरूपाक्षाय नमः ।

ॐ धीरशूराय नमः ।

ॐ वरप्रदाय नमः ।

ॐ महागणपतये नमः ।

ॐ बुद्धिप्रियाय नमः ।

ॐ क्षिप्रप्रसादनाय नमः ।

ॐ रुद्रप्रियाय नमः ।

ॐ गणाध्यक्षाय नमः ।

ॐ उमापुत्राय नमः ।

ॐ अघनाशनाय नमः ।

ॐ कुमारगुरवे नमः ।

ॐ ईशानपुत्राय नमः ।

ॐ मूषकवाहनाय नमः ।

ॐ सिद्धिप्रियाय नमः ।

ॐ सिद्धिपतये नमः ।

ॐ सिद्धये नमः ।

ॐ सिद्धिविनायकाय नमः ।

ॐ अविघ्नाय नमः ।

ॐ तुम्बुरवे नमः ।

ॐ सिंहवाहनाय नमः ।

ॐ मोहिनीप्रियाय नमः ।

ॐ कटङ्कटाय नमः ।

ॐ राजपुत्राय नमः ।

ॐ शालकाय नमः ।

ॐ सम्मिताय नमः ।

ॐ अमिताय नमः ।

ॐ कूष्माण्ड सामसम्भूतये नमः ।

ॐ दुर्जयाय नमः ।

ॐ धूर्जयाय नमः ।

ॐ जयाय नमः ।

ॐ भूपतये नमः ।

ॐ भुवनपतये नमः ।

ॐ भूतानां पतये नमः ।

ॐ अव्ययाय नमः ।

ॐ विश्वकर्त्रे नमः ।

ॐ विश्वमुखाय नमः ।

ॐ विश्वरूपाय नमः ।

ॐ निधये नमः ।

ॐ घृणये नमः ।

ॐ कवये नमः ।

ॐ कवीनामृषभाय नमः ।

ॐ ब्रह्मण्याय नमः ।

ॐ ब्रह्मणस्पतये नमः ।

ॐ ज्येष्ठराजाय नमः ।

ॐ निधिपतये नमः ।

ॐ निधिप्रियपतिप्रियाय नमः ।

ॐ हिरण्मयपुरान्तःस्थाय नमः ।

ॐ सूर्यमण्डलमध्यगाय नमः ।

ॐ कराहतिविध्वस्तसिन्धुसलिलाय नमः ।

ॐ पूषदंतभिदे नमः ।

ॐ उमाङ्ककेलिकुतुकिने नमः ।

ॐ मुक्तिदाय नमः ।

ॐ कुलपालनाय नमः ।

ॐ किरीटिने नमः ।

ॐ कुण्डलिने नमः ।

ॐ हारिणे नमः ।

ॐ वनमालिने नमः ।

ॐ मनोमयाय नमः ।

ॐ वैमुख्यहतदैत्यश्रिये नमः ।

ॐ पादाहतिजितक्षितये नमः ।

ॐ सद्योजातस्वर्णमुञ्जमेखलिने नमः ।

ॐ दुर्निमित्तहृते नमः ।

ॐ दुःस्वप्नहृते नमः ।

ॐ प्रसहनाय नमः ।

ॐ गुणिने नमः ।

ॐ नादप्रतिष्ठिताय नमः ।

ॐ सुरूपाय नमः ॥ १००॥

ॐ सर्वनेत्राधिवासाय नमः ।

ॐ वीरासनाश्रयाय नमः ।

ॐ पीताम्बराय नमः ।

ॐ खण्डरदाय नमः ।

ॐ खण्डेन्दुकृतशेखराय नमः ।

ॐ चित्राङ्कश्यामदशनाय नमः ।

ॐ भालचन्द्राय नमः ।

ॐ चतुर्भुजाय नमः ।

ॐ योगाधिपाय नमः ।

ॐ तारकस्थाय नमः ।

ॐ पुरुषाय नमः ।

ॐ गजकर्णाय नमः ।

ॐ गणाधिराजाय नमः ।

ॐ विजयस्थिराय नमः ।

ॐ गजपतिर्ध्वजिने नमः ।

ॐ देवदेवाय नमः ।

ॐ स्मरप्राणदीपकाय नमः ।

ॐ वायुकीलकाय नमः।

ॐ विपश्चिद् वरदाय नमः।

ॐ नादोन्नादभिन्नबलाहकाय नमः।

ॐ वराहरदनाय नमः।

ॐ मृत्युंजयाय नमः।

ॐ व्याघ्राजिनाम्बराय नमः।

ॐ इच्छाशक्तिधराय नमः।

ॐ देवत्रात्रे नमः।

ॐ दैत्यविमर्दनाय नमः।

ॐ शम्भुवक्त्रोद्भवाय नमः।

ॐ शम्भुकोपघ्ने नमः।

ॐ शम्भुहास्यभुवे नमः।

ॐ शम्भुतेजसे नमः।

ॐ शिवाशोकहारिणे नमः।

ॐ गौरीसुखावहाय नमः।

ॐ उमाङ्गमलजाय नमः।

ॐ गौरीतेजोभुवे नमः।

ॐ स्वर्धुनीभवाय नमः।

ॐ यज्ञकायाय नमः।

ॐ महानादाय नमः।

ॐ गिरिवर्ष्मणे नमः।

ॐ शुभाननाय नमः।

ॐ सर्वात्मने नमः।

ॐ सर्वदेवात्मने नमः।

ॐ ब्रह्ममूर्ध्ने नमः।

ॐ ककुप् श्रुतये नमः।

ॐ ब्रह्माण्डकुम्भाय नमः ।

ॐ चिद् व्योमभालाय नमः ।

ॐ सत्यशिरोरुहाय नमः ।

ॐ जगज्जन्मलयोन्मेषनिमेषाय नमः ।

ॐ अग्न्यर्कसोमदृशे नमः ।

ॐ गिरीन्द्रैकरदाय नमः ।

ॐ धर्माधर्मोष्ठाय नमः ।

ॐ सामबृंहिताय नमः ।

ॐ ग्रहर्क्षदशनाय नमः ।

ॐ वाणीजिह्वाय नमः ।

ॐ वासवनासिकाय नमः ।

ॐ कुलाचलांसाय नमः ।

ॐ सोमार्कघण्टाय नमः ।

ॐ रुद्रशिरोधराय नमः ।

ॐ नदीनदभुजाय नमः ।

ॐ सर्पाङ्गुलीकाय नमः ।

ॐ तारकानखाय नमः ।

ॐ भ्रूमध्यसंस्थितकराय नमः ।

ॐ ब्रह्मविद्यामदोत्कटाय नमः ।

ॐ व्योमनाभये नमः ।

ॐ श्रीहृदयाय नमः ।

ॐ मेरुपृष्ठाय नमः ।

ॐ अर्णवोदराय नमः ।

ॐ कुक्षिस्थयक्षगन्धर्व रक्षःकिन्नरमानुषाय नमः ।

ॐ पृथ्विकटये नमः ।

ॐ सृष्टिलिङ्गाय नमः ।

ॐ शैलोरवे नमः ।

ॐ दस्रजानुकाय नमः ।

ॐ पातालजंघाय नमः ।

ॐ मुनिपदे नमः ।

ॐ कालाङ्गुष्ठाय नमः ।

ॐ त्रयीतनवे नमः ।

ॐ ज्योतिर्मण्डललांगूलाय नमः ।

ॐ हृदयालाननिश्चलाय नमः ।

ॐ हृत्पद्मकर्णिकाशालिवियत्केलिसरोवराय नमः ।

ॐ सद्भक्तध्याननिगडाय नमः ।

ॐ पूजावारिनिवारिताय नमः ।

ॐ प्रतापिने नमः ।

ॐ कश्यपसुताय नमः ।

ॐ गणपाय नमः ।

ॐ विष्टपिने नमः ।

ॐ बलिने नमः ।

ॐ यशस्विने नमः ।

ॐ धार्मिकाय नमः ।

ॐ स्वोजसे नमः ।

ॐ प्रथमाय नमः ।

ॐ प्रथमेश्वराय नमः ।

ॐ चिन्तामणिद्वीप पतये नमः ।

ॐ कल्पद्रुमवनालयाय नमः ।

ॐ रत्नमण्डपमध्यस्थाय नमः ।

ॐ रत्नसिंहासनाश्रयाय नमः ।

ॐ तीव्राशिरोद्धृतपदाय नमः ।

ॐ ज्वालिनीमौलिलालिताय नमः ।

ॐ नन्दानन्दितपीठश्रिये नमः ।

ॐ भोगदाभूषितासनाय नमः ।

ॐ सकामदायिनीपीठाय नमः ।

ॐ स्फुरदुग्रासनाश्रयाय नमः ॥ २००॥

ॐ तेजोवतीशिरोरत्नाय नमः ।

ॐ सत्यानित्यावतंसिताय नमः ।

ॐ सविघ्ननाशिनीपीठाय नमः ।

ॐ सर्वशक्त्यम्बुजाश्रयाय नमः ।

ॐ लिपिपद्मासनाधाराय नमः ।

ॐ वह्निधामत्रयाश्रयाय नमः ।

ॐ उन्नतप्रपदाय नमः ।

ॐ गूढगुल्फाय नमः ।

ॐ संवृतपार्ष्णिकाय नमः ।

ॐ पीनजंघाय नमः ।

ॐ श्लिष्टजानवे नमः ।

ॐ स्थूलोरवे नमः ।

ॐ प्रोन्नमत्कटये नमः ।

ॐ निम्ननाभये नमः ।

ॐ स्थूलकुक्षये नमः ।

ॐ पीनवक्षसे नमः ।

ॐ बृहद्भुजाय नमः ।

ॐ पीनस्कन्धाय नमः ।

ॐ कम्बुकण्ठाय नमः ।

ॐ लम्बोष्ठाय नमः ।

ॐ लम्बनासिकाय नमः ।

ॐ भग्नवामरदाय नमः ।

ॐ तुङ्गसव्यदन्ताय नमः ।

ॐ महाहनवे नमः ।

ॐ ह्रस्वनेत्रत्रयाय नमः ।

ॐ शूर्पकर्णाय नमः ।

ॐ निबिडमस्तकाय नमः ।

ॐ स्तबकाकारकुम्भाग्राय नमः ।

ॐ रत्नमौलये नमः ।

ॐ निरङ्कुशाय नमः ।

ॐ सर्पहारकटिसूत्राय नमः ।

ॐ सर्पयज्ञोपवीतये नमः ।

ॐ सर्पकोटीरकटकाय नमः ।

ॐ सर्पग्रैवेयकाङ्गदाय नमः ।

ॐ सर्पकक्ष्योदराबन्धाय नमः ।

ॐ सर्पराजोत्तरीयकाय नमः ।

ॐ रक्ताय नमः ।

ॐ रक्ताम्बरधराय नमः ।

ॐ रक्तमाल्यविभूषणाय नमः ।

ॐ रक्तेक्षणाय नमः ।

ॐ रक्तकराय नमः ।

ॐ रक्तताल्वोष्ठपल्लवाय नमः ।

ॐ श्वेताय नमः ।

ॐ श्वेताम्बरधराय नमः ।

ॐ श्वेतमाल्यविभूषणाय नमः ।

ॐ श्वेतातपत्ररुचिराय नमः ।

ॐ श्वेतचामरवीजिताय नमः ।

ॐ सर्वावयवसम्पूर्णसर्वलक्षणलक्षिताय नमः ।

ॐ सर्वाभरणशोभाढ्याय नमः ।

ॐ सर्वशोभासमन्विताय नमः ।

ॐ सर्वमङ्गलमाङ्गल्याय नमः ।

ॐ सर्वकारणकारणाय नमः ।

ॐ सर्वदैककराय नमः ।

ॐ शार्ङ्गिणे नमः ।

ॐ बीजापूरिणे नमः ।

ॐ गदाधराय नमः ।

ॐ इक्षुचापधराय नमः ।

ॐ शूलिने नमः ।

ॐ चक्रपाणये नमः ।

ॐ सरोजभृते नमः ।

ॐ पाशिने नमः ।

ॐ धृतोत्पलाय नमः ।

ॐ शालीमञ्जरीभृते नमः ।

ॐ स्वदन्तभृते नमः ।

ॐ कल्पवल्लीधराय नमः ।

ॐ विश्वाभयदैककराय नमः ।

ॐ वशिने नमः ।

ॐ अक्षमालाधराय नमः ।

ॐ ज्ञानमुद्रावते नमः ।

ॐ मुद्गरायुधाय नमः ।

ॐ पूर्णपात्रिणे नमः ।

ॐ कम्बुधराय नमः ।

ॐ विधृतालिसमुद्गकाय नमः ।

ॐ मातुलिङ्गधराय नमः ।

ॐ चूतकलिकाभृते नमः ।

ॐ कुठारवते नमः ।

ॐ पुष्करस्थस्वर्णघटीपूर्णरत्नाभिवर्षकाय नमः ।

ॐ भारतीसुन्दरीनाथाय नमः ।

ॐ विनायकरतिप्रियाय नमः ।

ॐ महालक्ष्मी प्रियतमाय नमः ।

ॐ सिद्धलक्ष्मीमनोरमाय नमः ।

ॐ रमारमेशपूर्वाङ्गाय नमः ।

ॐ दक्षिणोमामहेश्वराय नमः ।

ॐ महीवराहवामाङ्गाय नमः ।

ॐ रविकन्दर्पपश्चिमाय नमः ।

ॐ आमोदप्रमोदजननाय नमः ।

ॐ सप्रमोदप्रमोदनाय नमः ।

ॐ समेधितसमृद्धिश्रिये नमः ।

ॐ ऋद्धिसिद्धिप्रवर्तकाय नमः ।

ॐ दत्तसौख्यसुमुखाय नमः ।

ॐ कान्तिकन्दलिताश्रयाय नमः ।

ॐ मदनावत्याश्रितांघ्रये नमः ।

ॐ कृत्तदौर्मुख्यदुर्मुखाय नमः ।

ॐ विघ्नसम्पल्लवोपघ्नाय नमः ।

ॐ सेवोन्निद्रमदद्रवाय नमः ।

ॐ विघ्नकृन्निघ्नचरणाय नमः ।

ॐ द्राविणीशक्ति सत्कृताय नमः ।

ॐ तीव्राप्रसन्ननयनाय नमः ।

ॐ ज्वालिनीपालतैकदृशे नमः ।

ॐ मोहिनीमोहनाय नमः ॥ ३००॥

ॐ भोगदायिनीकान्तिमण्डिताय नमः ।

ॐ कामिनीकान्तवक्त्रश्रिये नमः ।

ॐ अधिष्ठित वसुन्धराय नमः ।

ॐ वसुन्धरामदोन्नद्धमहाशङ्खनिधिप्रभवे नमः ।

ॐ नमद्वसुमतीमौलिमहापद्मनिधिप्रभवे नमः ।

ॐ सर्वसद्गुरुसंसेव्याय नमः ।

ॐ शोचिष्केशहृदाश्रयाय नमः ।

ॐ ईशानमूर्ध्ने नमः ।

ॐ देवेन्द्रशिखायै नमः ।

ॐ पवननन्दनाय नमः ।

ॐ अग्रप्रत्यग्रनयनाय नमः ।

ॐ दिव्यास्त्राणां प्रयोगविदे नमः ।

ॐ ऐरावतादिसर्वाशावारणावरणप्रियाय नमः ।

ॐ वज्राद्यस्त्रपरिवाराय नमः ।

ॐ गणचण्डसमाश्रयाय नमः ।

ॐ जयाजयापरिवाराय नमः ।

ॐ विजयाविजयावहाय नमः ।

ॐ अजितार्चितपादाब्जाय नमः ।

ॐ नित्यानित्यावतंसिताय नमः ।

ॐ विलासिनीकृतोल्लासाय नमः ।

ॐ शौण्डीसौन्दर्यमण्डिताय नमः ।

ॐ अनन्तानन्तसुखदाय नमः ।

ॐ सुमङ्गलसुमङ्गलाय नमः ।

ॐ इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिनिषेविताय नमः ।

ॐ सुभगासंश्रितपदाय नमः ।

ॐ ललितालिताश्रयाय नमः।

ॐ कामिनीकामनाय नमः।

ॐ काममालिनीकेलिललिताय नमः।

ॐ सरस्वत्याश्रयाय नमः।

ॐ गौरीनन्दनाय नमः।

ॐ श्रीनिकेतनाय नमः।

ॐ गुरुगुप्तपदाय नमः।

ॐ वाचासिद्धाय नमः।

ॐ वागीश्वरीपतये नमः।

ॐ नलिनीकामुकाय नमः।

ॐ वामारामाय नमः।

ॐ ज्येष्ठामनोरमाय नमः।

ॐ रौद्रिमुद्रितपादाब्जाय नमः।

ॐ हुंबीजाय नमः।

ॐ तुङ्गशक्तिकाय नमः।

ॐ विश्वादिजननत्राणाय नमः।

ॐ स्वाहाशक्तये नमः।

ॐ सकीलकाय नमः।

ॐ अमृताब्धिकृतावासाय नमः।

ॐ मदघूर्णितलोचनाय नमः।

ॐ उच्छिष्टगणाय नमः।

ॐ उच्छिष्टगणेशाय नमः।

ॐ गणनायकाय नमः।

ॐ सर्वकालिकसंसिद्धये नमः।

ॐ नित्यशैवाय नमः।

ॐ दिगम्बराय नमः।

ॐ अनपाय नमः ।

ॐ अनन्तदृष्टये नमः ।

ॐ अप्रमेयाय नमः ।

ॐ अजरामराय नमः ।

ॐ अनाविलाय नमः ।

ॐ अप्रतिरथाय नमः ।

ॐ अच्युताय नमः ।

ॐ अमृताय नमः ।

ॐ अक्षराय नमः ।

ॐ अप्रतर्क्याय नमः ।

ॐ अक्षयाय नमः ।

ॐ अजय्याय नमः ।

ॐ अनाधाराय नमः ।

ॐ अनामयाय नमः ।

ॐ अमलाय नमः ।

ॐ अमोघसिद्धये नमः ।

ॐ अद्वैताय नमः ।

ॐ अघोराय नमः ।

ॐ अप्रमिताननाय नमः ।

ॐ अनाकाराय नमः ।

ॐ अब्धिभूम्याग्निबलघ्नाय नमः ।

ॐ अव्यक्तलक्षणाय नमः ।

ॐ आधारपीठाय नमः ।

ॐ आधाराय नमः ।

ॐ आधाराधेयवर्जिताय नमः ।

ॐ आखुकेतनाय नमः ।

ॐ आशापूरकाय नमः ।

ॐ आखुमहारथाय नमः ।

ॐ इक्षुसागरमध्यस्थाय नमः ।

ॐ इक्षुभक्षणलालसाय नमः ।

ॐ इक्षुचापातिरेकश्रिये नमः ।

ॐ इक्षुचापनिषेविताय नमः ।

ॐ इन्द्रगोपसमानश्रिये नमः ।

ॐ इन्द्रनीलसमद्युतये नमः ।

ॐ इन्दिवरदलश्यामाय नमः ।

ॐ इन्दुमण्डलनिर्मलाय नमः ।

ॐ इष्मप्रियाय नमः ।

ॐ इडाभागाय नमः ।

ॐ इराधाम्ने नमः ।

ॐ इन्दिराप्रियाय नमः ।

ॐ इअक्ष्वाकुविघ्नविध्वंसिने नमः ।

ॐ इतिकर्तव्यतेप्सिताय नमः ।

ॐ ईशानमौलये नमः ।

ॐ ईशानाय नमः ।

ॐ ईशानसुताय नमः ।

ॐ ईतिघ्ने नमः ।

ॐ ईषणात्रयकल्पान्ताय नमः ।

ॐ ईहामात्रविवर्जिताय नमः ।

ॐ उपेन्द्राय नमः ॥ ४००॥

ॐ उडुभृन्मौलये नमः ।

ॐ उण्डेरकबलिप्रियाय नमः ।

ॐ उन्नताननाय नमः ।

ॐ उत्तुङ्गाय नमः।

ॐ उदारत्रिदशाग्रण्ये नमः।

ॐ उर्जस्वते नमः।

ॐ उष्मलमदाय नमः।

ॐ ऊहापोहदुरासदाय नमः।

ॐ ऋग्यजुस्सामसम्भूतये नमः।

ॐ ऋद्धिसिद्धिप्रवर्तकाय नमः।

ॐ ऋजुचित्तैकसुलभाय नमः।

ॐ ऋणत्रयमोचकाय नमः।

ॐ स्वभक्तानां लुप्तविघ्नाय नमः।

ॐ सुरद्विषांलुप्तशक्तये नमः।

ॐ विमुखार्चानां लुप्तश्रिये नमः।

ॐ लूताविस्फोटनाशनाय नमः।

ॐ एकारपीठमध्यस्थाय नमः।

ॐ एकपादकृतासनाय नमः।

ॐ एजिताखिलदैत्यश्रिये नमः।

ॐ एधिताखिलसंश्रयाय नमः।

ॐ ऐश्वर्यनिधये नमः।

ॐ ऐश्वर्याय नमः।

ॐ ऐहिकामुष्मिकप्रदाय नमः।

ॐ ऐरम्मदसमोन्मेषाय नमः।

ॐ ऐरावतनिभाननाय नमः।

ॐ ओंकारवाच्याय नमः।

ॐ ओंकाराय नमः।

ॐ ओजस्वते नमः।

ॐ ओषधीपतये नमः।

ॐ औदार्यनिधये नमः ।

ॐ औद्धत्यधुर्याय नमः ।

ॐ औन्नत्यनिस्स्वनाय नमः ।

ॐ सुरनागानामङ्कुशाय नमः ।

ॐ सुरविद्विषामङ्कुशाय नमः ।

ॐ अःसमस्तविसर्गान्तपदेषु परिकीर्तिताय नमः ।

ॐ कमण्डलुधराय नमः ।

ॐ कल्पाय नमः ।

ॐ कपर्दिने नमः ।

ॐ कलभाननाय नमः ।

ॐ कर्मसाक्षिणे नमः ।

ॐ कर्मकर्त्रे नमः ।

ॐ कर्माकर्मफलप्रदाय नमः ।

ॐ कदम्बगोलकाकाराय नमः ।

ॐ कूष्माण्डगणनायकाय नमः ।

ॐ कारुण्यदेहाय नमः ।

ॐ कपिलाय नमः ।

ॐ कथकाय नमः ।

ॐ कटिसूत्रभृते नमः ।

ॐ खर्वाय नमः ।

ॐ खड्गप्रियाय नमः ।

ॐ खड्गखान्तान्तः स्थाय नमः ।

ॐ खनिर्मलाय नमः ।

ॐ खल्वाटश्रृंगनिलयाय नमः ।

ॐ खट्वाङ्गिने नमः ।

ॐ खदुरासदाय नमः ।

ॐ गुणाढ्याय नमः ।

ॐ गहनाय नमः ।

ॐ ग-स्थाय नमः ।

ॐ गद्यपद्यसुधार्णवाय नमः ।

ॐ गद्यगानप्रियाय नमः ।

ॐ गर्जाय नमः ।

ॐ गीतगीर्वाणपूर्वजाय नमः ।

ॐ गुह्याचाररताय नमः ।

ॐ गुह्याय नमः ।

ॐ गुह्यागमनिरूपिताय नमः ।

ॐ गुहाशयाय नमः ।

ॐ गुहाब्धिस्थाय नमः ।

ॐ गुरुगम्याय नमः ।

ॐ गुरोर्गुरवे नमः ।

ॐ घण्टाघर्घरिकामालिने नमः ।

ॐ घटकुम्भाय नमः ।

ॐ घटोदराय नमः ।

ॐ चण्डाय नमः ।

ॐ चण्डेश्वरसुहृदे नमः ।

ॐ चण्डीशाय नमः ।

ॐ चण्डविक्रमाय नमः ।

ॐ चराचरपतये नमः ।

ॐ चिन्तामणिचर्वणलालसाय नमः ।

ॐ छन्दसे नमः ।

ॐ छन्दोवपुषे नमः ।

ॐ छन्दोदुर्लक्ष्याय नमः ।

ॐ छन्दविग्रहाय नमः ।

ॐ जगद्योनये नमः ।

ॐ जगत्साक्षिणे नमः ।

ॐ जगदीशाय नमः ।

ॐ जगन्मयाय नमः ।

ॐ जपाय नमः ।

ॐ जपपराय नमः ।

ॐ जप्याय नमः ।

ॐ जिह्वासिंहासनप्रभवे नमः ।

ॐ झलज्झलोल्लसद्दान झंकारिभ्रमराकुलाय नमः ।

ॐ टङ्कारस्फारसंरावाय नमः ।

ॐ टङ्कारिमणिनूपुराय नमः ।

ॐ ठद्वयीपल्लवान्तःस्थ सर्वमन्त्रैकसिद्धिदाय नमः ।

ॐ डिण्डिमुण्डाय नमः ।

ॐ डाकिनीशाय नमः ।

ॐ डामराय नमः ।

ॐ डिण्डिमप्रियाय नमः ।

ॐ ढक्कानिनादमुदिताय नमः ।

ॐ ढौकाय नमः ॥५००॥

ॐ ढुण्ढिविनायकाय नमः ।

ॐ तत्वानां परमाय तत्वाय नमः ।

ॐ तत्वम्पदनिरूपिताय नमः ।

ॐ तारकान्तरसंस्थानाय नमः ।

ॐ तारकाय नमः ।

ॐ तारकान्तकाय नमः ।

ॐ स्थाणवे नमः ।

ॐ स्थाणुप्रियाय नमः ।

ॐ स्थात्रे नमः ।

ॐ स्थावराय जङ्गमाय जगते नमः ।

ॐ दक्षयज्ञप्रमथनाय नमः ।

ॐ दात्रे नमः ।

ॐ दानवमोहनाय नमः ।

ॐ दयावते नमः ।

ॐ दिव्यविभवाय नमः ।

ॐ दण्डभृते नमः ।

ॐ दण्डनायकाय नमः ।

ॐ दन्तप्रभिन्नाभ्रमालाय नमः ।

ॐ दैत्यवारणदारणाय नमः ।

ॐ दंष्ट्रालग्नद्विपघटाय नमः ।

ॐ देवार्थनृगजाकृतये नमः ।

ॐ धनधान्यपतये नमः ।

ॐ धन्याय नमः ।

ॐ धनदाय नमः ।

ॐ धरणीधराय नमः ।

ॐ ध्यानैकप्रकटाय नमः ।

ॐ ध्येयाय नमः ।

ॐ ध्यानाय नमः ।

ॐ ध्यानपरायणाय नमः ।

ॐ नन्द्याय नमः ।

ॐ नन्दिप्रियाय नमः ।

ॐ नादाय नमः ।

ॐ नादमध्यप्रतिष्ठिताय नमः ।

ॐ निष्कलाय नमः ।

ॐ निर्मलाय नमः ।

ॐ नित्याय नमः ।

ॐ नित्यानित्याय नमः ।

ॐ निरामयाय नमः ।

ॐ परस्मै व्योम्ने नमः ।

ॐ परस्मै धाम्मे नमः ।

ॐ परमात्मने नमः ।

ॐ परस्मै पदाय नमः ।

ॐ परात्पराय नमः ।

ॐ पशुपतये नमः ।

ॐ पशुपाशविमोचकाय नमः ।

ॐ पूर्णानन्दाय नमः ।

ॐ परानन्दाय नमः ।

ॐ पुराणपुरुषोत्तमाय नमः ।

ॐ पद्मप्रसन्ननयनाय नमः ।

ॐ प्रणताज्ञानमोचकाय नमः ।

ॐ प्रमाणप्रत्यायातीताय नमः ।

ॐ प्रणतार्तिनिवारणाय नमः ।

ॐ फलहस्ताय नमः ।

ॐ फणिपतये नमः ।

ॐ फेत्काराय नमः ।

ॐ फणितप्रियाय नमः ।

ॐ बाणार्चितांघ्रियुगुलाय नमः ।

ॐ बालकेलिकुतूहलिने नमः ।

ॐ ब्रह्मणे नमः ।

ॐ ब्रह्मार्चितपदाय नमः ।

ॐ ब्रह्मचारिणे नमः ।

ॐ बृहस्पतये नमः ।

ॐ बृहत्तमाय नमः ।

ॐ ब्रह्मपराय नमः ।

ॐ ब्रह्मण्याय नमः ।

ॐ ब्रह्मवित्प्रियाय नमः ।

ॐ बृहन्नादाग्र्यचीत्काराय नमः ।

ॐ ब्रह्माण्डावलिमेखलाय नमः ।

ॐ भ्रूक्षेपदत्तलक्ष्मीकाय नमः ।

ॐ भर्गाय नमः ।

ॐ भद्राय नमः ।

ॐ भयापहाय नमः ।

ॐ भगवते नमः ।

ॐ भक्तिसुलभाय नमः ।

ॐ भूतिदाय नमः ।

ॐ भूतिभूषणाय नमः ।

ॐ भव्याय नमः ।

ॐ भूतालयाय नमः ।

ॐ भोगदात्रे नमः ।

ॐ भ्रूमध्यगोचराय नमः ।

ॐ मन्त्राय नमः ।

ॐ मन्त्रपतये नमः ।

ॐ मन्त्रिणे नमः ।

ॐ मदमत्तमनोरमाय नमः ।

ॐ मेखलावते नमः ।

ॐ मन्दगतये नमः ।

ॐ मतिमत्कमलेक्षणाय नमः ।

ॐ महाबलाय नमः ।

ॐ महावीर्याय नमः ।

ॐ महाप्राणाय नमः ।

ॐ महामनसे नमः ।

ॐ यज्ञाय नमः ।

ॐ यज्ञपतये नमः ।

ॐ यज्ञगोप्ते नमः ।

ॐ यज्ञफलप्रदाय नमः ।

ॐ यशस्कराय नमः ।

ॐ योगगम्याय नमः ।

ॐ याज्ञिकाय नमः ।

ॐ याजकप्रियाय नमः ।

ॐ रसाय नमः ॥ ६००॥

ॐ रसप्रियाय नमः ।

ॐ रस्याय नमः ।

ॐ रञ्जकाय नमः ।

ॐ रावणार्चिताय नमः ।

ॐ रक्षोरक्षाकराय नमः ।

ॐ रत्नगर्भाय नमः ।

ॐ राज्यसुखप्रदाय नमः ।

ॐ लक्ष्याय नमः ।

ॐ लक्ष्यप्रदाय नमः ।

ॐ लक्ष्याय नमः ।

ॐ लयस्थाय नमः ।

ॐ लड्डुकप्रियाय नमः ।

ॐ लानप्रियाय नमः ।

ॐ लास्यपराय नमः ।

ॐ लाभकृल्लोकविश्रुताय नमः ।

ॐ वरेण्याय नमः ।

ॐ वह्निवदनाय नमः ।

ॐ वन्द्याय नमः ।

ॐ वेदान्तगोचराय नमः ।

ॐ विकर्त्रे नमः ।

ॐ विश्वतश्चक्षुषे नमः ।

ॐ विधात्रे नमः ।

ॐ विश्वतोमुखाय नमः ।

ॐ वामदेवाय नमः ।

ॐ विश्वनेते नमः ।

ॐ वज्रिवज्रनिवारणाय नमः ।

ॐ विश्वबन्धनविष्कम्भाधाराय नमः ।

ॐ विश्वेश्वरप्रभवे नमः ।

ॐ शब्दब्रह्मणे नमः ।

ॐ शमप्राप्याय नमः ।

ॐ शम्भुशक्तिगणेश्वराय नमः ।

ॐ शास्त्रे नमः ।

ॐ शिखाग्रनिलयाय नमः ।

ॐ शरण्याय नमः ।

ॐ शिखरीश्वराय नमः ।

ॐ षड् ऋतुकुसुमस्रग्विणे नमः ।

ॐ षडाधाराय नमः ।

ॐ षडक्षराय नमः ।

ॐ संसारवैद्याय नमः ।

ॐ सर्वज्ञाय नमः ।

ॐ सर्वभेषजभेषजाय नमः ।

ॐ सृष्टिस्थितिलयक्रीडाय नमः ।

ॐ सुरकुञ्जरभेदनाय नमः ।

ॐ सिन्दूरितमहाकुम्भाय नमः ।

ॐ सदसद् व्यक्तिदायकाय नमः ।

ॐ साक्षिणे नमः ।

ॐ समुद्रमथनाय नमः ।

ॐ स्वसंवेद्याय नमः ।

ॐ स्वदक्षिणाय नमः ।

ॐ स्वतन्त्राय नमः ।

ॐ सत्यसङ्कल्पाय नमः ।

ॐ सामगानरताय नमः ।

ॐ सुखिने नमः ।

ॐ हंसाय नमः ।

ॐ हस्तिपिशाचीशाय नमः ।

ॐ हवनाय नमः ।

ॐ हव्यकव्यभुजे नमः ।

ॐ हव्याय नमः ।

ॐ हुतप्रियाय नमः ।

ॐ हर्षाय नमः ।

ॐ हृल्लेखामन्त्रमध्यगाय नमः ।

ॐ क्षेत्राधिपाय नमः ।

ॐ क्षमाभर्त्रे नमः ।

ॐ क्षमापरपरायणाय नमः।

ॐ क्षिप्रक्षेमकराय नमः।

ॐ क्षेमानन्दाय नमः।

ॐ क्षोणीसुरद्रुमाय नमः।

ॐ धर्मप्रदाय नमः।

ॐ अर्थदाय नमः।

ॐ कामदात्रे नमः।

ॐ सौभाग्यवर्धनाय नमः।

ॐ विद्याप्रदाय नमः।

ॐ विभवदाय नमः।

ॐ भुक्तिमुक्तिफलप्रदाय नमः।

ॐ अभिरूप्यकराय नमः।

ॐ वीरश्रीप्रदाय नमः।

ॐ विजयप्रदाय नमः।

ॐ सर्ववश्यकराय नमः।

ॐ गर्भदोषघ्ने नमः।

ॐ पुत्रपौत्रदाय नमः।

ॐ मेधादाय नमः।

ॐ कीर्तिदाय नमः।

ॐ शोकहारिणे नमः।

ॐ दौर्भाग्यनाशनाय नमः।

ॐ प्रतिवादिमुखस्तम्भाय नमः।

ॐ रुष्टचित्तप्रसादनाय नमः।

ॐ पराभिचारशमनाय नमः।

ॐ दुःखभञ्जनकारकाय नमः।

ॐ लवाय नमः।

ॐ त्रुटये नमः।

ॐ कलायै नमः।

ॐ काष्टायै नमः।

ॐ निमेषाय नमः।

ॐ तत्पराय नमः।

ॐ क्षणाय नमः।

ॐ घट्यै नमः।

ॐ मुहूर्ताय नमः।

ॐ प्रहराय नमः।

ॐ दिवा नमः।

ॐ नक्तं नमः॥ ७००॥

ॐ अहर्निशं नमः।

ॐ पक्षाय नमः।

ॐ मासाय नमः।

ॐ अयनाय नमः।

ॐ वर्षाय नमः।

ॐ युगाय नमः।

ॐ कल्पाय नमः।

ॐ महालयाय नमः।

ॐ राशये नमः।

ॐ तारायै नमः।

ॐ तिथये नमः।

ॐ योगाय नमः।

ॐ वाराय नमः।

ॐ करणाय नमः।

ॐ अंशकाय नमः।

ॐ लग्नाय नमः ।

ॐ होरायै नमः ।

ॐ कालचक्राय नमः ।

ॐ मेरवे नमः ।

ॐ सप्तर्षिभ्यो नमः ।

ॐ ध्रुवाय नमः ।

ॐ राहवे नमः ।

ॐ मन्दाय नमः ।

ॐ कवये नमः ।

ॐ जीवाय नमः ।

ॐ बुधाय नमः ।

ॐ भौमाय नमः ।

ॐ शशिने नमः ।

ॐ रवये नमः ।

ॐ कालाय नमः ।

ॐ सृष्टये नमः ।

ॐ स्थितये नमः ।

ॐ विश्वस्मै स्थावराय जङ्गमाय नमः ।

ॐ भुवे नमः ।

ॐ अद्भ्यो नमः ।

ॐ अग्नये नमः ।

ॐ मरुते नमः ।

ॐ व्योम्ने नमः ।

ॐ अहंकृतये नमः ।

ॐ प्रकृतये नमः ।

ॐ पुंसे नमः ।

ॐ ब्रह्मणे नमः ।

ॐ विष्णवे नमः ।

ॐ शिवाय नमः ।

ॐ रुद्राय नमः ।

ॐ ईशाय नमः ।

ॐ शक्तये नमः ।

ॐ सदाशिवाय नमः ।

ॐ त्रिदशेभ्यो नमः ।

ॐ पितृभ्यो नमः ।

ॐ सिद्धेभ्यो नमः ।

ॐ यक्षेभ्यो नमः ।

ॐ रक्षोभ्यो नमः ।

ॐ किन्नरेभ्यो नमः ।

ॐ साध्येभ्यो नमः ।

ॐ विद्याधरेभ्यो नमः ।

ॐ भूतेभ्यो नमः ।

ॐ मनुष्येभ्यो नमः ।

ॐ पशुभ्यो नमः ।

ॐ खगेभ्यो नमः ।

ॐ समुद्रेभ्यो नमः ।

ॐ सरिद्भ्यो नमः ।

ॐ शैलेभ्यो नमः ।

ॐ भूताय नमः ।

ॐ भव्याय नमः ।

ॐ भवोद्भवाय नमः ।

ॐ साङ्ख्याय नमः ।

ॐ पातञ्जलाय नमः ।

ॐ योगाय नमः ।

ॐ पुराणेभ्यो नमः ।

ॐ श्रुत्यै नमः ।

ॐ स्मृत्यै नमः ।

ॐ वेदाङ्गेभ्यो नमः ।

ॐ सदाचाराय नमः ।

ॐ मीमांसायै नमः ।

ॐ न्यायविस्तराय नमः ।

ॐ आयुर्वेदाय नमः ।

ॐ धनुर्वेदीय नमः ।

ॐ गान्धर्वाय नमः ।

ॐ काव्यनाटकाय नमः ।

ॐ वैखानसाय नमः ।

ॐ भागवताय नमः ।

ॐ सात्वताय नमः ।

ॐ पाञ्चरात्रकाय नमः ।

ॐ शैवाय नमः ।

ॐ पाशुपताय नमः ।

ॐ कालामुखाय नमः ।

ॐ भैरवशासनाय नमः ।

ॐ शाक्ताय नमः ।

ॐ वैनायकाय नमः ।

ॐ सौराय नमः ।

ॐ जैनाय नमः ।

ॐ आर्हत सहितायै नमः ।

ॐ सते नमः ।

ॐ असते नमः ।

ॐ व्यक्ताय नमः ।

ॐ अव्यक्ताय नमः ।

ॐ सचेतनाय नमः ।

ॐ अचेतनाय नमः ।

ॐ बन्धाय नमः ॥ ८००॥

ॐ मोक्षाय नमः ।

ॐ सुखाय नमः ।

ॐ भोगाय नमः ।

ॐ अयोगाय नमः ।

ॐ सत्याय नमः ।

ॐ अणवे नमः ।

ॐ महते नमः ।

ॐ स्वस्ति नमः ।

ॐ हुम् नमः ।

ॐ फट् नमः ।

ॐ स्वधा नमः ।

ॐ स्वाहा नमः ।

ॐ श्रौषण्णमः ।

ॐ वौषण्णमः ।

ॐ वषण्णमः ।

ॐ नमो नमः ।

ॐ ज्ञानाय नमः ।

ॐ विज्ञानाय नमः ।

ॐ आनंदाय नमः ।

ॐ बोधाय नमः ।

ॐ संविदे नमः ।

ॐ शमाय नमः ।

ॐ यमाय नमः ।

ॐ एकस्मै नमः ।

ॐ एकाक्षराधाराय नमः ।

ॐ एकाक्षरपरायणाय नमः ।

ॐ एकाग्रधिये नमः ।

ॐ एकवीराय नमः ।

ॐ एकानेकस्वरूपधृते नमः ।

ॐ द्विरूपाय नमः ।

ॐ द्विभुजाय नमः ।

ॐ द्व्यक्षाय नमः ।

ॐ द्विरदाय नमः ।

ॐ द्विपरक्षकाय नमः ।

ॐ द्वैमातुराय नमः ।

ॐ द्विवदनाय नमः ।

ॐ द्वन्द्वातीताय नमः ।

ॐ द्व्यातीगाय नमः ।

ॐ त्रिधाम्ने नमः ।

ॐ त्रिकराय नमः ।

ॐ त्रेतात्रिवर्गफलदायकाय नमः ।

ॐ त्रिगुणात्मने नमः ।

ॐ त्रिलोकादये नमः ।

ॐ त्रिशक्तिशाय नमः ।

ॐ त्रिलोचनाय नमः ।

ॐ चतुर्बाहवे नमः।

ॐ चतुर्दन्ताय नमः।

ॐ चतुरात्मने नमः।

ॐ चतुर्मुखाय नमः।

ॐ चतुर्विधोपायमयाय नमः।

ॐ चतुर्वर्णाश्रमाश्रयाय नमः।

ॐ चतुर्विधवचोवृत्तिपरिवृत्तिप्रवर्तकाय नमः।

ॐ चतुर्थीपूजनप्रीताय नमः।

ॐ चतुर्थीतिथिसम्भवाय नमः।

ॐ पञ्चाक्षरात्मने नमः।

ॐ पञ्चात्मने नमः।

ॐ पञ्चास्याय नमः।

ॐ पञ्चकृत्यकृते नमः।

ॐ पञ्चाधाराय नमः।

ॐ पञ्चवर्णाय नमः।

ॐ पञ्चाक्षरपरायणाय नमः।

ॐ पञ्चतालाय नमः।

ॐ पञ्चकराय नमः।

ॐ पञ्चप्रणवभाविताय नमः।

ॐ पञ्चब्रह्ममयस्फूर्तये नमः।

ॐ पञ्चावरणवारिताय नमः।

ॐ पञ्चभक्ष्यप्रियाय नमः।

ॐ पञ्चबाणाय नमः।

ॐ पञ्चशिवात्मकाय नमः।

ॐ षट्कोणपीठाय नमः।

ॐ षट्चक्रधाम्ने नमः।

ॐ षड्ग्रन्थिभेदकाय नमः ।

ॐ षडध्वध्वान्तविध्वंसिने नमः ।

ॐ षडङ्गुलमहाह्रदाय नमः ।

ॐ षण्मुखाय नमः ।

ॐ षण्मुखभ्रात्रे नमः ।

ॐ षट्शक्तिपरिवारिताय नमः ।

ॐ षड्वैरिवर्गविध्वंसिने नमः ।

ॐ षडूर्मिमयभञ्जनाय नमः ।

ॐ षट्तर्कदूराय नमः ।

ॐ षट्कर्मनिरताय नमः ।

ॐ षड्रसाश्रयाय नमः ।

ॐ सप्तपातालचरणाय नमः ।

ॐ सप्तद्वीपोरुमण्डलाय नमः ।

ॐ सप्तस्वर्लोकमुकुटाय नमः ।

ॐ सप्तसाप्तिवरप्रदाय नमः ।

ॐ सप्तांगराज्यसुखदाय नमः ।

ॐ सप्तर्षिगणमण्डिताय नमः ।

ॐ सप्तछन्दोनिधये नमः ।

ॐ सप्तहोत्रे नमः ।

ॐ सप्तस्वराश्रयाय नमः ।

ॐ सप्ताब्धिकेलिकासाराय नमः ।

ॐ सप्तमातृनिषेविताय नमः ।

ॐ सप्तछन्दो मोदमदाय नमः ।

ॐ सप्तछन्दोमखप्रभवे नमः ।

ॐ अष्टमूर्तिध्येयमूर्तये नमः ।

ॐ अष्टप्रकृतिकारणाय नमः ।

ॐ अष्टाङ्गयोगफलभुवे नमः ।

ॐ अष्टपत्राम्बुजासनाय नमः ।

ॐ अष्टशक्तिसमृद्धश्रिये नमः ॥ ९००॥

ॐ अष्टैश्वर्यप्रदायकाय नमः ।

ॐ अष्टपीठोपपीठश्रिये नमः ।

ॐ अष्टमातृसमावृताय नमः ।

ॐ अष्टभैरवसेव्याय नमः ।

ॐ अष्टवसुवन्द्याय नमः ।

ॐ अष्टमूर्तिभृते नमः ।

ॐ अष्टचक्रस्फूरन्मूर्तये नमः ।

ॐ अष्टद्रव्यहविः प्रियाय नमः ।

ॐ नवनागासनाध्यासिने नमः ।

ॐ नवनिध्यनुशासिताय नमः ।

ॐ नवद्वारपुराधाराय नमः ।

ॐ नवाधारनिकेतनाय नमः ।

ॐ नवनारायणस्तुत्याय नमः ।

ॐ नवदुर्गा निषेविताय नमः ।

ॐ नवनाथमहानाथाय नमः ।

ॐ नवनागविभूषणाय नमः ।

ॐ नवरत्नविचित्राङ्गाय नमः ।

ॐ नवशक्तिशिरोधृताय नमः ।

ॐ दशात्मकाय नमः ।

ॐ दशभुजाय नमः ।

ॐ दशदिक्पतिवन्दिताय नमः ।

ॐ दशाध्यायाय नमः ।

ॐ दशप्राणाय नमः ।

ॐ दशेन्द्रियनियामकाय नमः ।

ॐ दशाक्षरमहामन्त्राय नमः ।

ॐ दशाशाव्यापिविग्रहाय नमः ।

ॐ एकादशादिभीरुद्रैः स्तुताय नमः ।

ॐ एकादशाक्षराय नमः ।

ॐ द्वादशोद्दण्डदोर्दण्डाय नमः ।

ॐ द्वादशान्तनिकेतनाय नमः ।

ॐ त्रयोदशाभिदाभिन्नविश्वेदेवाधिदैवताय नमः ।

ॐ चतुर्दशेन्द्रवरदाय नमः ।

ॐ चतुर्दशमनुप्रभवे नमः ।

ॐ चतुर्दशादिविद्याढ्याय नमः ।

ॐ चतुर्दशजगत्प्रभवे नमः ।

ॐ सामपञ्चदशाय नमः ।

ॐ पञ्चदशीशीतांशुनिर्मलाय नमः ।

ॐ षोडशाधारनिलयाय नमः ।

ॐ षोडशस्वरमातृकाय नमः ।

ॐ षोडशान्त पदावासाय नमः ।

ॐ षोडशेन्दुकलात्मकाय नमः ।

ॐ कलायैसप्तदश्यै नमः ।

ॐ सप्तदशाय नमः ।

ॐ सप्तदशाक्षराय नमः ।

ॐ अष्टादशद्वीप पतये नमः ।

ॐ अष्टादशपुराणकृते नमः ।

ॐ अष्टादशौषधीसृष्टये नमः ।

ॐ अष्टादशविधिस्मृताय नमः ।

ॐ अष्टादशलिपिव्यष्टिसमष्टिज्ञानकोविदाय नमः ।

ॐ एकविंशाय पुंसे नमः ।

ॐ एकविंशत्यङ्गुलिपल्लवाय नमः ।

ॐ चतुर्विंशतितत्वात्मने नमः ।

ॐ पञ्चविंशाख्यपुरुषाय नमः ।

ॐ सप्तविंशतितारेशाअय नमः ।

ॐ सप्तविंशति योगकृते नमः ।

ॐ द्वात्रिंशद्भैरवाधीशाय नमः ।

ॐ चतुस्त्रिंशन्महाह्रदाय नमः ।

ॐ षट् त्रिंशत्तत्त्वसंभूतये नमः ।

ॐ अष्टात्रिंशकलातनवे नमः ।

ॐ नमदेकोनपञ्चाशन्मरुद्वर्गनिरर्गलाय नमः ।

ॐ पञ्चाशदक्षरश्रेण्यै नमः ।

ॐ पञ्चाशद् रुद्रविग्रहाय नमः ।

ॐ पञ्चाशद् विष्णुशक्तीशाय नमः ।

ॐ पञ्चाशन्मातृकालयाय नमः ।

ॐ द्विपञ्चाशद्वपुःश्रेण्यै नमः ।

ॐ त्रिषष्ट्यक्षरसंश्रयाय नमः ।

ॐ चतुषष्ट्यर्णनिर्णेत्रे नमः ।

ॐ चतुःषष्टिकलानिधये नमः ।

ॐ चतुःषष्टिमहासिद्धयोगिनीवृन्दवन्दिताय नमः ।

ॐ अष्टषष्टिमहातीर्थक्षेत्रभैरवभावनाय नमः ।

ॐ चतुर्नवतिमन्त्रात्मने नमः ।

ॐ षण्णवत्यधिकप्रभवे नमः ।

ॐ शतानन्दाय नमः ।

ॐ शतधृतये नमः ।

ॐ शतपत्रायतेक्षणाय नमः ।

ॐ शतानीकाय नमः ।

ॐ शतमखाय नमः ।

ॐ शतधारावरायुधाय नमः ।

ॐ सहस्रपत्रनिलयाय नमः ।

ॐ सहस्रफणभूषणाय नमः ।

ॐ सहस्रशीर्ष्णे पुरुषाय नमः ।

ॐ सहस्राक्षाय नमः ।

ॐ सहस्रपदे नमः ।

ॐ सहस्रनाम संस्तुत्याय नमः ।

ॐ सहस्राक्षबलापहाय नमः ।

ॐ दशसहस्रफणभृत्फणिराजकृतासनाय नमः ।

ॐ अष्टाशीतिसहस्राद्यमहर्षि स्तोत्रयन्त्रिताय नमः ।

ॐ लक्षाधीशप्रियाधाराय नमः ।

ॐ लक्ष्याधारमनोमयाय नमः ।

ॐ चतुर्लक्षजपप्रीताय नमः ।

ॐ चतुर्लक्षप्रकाशिताय नमः ।

ॐ चतुरशीतिलक्षाणां जीवानां देहसंस्थिताय नमः ।

ॐ कोटिसूर्यप्रतीकाशाय नमः ।

ॐ कोटिचन्द्रांशुनिर्मलाय नमः ।

ॐ शिवाभवाध्युष्टकोटिविनायकधुरन्धराय नमः ।

ॐ सप्तकोटिमहामन्त्रमन्त्रितावयवद्युतये नमः ।

ॐ त्रयस्त्रिंशत्कोटिसुरश्रेणीप्रणतपादुकाय नमः ।

ॐ अनन्तनाम्ने नमः ।

ॐ अनन्तश्रिये नमः ।

ॐ अनन्तानन्तसौख्यदाय नमः ॥ १०००॥

********************************

॥ श्रीगणपतिस्तवः ॥

श्री गणेशाय नमः ॥

ब्रह्मविष्णुमहेश्वरा ऊचुः।

अजं निर्विकल्पं निराकारमेकं निरालम्बमद्वैतमानन्दपूर्णम् ।

परं निर्गुणं निर्विशेषं निरीहं परं ब्रह्मरूपं गणेशं भजेम ॥ १॥

गुणातीतमाद्यं चिदानन्दरूपं चिदाभासकं सर्वगं ज्ञानगम्यम् ।

मुनिध्येयमाकाशरूपं परेशं परं ब्रह्मरूपं गणेशं भजेम ॥ २॥

जगत्कारणं कारणाज्ञानहीनं सुरादिं सुखादिं युगादिं गणेशम् ।

जगद्व्यापिनं विश्ववन्द्यं सुरेशं परं ब्रह्मरूपं गणेशं भजेम ॥ ३॥

रजोयोगतो ब्रह्मरूपं श्रुतिज्ञं सदा कार्यसक्तं हृदाऽचिन्त्यरूपम् ।

जगत्कारकं सर्वविद्यानिधानं सदा ब्रह्मरूपं गणेशं नताः स्मः ॥ ४॥

सदा सत्त्वयोगं मुदा क्रीडमानं सुरारीन् हरन्तं जगत्पालयन्तम् ।

अनेकावतारं निजाज्ञानहारं सदा विष्णुरूपं गणेशं नताः स्मः ॥ ५॥

तमोयोगिनं रुद्ररूपं त्रिनेत्रं जगद्धारकं तारकं ज्ञानहेतुम् ।

अनेकागमैः स्वं जनं बोधयन्तं सदा शर्वरूपं गणेशं नताः स्मः ॥ ६॥

तमःस्तोमहारं जनाज्ञानहारं त्रयीवेदसारं परब्रह्मपारम् ।

मुनिज्ञानकारं विदूरे विकारं सदा ब्रध्नरूपं गणेशं नताः स्मः॥ ७॥

निजैरौषधैस्तर्पयन्तं करोघैः सुरौघान्कलाभिः सुधास्राविणीभिः ।

दिनेशांशुसन्तापहारं द्विजेशं शशाङ्कस्वरूपं गणेशं नताः स्मः ॥ ८॥

प्रकाशस्वरूपं नभोवायुरूपं विकारादिहेतुं कलाकालभूतम् ।

अनेकक्रियानेकशक्तिस्वरूपं सदा शक्तिरूपं गणेशं नताः स्मः ॥ ९॥

प्रधानस्वरूपं महत्तत्त्वरूपं धरावारिरूपं दिगीशादिरूपम् ।

असत्सत्स्वरूपं जगद्धेतुभूपं सदा विश्वरूपं गणेशं नताः स्मः ॥ १०॥

त्वदीये मनः स्थापयेदङ्घ्रियुग्मे जनो विघ्नसङ्घान्न पीडां लभेत ।

लसत्सूर्यबिम्बे विशाले स्थितेऽयं जनो ध्वान्तबाधां कथं वा लभेत ॥ ११॥

वयं भ्रामिताः सर्वथाऽज्ञानयोगादलब्ध्वा तवाङ्घ्रिं बहून्वर्षपूगान् ।

इदानीमवाप्तास्तवैव प्रसादात्प्रपन्नान्सदा पाहि विश्वम्भराद्य ॥ १२॥

एवं स्तुतो गणेशस्तु सन्तुष्टोऽभून्महामुने ।

कृपया परयोपेतोऽभिधातुं तान् प्रचक्रमे ॥ १३॥

★★★★★★★★

गणपतिस्तवः पाठभेद

★★★★★★★★

श्री गणेशाय नमः ॥

ऋषिरुवाच ॥

अजं निर्विकल्पं निराकारमेकं निरानन्दमानन्दमद्वैतपूर्णम् ।

परं निर्गुणं निर्विशेषं निरीहं परब्रह्मरूपं गणेशं भजेम ॥ १॥

गुणातीतमानं चिदानन्दरूपं चिदाभासकं सर्वगं ज्ञानगम्यम् ।

मुनिध्येयमाकाशरूपं परेशं परब्रह्मरूपं गणेशं भजेम ॥ २॥

जगत्कारणं कारणज्ञानरूपं सुरादिं सुखादिं गुणेशं गणेशम् ।

जगद्व्यापिनं विश्ववन्द्यं सुरेशं परब्रह्मरूपं गणेशं भजेम ॥ ३॥

रजोयोगतो ब्रह्मरूपं श्रुतिज्ञं सदा कार्यसक्तं हृदाऽचिन्त्यरूपम् ।

जगत्कारणं सर्वविद्यानिदानं परब्रह्मरूपं गणेशं नताः स्मः ॥ ४॥

सदा सत्ययोग्यं मुदा क्रीडमानं सुरारीन्हरन्तं जगत्पालयन्तम् ।

अनेकावतारं निजाज्ञानहारं सदा विश्वरूपं गणेशं नमामः ॥ ५॥

तमोयोगिनं रुद्ररूपं त्रिनेत्रं जगद्धारकं तारकं ज्ञानहेतुम् ।

अनेकागमैः स्वं जनं बोधयन्तं सदा सर्वरूपं गणेशं नमामः ॥ ६॥

तमस्स्तोमहारं जनाज्ञानहारं त्रयीवेदसारं परब्रह्मसारम् ।

मुनिज्ञानकारं विदूरे विकारं सदा ब्रह्मरूपं गणेशं नमामः ॥ ७॥

निजैरोषधीस्तर्पयन्तं कराद्यैः सुरौघान्कलाभिः सुधास्राविणीभिः ।

दिनेशांशुसन्तापहारं द्विजेशं शशाङ्कस्वरूपं गणेशं नमामः ॥ ८॥

प्रकाशस्वरूपं नमो वायुरूपं विकारादिहेतुं कलाधाररूपम् ।

अनेकक्रियानेकशक्तिस्वरूपं सदा शक्तिरूपं गणेशं नमामः ॥ ९॥

प्रधानस्वरूपं महत्तत्वरूपं धराचारिरूपं दिगीशादिरूपम् ।

असत्सत्स्वरूपं जगद्धेतुरूपं सदा विश्वरूपं गणेशं नताः स्मः ॥ १०॥

त्वदीये मनः स्थापयेदङ्घ्रियुग्मे जनो विघ्नसङ्घादपीडां लभेत ।

लसत्सूर्यबिम्बे विशाले स्थितोऽयं जनो ध्वान्तपीडां कथं वा लभेत ॥ ११॥

वयं भ्रामिताः सर्वथाऽज्ञानयोगादलब्धास्तवाङ्घ्रिं बहून्वर्षपूगान् ।

इदानीमवाप्तास्तवैव प्रसादात्प्रपन्नान्सदा पाहि विश्वम्भराद्य ॥ १२॥

एवं स्तुतो गणेशस्तु सन्तुष्टोऽभून्महामुने ।

कृपया परयोपेतोऽभिधातुमुपचक्रमे ॥ १३॥

इति श्रीमद्-गर्ग ऋषिकृतो गणपतिस्तवः सम्पूर्णः ॥

************************************

॥ गणपतिस्तोत्रम् ॥

सुवर्णवर्णसुन्दरं सितैकदन्तबन्धुरं

गृहीतपाशकाङ्कुशं वरप्रदाभयप्रदम् । चतुर्भुजं त्रिलोचनं भुजङ्गमोपवीतिनं

प्रफुल्लवारिजासनं भजामि सिन्धुराननम् ॥ १॥

किरीटहारकुण्डलं प्रदीप्तबाहुभूषणं

प्रचण्डरत्नकङ्कणं प्रशोभिताङ्ङ्घ्रयष्टिकम् । प्रभातसूर्यसुन्दराम्बरद्वयप्रधारिणं

सरलहेमनूपुरं प्रशोभिताङ्घ्रिपङ्कजम् ॥ २॥ सुवर्णदण्डमण्डितप्रचण्डचारुचामरं

गृहप्रतीर्णसुन्दरं युगक्षणं प्रमोदितम् ।

कवीन्द्रचित्तरञ्जकं महाविपत्तिभञ्जकं षडक्षरस्वरूपिणं भजेद्गजेन्द्ररूपिणम् ॥ ३॥

विरिञ्चिविष्णुवन्दितं विरूपलोचनस्तुतिं

गिरीशदर्शनेच्छया समर्पितं पराशया ।

निरन्तरं सुरासुरैः सपुत्रवामलोचनैः

महामखेष्टमिष्टकर्मसु (स्मृतं) भजामि तुन्दिलम् ॥ ४॥

मदौघलुब्धचञ्चलार्कमञ्जुगुञ्जितारवं

प्रबुद्धचित्तरञ्जकं प्रमोदकर्णचालकम् ।

अनन्यभक्तिमानवं प्रचण्डमुक्तिदायकं

नमामि नित्यमादरेण वक्रतुण्डनायकम् ॥ ५॥

दारिद्र्यविद्रावणमाशु कामदं स्तोत्रं पठेदेतदजस्रमादरात् ।

पुत्रीकलत्रस्वजनेषु मैत्री पुमान्भवेदेकवरप्रसादात् ॥६॥

इति श्रीमच्छङ्कराचार्यविरचितं गणपतिस्तोत्रं सम्पूर्णम् ।

******************************************

॥ श्री गणपत्यथर्वशीर्ष ॥

॥ शान्ति पाठ ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवा ।

भद्रं पश्येमाक्षभिर्यजत्राः ॥

स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः ।

व्यशेम देवहितं यदायुः ॥

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः ।

स्वस्ति नः पूषा विश्ववेदाः ॥

स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः ।

स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ तन्मामवतु

तद् वक्तारमवतु

अवतु माम्

अवतु वक्तारम्

ॐ शांतिः । शांतिः ॥ शांतिः॥।

॥ उपनिषत् ॥

हरिः ॐ नमस्ते गणपतये ॥

त्वमेव प्रत्यक्षं तत्त्वमसि ॥ त्वमेव केवलं कर्ताऽसि ॥

त्वमेव केवलं धर्ताऽसि ॥ त्वमेव केवलं हर्ताऽसि ॥

त्वमेव सर्वं खल्विदं ब्रह्मासि ॥

त्वं साक्षादात्माऽसि नित्यम् ॥ १॥

॥ स्वरूप तत्त्व ॥

ऋतं वच्मि (वदिष्यामि) ॥ सत्यं वच्मि (वदिष्यामि) ॥ २॥

अव त्वं माम् ॥ अव वक्तारम् ॥ अव श्रोतारम् ॥

अव दातारम् ॥ अव धातारम् ॥

अवानूचानमव शिष्यम् ॥

अव पश्चात्तात् ॥ अव पुरस्तात् ॥

अवोत्तरात्तात् ॥ अव दक्षिणात्तात् ॥

अव चोर्ध्वात्तात् ॥ अवाधरात्तात् ॥

सर्वतो मां पाहि पाहि समंतात् ॥ ३॥

त्वं वाङ्मयस्त्वं चिन्मयः ॥

त्वमानंदमयस्त्वं ब्रह्ममयः ॥

त्वं सच्चिदानंदाद्वितीयोऽसि ॥

त्वं प्रत्यक्षं ब्रह्मासि ॥

त्वं ज्ञानमयो विज्ञानमयोऽसि ॥ ४॥

सर्वं जगदिदं त्वत्तो जायते ॥

सर्वं जगदिदं त्वत्तस्तिष्ठति ॥

सर्वं जगदिदं त्वयि लयमेष्यति ॥

सर्वं जगदिदं त्वयि प्रत्येति ॥

त्वं भूमिरापोऽनलोऽनिलो नभः ॥

त्वं चत्वारि वाक्पदानि ॥ ५॥

त्वं गुणत्रयातीतः त्वमवस्थात्रयातीतः ॥

त्वं देहत्रयातीतः ॥ त्वं कालत्रयातीतः ॥

त्वं मूलाधारस्थितोऽसि नित्यम् ॥

त्वं शक्तित्रयात्मकः ॥

त्वां योगिनो ध्यायंति नित्यम् ॥

त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वं

इन्द्रस्त्वं अग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चंद्रमास्त्वं

ब्रह्मभूर्भुवःस्वरोम् ॥ ६॥

॥ गणेश मंत्र ॥

गणादिं पूर्वमुच्चार्य वर्णादिं तदनंतरम् ॥

अनुस्वारः परतरः ॥ अर्धेन्दुलसितम् ॥ तारेण ऋद्धम् ॥

एतत्तव मनुस्वरूपम् ॥ गकारः पूर्वरूपम् ॥

अकारो मध्यमरूपम् ॥ अनुस्वारश्चान्त्यरूपम् ॥

बिन्दुरुत्तररूपम् ॥ नादः संधानम् ॥

संहितासंधिः ॥ सैषा गणेशविद्या ॥

गणकऋषिः ॥ निचृद्गायत्रीच्छंदः ॥

गणपतिर्देवता ॥ ॐ गं गणपतये नमः ॥ ७॥

॥ गणेश गायत्री ॥

एकदंताय विद्महे । वक्रतुण्डाय धीमहि ॥

तन्नो दंतिः प्रचोदयात् ॥ ८॥

॥ गणेश रूप ॥

एकदंतं चतुर्हस्तं पाशमंकुशधारिणम् ॥

रदं च वरदं हस्तैर्बिभ्राणं मूषकध्वजम् ॥

रक्तं लंबोदरं शूर्पकर्णकं रक्तवाससम् ॥

रक्तगंधानुलिप्तांगं रक्तपुष्पैः सुपूजितम् ॥

भक्तानुकंपिनं देवं जगत्कारणमच्युतम् ॥

आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम् ॥

एवं ध्यायति यो नित्यं स योगी योगिनां वरः ॥ ९॥

॥ अष्ट नाम गणपति ॥

नमो व्रातपतये । नमो गणपतये । नमः प्रमथपतये ।

नमस्तेऽस्तु लंबोदरायैकदंताय ।

विघ्ननाशिने शिवसुताय । श्रीवरदमूर्तये नमो नमः ॥ १०॥

॥ फलश्रुति ॥

एतदथर्वशीर्षं योऽधीते ॥ स ब्रह्मभूयाय कल्पते ॥

स सर्वतः सुखमेधते ॥ स सर्व विघ्नैर्नबाध्यते ॥

स पंचमहापापात्प्रमुच्यते ॥

सायमधीयानो दिवसकृतं पापं नाशयति ॥

प्रातरधीयानो रात्रिकृतं पापं नाशयति ॥

सायंप्रातः प्रयुंजानो अपापो भवति ॥

सर्वत्राधीयानोऽपविघ्नो भवति ॥

धर्मार्थकाममोक्षं च विंदति ॥

इदमथर्वशीर्षमशिष्याय न देयम् ॥

यो यदि मोहाद्दास्यति स पापीयान् भवति

सहस्रावर्तनात् यं यं काममधीते

तं तमनेन साधयेत् ॥ ११॥

अनेन गणपतिमभिषिंचति स वाग्मी भवति ॥

चतुर्थ्यामनश्नन् जपति स विद्यावान् भवति ।

स यशोवान् भवति ॥

इत्यथर्वणवाक्यम् ॥ ब्रह्माद्याचरणं विद्यात्

न बिभेति कदाचनेति ॥ १२॥

यो दूर्वांकुरैर्यजति स वैश्रवणोपमो भवति ॥

यो लाजैर्यजति स यशोवान् भवति ॥

स मेधावान् भवति ॥

यो मोदकसहस्रेण यजति

स वाञ्छितफलमवाप्नोति ॥

यः साज्यसमिद्भिर्यजति

स सर्वं लभते स सर्वं लभते ॥ १३॥

अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा

सूर्यवर्चस्वी भवति ॥

सूर्यग्रहे महानद्यां प्रतिमासंनिधौ

वा जप्त्वा सिद्धमंत्रो भवति ॥

महाविघ्नात्प्रमुच्यते ॥ महादोषात्प्रमुच्यते ॥

महापापात् प्रमुच्यते ॥

स सर्वविद्भवति स सर्वविद्भवति ॥

य एवं वेद इत्युपनिषत् ॥ १४॥

॥ शान्ति मंत्र ॥

ॐ सहनाववतु ॥ सहनौभुनक्तु ॥

सह वीर्यं करवावहै ॥

तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवा ।

भद्रं पश्येमाक्षभिर्यजत्राः ॥

स्थिरैरंगैस्तुष्टुवांसस्तनूभिः ।

व्यशेम देवहितं यदायुः ॥

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः ।

स्वस्ति नः पूषा विश्ववेदाः ॥

स्वस्तिनस्ताक्ष्र्यो अरिष्टनेमिः ।

स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शांतिः । शांतिः ॥ शांतिः ॥।

॥ इति श्रीगणपत्यथर्वशीर्षं समाप्तम् ॥

*********************************

॥ श्रीगणाधिपति पञ्चरत्नस्तोत्रम् ॥

ॐ सरागिलोकदुर्लभं विरागिलोकपूजितं

सुरासुरैर्नमस्कृतं जरापमृत्युनाशकम् ।

गिरा गुरुं श्रिया हरिं जयन्ति यत्पदार्चकाः

नमामि तं गणाधिपं कृपापयः पयोनिधिम् ॥ १॥

गिरीन्द्रजामुखाम्बुज प्रमोददान भास्करं

करीन्द्रवक्त्रमानताघसङ्घवारणोद्यतम् ।

सरीसृपेश बद्धकुक्षिमाश्रयामि सन्ततं

शरीरकान्ति निर्जिताब्जबन्धुबालसन्ततिम् ॥ २॥

शुकादिमौनिवन्दितं गकारवाच्यमक्षरं

प्रकाममिष्टदायिनं सकामनम्रपङ्क्तये ।

चकासतं चतुर्भुजैः विकासिपद्मपूजितं

प्रकाशितात्मतत्वकं नमाम्यहं गणाधिपम् ॥ ३॥

नराधिपत्वदायकं स्वरादिलोकनायकं

ज्वरादिरोगवारकं निराकृतासुरव्रजम् ।

कराम्बुजोल्लसत्सृणिं विकारशून्यमानसैः

हृदासदाविभावितं मुदा नमामि विघ्नपम् ॥ ४॥

श्रमापनोदनक्षमं समाहितान्तरात्मनां

सुमादिभिः सदार्चितं क्षमानिधिं गणाधिपम् ।

रमाधवादिपूजितं यमान्तकात्मसम्भवं

शमादिषड्गुणप्रदं नमामि तं विभूतये ॥ ५॥

गणाधिपस्य पञ्चकं नृणामभीष्टदायकं

प्रणामपूर्वकं जनाः पठन्ति ये मुदायुताः ।

भवन्ति ते विदां पुरः प्रगीतवैभवाजवात्

चिरायुषोऽधिकः श्रियस्सुसूनवो न संशयः ॥ ॐ ॥

॥ इति दक्षिणाम्नाय श्रिङ्गेरी श्रीशारदापीठाधिपति

शङ्कराचार्य जगद्गुरुवर्यो श्री सच्चिदानन्द

शिवाभिनव नृसिंहभारती महास्वामिभिः विरचितम्

श्री गणाधिपति पञ्चरत्न स्तोत्रम् सम्पूर्णम् ॥

********************************

॥ योगशान्तिप्रदं गणाधीशस्तोत्रम् ॥

श्रीगणेशाय नमः ।

कर्दम उवाच ।

केनोपायेन भो वत्स योगशान्तिः प्रलभ्यते ।

तदर्थं पूजनीयं किं तद्वदस्व जनार्दन ॥ १॥

कपिल उवाच ।

गणेशभजनं मुख्यं शान्तियोगप्रदं मतम् ।

योगाकारस्वरूपं तं ब्रह्मेशं भज मानद ॥ २॥

सर्वादिः सर्वपूज्योऽयं सर्वाधारो महामुने ।

य आदिः प्रलयान्ते स तिष्ठति शास्त्रसंमतम् ॥ ३॥

ज्येष्ठराजं गणेशानं वेदेषु प्रवदन्ति तम् ।

गणाः समूहरूपाश्च तेषां स्वामी प्रकथ्यते ॥ ४॥

नानाजगत्स्वरूपं वैदेहरूपं कृतं मुने ।

नानाब्रह्ममयं तेन शिरः कृतं महात्मना ॥ ५॥

यस्माज्जातमिदं यत्र ह्यन्ते गच्छति महामते ।

तद्वेदे गजशब्दाख्यं शिरस्तेन गजाननः ॥ ६॥

त्रिविधं भेदयुक्तं यदखण्डं वै तुरीयकम् ।

तयोर्योगे गणेशोऽयं देहमस्तकयोर्गतः ॥ ७॥

चित्तं पञ्चविधं प्रोक्तं तत्र मोहश्च पञ्चधा ।

मोहरूपा महासिद्धिर्बुद्धिश्च मोहधारका ॥ ८॥

तयोः स्वामी गणाधीशश्चित्ते नित्यं प्रतिष्ठितः ।

चिन्तामणिर्महाभागो लभ्यते योगसेवया ॥ ९॥

पञ्चधा चित्तमुत्सृज्य तदैश्वर्यं तथैव च ।

योगः शान्तिमयः सद्यः प्राप्यते ब्रह्मणस्पतिः ॥ १०॥

तस्मात्त्वं भज मन्त्रेणैकाक्षरेण महामुने ।

तेन तुष्टो गणेशानो योगं दास्यति शान्तिदम् ॥ ११॥

इति मुद्गलपुराणान्तर्गतं श्रीगणाधीशस्तोत्रं समाप्तम् ।

************************************

॥ श्रीगणाधीशस्तोत्रं शिवशक्तिकृतम् ॥

गणाधीशस्तोत्रं शिवशक्तिकृतम् ।

गणाधीशस्तोत्रं शिवशक्तिकृतम् ।

श्रीगणेशाय नमः ।

श्रीशक्तिशिवावूचतुः ।

नमस्ते गणनाथाय गणानां पतये नमः ।

भक्तिप्रियाय देवेश भक्तेभ्यः सुखदायक ॥ १॥

स्वानन्दवासिने तुभ्यं सिद्धिबुद्धिवराय च ।

नाभिशेषाय देवाय ढुण्ढिराजाय  ते नमः ॥ २॥

वरदाभयहस्ताय नमः परशुधारिणे ।

नमस्ते सृणिहस्ताय नाभिशेषाय ते नमः ॥ ३॥

अनामयाय सर्वाय सर्वपूज्याय ते नमः ।

सगुणाय नमस्तुभ्यं ब्रह्मणे निर्गुणाय च ॥ ४॥

ब्रह्मभ्यो ब्रह्मदात्रे  च गजानन नमोऽस्तु ते ।

आदिपूज्याय ज्येष्ठाय ज्येष्ठराजाय ते नमः ॥ ५॥

मात्रे पित्रे च सर्वेषां हेरम्बाय नमो नमः ।

अनादये च विघ्नेश विघ्नकर्त्रे नमो नमः ॥ ६॥

विघ्नहर्त्रे स्वभक्तानां लम्बोदर नमोऽस्तु ते ।

त्वदीयभक्तियोगेन योगीशाः शान्तिमागताः ॥ ७॥

किं स्तुवो योगरूपं तं प्रणमावश्च विघ्नपम् ।

तेन तुष्टो भव स्वामिन्नित्युक्त्वा तं प्रणेमतुः ॥ ८॥

तावुत्थाप्य  गणाधीश उवाच तौ महेश्वरौ ।

श्रीगणेश उवाच ।

भवत्कृतमिदं स्तोत्रं मम भक्तिविवर्धनम् ॥ ९॥

भविष्यति च सौख्यस्य पठते शुण्वते प्रदम् ।

भुक्तिमुक्तिप्रदं चैव पुत्रपौत्रादिकं तथा ॥ १०॥

धनधान्यादिकं सर्वं लभते तेन निश्चितम् ।

इति शिवशक्तिकृतं श्रीगणाधीशस्तोत्रं समाप्तम् ॥

***********************************

॥ श्रीगणाध्यक्षस्तोत्रं ईक्ष्वाकुकृत ॥

भरद्वाज उवाच

कथं स्तुतो गणाध्यक्षस्तेन राज्ञा महात्मना ।

यथा तेन तपस्तप्तं तन्मे वद महामते ॥ १॥

सूत उवाच

चतुर्थीदिवसे राजा स्नात्वा त्रिषवणं द्विज ।

रक्ताम्बरधरो भूत्वा रक्तगन्धानुलेपनः ॥ २॥

सुरक्तकुसुमैर्हृद्यैर्विनायकमथार्चयत् ।

रक्तचन्दनतोयेन स्नानपूर्वं यथाविधि ॥ ३॥

विलिप्य रक्तगन्धेन रक्तपुष्पैः प्रपूजयत् ।

ततोऽसौ दत्तवान् धूपमाज्ययुक्तं सचन्दनम् ।

नैवेद्यं चैव हारिद्रं गुडखण्डघृतप्लुतम् ॥ ४॥

एवं सुविधिना पूज्य विनायकमथास्तवीत् ।

इक्ष्वाकुरुवाच

नमस्कृत्य महादेवं स्तोष्येऽहं तं विनायकम् ॥ ५॥

महागणपतिं शूरमजितं ज्ञानवर्धनम् ।

एकदन्तं द्विदन्तं च चतुर्दन्तं चतुर्भुजम् ॥ ६॥

त्र्यक्षं त्रिशूलहस्तं च रक्तनेत्रं वरप्रदम् ।

आम्बिकेयं शूर्पकर्णं प्रचण्डं च विनायकम् ॥ ७॥

आरक्तं दण्डिनं चैव वह्निवक्त्रं हुतप्रियम् ।

अनर्चितो विघ्नकरः सर्वकार्येषु यो नृणाम् ॥ ८॥

तं नमामि गणाध्यक्षं भीममुग्रमुमासुतम् ।

मदमत्तं विरूपाक्षं भक्तिविघ्ननिवारकम् ॥ ९॥

सूर्यकोटिप्रतीकाशं भिन्नाञ्जनसमप्रभम् ।

बुद्धं सुनिर्मलं शान्तं नमस्यामि विनायकम् ॥ १०॥

नमोऽस्तु गजवक्त्राय गणानां पतये नमः ।

मेरुमन्दररूपाय नमः कैलासवासिने ॥ ११॥

विरूपाय नमस्तेऽस्तु नमस्ते ब्रह्मचारिणे ।

भक्तस्तुताय देवाय नमस्तुभ्यं विनायक ॥ १२॥

त्वया पुराण पूर्वेषां देवानां कार्यसिद्धये ।

गजरूपं समास्थाय त्रासिताः सर्वदानवाः ॥ १३॥

ऋषीणां देवतानां च नायकत्वं प्रकाशितम् ।

यतस्ततः सुरैरग्रे पूज्यसे त्वं भवात्मज ॥ १४॥

त्वामाराध्य गणाध्यक्षं सर्वज्ञं कामरूपिणम् ।

कार्यार्थं रक्तकुसुमै रक्तचन्दनवारिभिः ॥ १५॥

रक्ताम्बरधरो भूत्वा चतुर्थ्यामर्चयेज्जपेत् ।

त्रिकालमेककालं वा पूजयेन्नियताशनः ॥ १६॥

राजानं राजपुत्रं वा राजमन्त्रिणमेव वा ।

राज्यं च सर्वविघ्नेश वशं कुर्यात् सराष्ट्रकम् ॥ १७॥

अविघ्नं तपसो मह्यं कुरु नौमि विनायक ।

मयेत्थं संस्तुतो भक्त्या पूजितश्च विशेषतः ॥ १८॥

यत्फलं सर्वतीर्थेषु सर्वयज्ञेषु यत्फलम् ।

तत्फलं पूर्णमाप्नोति स्तुत्वा देवं विनायकम् ॥ १९॥

विषमं न भवेत् तस्य न च गच्छेत् पराभवम् ।

न च विघ्नो भवेत् तस्य जातो जातिस्मरो भवेत् ॥ २०॥

य इदं पठते स्तोत्रं षड्भिर्मासैर्वरं लभेत् ।

संवत्सरेण सिद्धिं च लभते नात्र संशयः ॥ २१॥

सूत उवाच

एवं स्तुत्वा पुरा राजा गणाध्यक्षं द्विजोत्तम ।

तापसं वेषमास्थाय तपश्चर्तुं गतो वनम् ॥ २२॥

उत्सृज्य वस्त्रं नागत्वक्सदृशं बहुमूल्यकम् ।

कठिनां तु त्वचं वाक्षीं कट्यां धत्ते नृपोत्तमः ॥ २३॥

तथा रत्नानि दिव्यानि वलयानि निरस्य तु ।

अक्षसूत्रमलङ्कारं फलैः पद्मस्य शोभनम् ॥ २४॥

तथोत्तमाङ्गे मुकुटं रत्नहाटकशोभितम् ।

त्यक्त्वा जटाकलापं तु तपोऽर्थे विभृयान्नृपः ॥ २५॥

इति ।

नरसिंहपुराण अध्याय २५ श्लोकसंख्या ७२

श्रीनरसिंहपुराणे इक्ष्वाकुचरिते पञ्चविंशोऽध्यायः ॥ २५॥

************************************

॥ श्रीगणेशकवचम् ॥

श्रीगणेशाय नमः ॥

गौर्युवाच ।

एषोऽतिचपलो दैत्यान्बाल्येऽपि नाशयत्यहो ।

अग्रे किं कर्म कर्तेति न जाने मुनिसत्तम ॥ १॥

दैत्या नानाविधा दुष्टाः साधुदेवद्रुहः खलाः ।

अतोऽस्य कण्ठे किंचित्त्वं रक्षार्थं बद्धुमर्हसि ॥ २॥

मुनिरुवाच ।

ध्यायेत्सिंहहतं विनायकममुं दिग्बाहुमाद्ये युगे

त्रेतायां तु मयूरवाहनममुं षड्बाहुकं सिद्धिदम् ।

द्वापारे तु गजाननं युगभुजं रक्ताङ्गरागं विभुम्

तुर्ये तु द्विभुजं सिताङ्गरुचिरं सर्वार्थदं सर्वदा ॥ ३॥

विनायकः शिखां पातु परमात्मा परात्परः ।

अतिसुन्दरकायस्तु मस्तकं सुमहोत्कटः ॥ ४॥

ललाटं कश्यपः पातु भृयुगं तु महोदरः ।

नयने भालचन्द्रस्तु गजास्यस्त्वोष्ठपल्लवौ ॥ ५॥

जिह्वां पातु गणक्रीडश्चिबुकं गिरिजासुतः ।

वाचं विनायकः पातु दन्तान् रक्षतु विघ्नहा ॥ ६॥

श्रवणौ पाशपाणिस्तु नासिकां चिन्तितार्थदः ।

गणेशस्तु मुखं कण्ठं पातु देवो गणञ्जयः ॥ ७॥

स्कन्धौ पातु गजस्कन्धः स्तनौ विघ्नविनाशनः ।

हृदयं गणनाथस्तु हेरंबो जठरं महान् ॥ ८॥

धराधरः पातु पार्श्वौ पृष्ठं विघ्नहरः शुभः ।

लिङ्गं गुह्यं सदा पातु वक्रतुण्डो महाबलः ॥ ९॥

गणक्रीडो जानुसङ्घे ऊरु मङ्गलमूर्तिमान् ।

एकदन्तो महाबुद्धिः पादौ गुल्फौ सदाऽवतु ॥ १०॥

क्षिप्रप्रसादनो बाहू पाणी आशाप्रपूरकः ।

अङ्गुलीश्च नखान्पातु पद्महस्तोऽरिनाशनः ॥ ११॥

सर्वाङ्गानि मयूरेशो विश्वव्यापी सदाऽवतु ।

अनुक्तमपि यत्स्थानं धूम्रकेतुः सदाऽवतु ॥ १२॥

आमोदस्त्वग्रतः पातु प्रमोदः पृष्ठतोऽवतु ।

प्राच्यां रक्षतु बुद्धीश आग्नेयां सिद्धिदायकः ॥१३॥

दक्षिणास्यामुमापुत्रो नैरृत्यां तु गणेश्वरः ।

प्रतीच्यां विघ्नहर्ताऽव्याद्वायव्यां गजकर्णकः ॥ १४॥

कौबेर्यां निधिपः पायादीशान्यामीशनन्दनः ।

दिवाऽव्यादेकदन्तस्तु रात्रौ सन्ध्यासु विघ्नहृत् ॥ १५॥

राक्षसासुरवेतालग्रहभूतपिशाचतः ।

पाशाङ्कुशधरः पातु रजःसत्त्वतमः स्मृतिः ॥ १६॥

ज्ञानं धर्मं च लक्ष्मीं च लज्जां कीर्तिं तथा कुलम् ।

वपुर्धनं च धान्यं च गृहान्दारान्सुतान्सखीन् ॥ १७॥

सर्वायुधधरः पौत्रान् मयूरेशोऽवतात्सदा ।

कपिलोऽजादिकं पातु गजाश्वान्विकटोऽवतु ॥ १८॥

भूर्जपत्रे लिखित्वेदं यः कण्ठे धारयेत्सुधीः ।

न भयं जायते तस्य यक्षरक्षःपिशाचतः ॥ १८॥

त्रिसन्ध्यं जपते यस्तु वज्रसारतनुर्भवेत् ।

यात्राकाले पठेद्यस्तु निर्विघ्नेन फलं लभेत् ॥ २०॥

युद्धकाले पठेद्यस्तु विजयं चाप्नुयाद्द्रुतम् ।

मारणोच्चाटकाकर्षस्तम्भमोहनकर्मणि ॥ २१॥

सप्तवारं जपेदेतद्दिनानामेकविंशतिम् ।

तत्तत्फलवाप्नोति साधको नात्रसंशयः ॥२२॥

एकविंशतिवारं च पठेत्तावद्दिनानि यः ।

कारागृहगतं सद्योराज्ञा वध्यं च मोचयेत् ॥ २३॥

राजदर्शनवेलायां पठेदेतत्त्रिवारतः ।

स राजसं वशं नीत्वा प्रकृतीश्च सभां जयेत् ॥ २४॥

इदं गणेशकवचं कश्यपेन समीरितम् ।

मुद्गलाय च ते नाथ माण्डव्याय महर्षये ॥ २५॥

मह्यं स प्राह कृपया कवचं सर्वसिद्धिदम् ।

न देयं भक्तिहीनाय देयं श्रद्धावते शुभम् ॥ २६॥

यस्यानेन कृता रक्षा न बाधास्य भवेत्क्वचित् ।

राक्षसासुरवेतालदैत्यदानवसम्भवा ॥ २७॥

इति श्रीगणेशपुराणे उत्तरखण्डे बालक्रीडायां

षडशीतितमेऽध्याये गणेशकवचं सम्पूर्णम् ॥

********************************

॥ श्रीगणेश गकारसहस्रनामावली ॥

॥ ॐ श्री महागणपतये नमः ॥

ॐ गणेश्वराय नमः ।

ॐ गणाध्यक्षाय नमः ।

ॐ गणाराध्याय नमः ।

ॐ गणप्रियाय नमः ।

ॐ गणनाथाय नमः । ५।

ॐ गणस्वामिने नमः ।

ॐ गणेशाय नमः ।

ॐ गणनायकाय नमः ।

ॐ गणमूर्तये नमः ।

ॐ गणपतये नमः । १०।

ॐ गणत्रात्रे नमः ।

ॐ गणंजयाय नमः ।

ॐ गणपाय नमः ।

ॐ गणक्रीडाय नमः ।

ॐ गणदेवाय नमः । १५।

ॐ गणाधिपाय नमः ।

ॐ गणज्येष्ठाय नमः ।

ॐ गणश्रेष्ठाय नमः ।

ॐ गणप्रेष्ठाय नमः ।

ॐ गणाधिराजाय नमः । २०।

ॐ गणराजे नमः ।

ॐ गणगोप्त्रे नमः ।

ॐ गणाङ्गाय नमः ।

ॐ गणदैवताय नमः ।

ॐ गणबंधवे नमः । २५।

ॐ गणसुहृदे नमः ।

ॐ गणाधीशाय नमः ।

ॐ गणप्रदाय नमः ।

ॐ गणप्रियसखाय नमः ।

ॐ गणप्रियसुहृदे नमः । ३०।

ॐ गणप्रियरतोनित्याय नमः ।

ॐ गणप्रीतिविवर्धनाय नमः ।

ॐ गणमण्डलमध्यस्थाय नमः ।

ॐ गणकेलिपरायणाय नमः ।

ॐ गणाग्रण्ये नमः । ३५।

ॐ गणेशाय नमः ।

ॐ गणगीताय नमः ।

ॐ गणोच्छ्रयाय नमः ।

ॐ गण्याय नमः ।

ॐ गणहिताय नमः । ४०।

ॐ गर्जद्गणसेनाय नमः ।

ॐ गणोद्यताय नमः ।

ॐ गणप्रीतिप्रमतनाय नमः ।

ॐ गणप्रीत्यपहारकाय नमः ।

ॐ गणनार्हाय नमः । ४५।

ॐ गणप्रौढाय नमः ।

ॐ गणभर्त्रे नमः ।

ॐ गणप्रभवे नमः ।

ॐ गणसेनाय नमः ।

ॐ गणचराय नमः । ५०।

ॐ गणप्राज्ञाय नमः ।

ॐ गणैकराजे नमः ।

ॐ गणाग्र्याय नमः ।

ॐ गण्यनाम्ने नमः ।

ॐ गणपालनतत्पराय नमः । ५५।

ॐ गणजिते नमः ।

ॐ गणगर्भस्थाय नमः ।

ॐ गणप्रवणमानसाय नमः ।

ॐ गणगर्वपरिहर्त्रे नमः ।

ॐ गणाय नमः । ६०।

ॐ गणनमस्कृते नमः ।

ॐ गणार्चितांघ्रियुगलाय नमः ।

ॐ गणरक्षणकृते नमः ।

ॐ गणध्याताय नमः ।

ॐ गणगुरवे नमः । ६५।

ॐ गणप्रणयतत्पराय नमः ।

ॐ गणागणपरित्रात्रे नमः ।

ॐ गणादिहरणोदराय नमः ।

ॐ गणसेतवे नमः ।

ॐ गणनाथाय नमः । ७०।

ॐ गणकेतवे नमः ।

ॐ गणाग्रगाय नमः ।

ॐ गणहेतवे नमः ।

ॐ गणग्राहिणे नमः ।

ॐ गणानुग्रहकारकाय नमः । ७५।

ॐ गणागणानुग्रहभुवे नमः ।

ॐ गणागणवरप्रदाय नमः ।

ॐ गणस्तुताय नमः ।

ॐ गणप्राणाय नमः ।

ॐ गणसर्वस्वदायकाय नमः । ८०।

ॐ गणवल्लभमूर्तये नमः ।

ॐ गणभूतये नमः ।

ॐ गणेष्टदाय नमः ।

ॐ गणसौख्यप्रदाय नमः ।

ॐ गणदुःखप्रणाशनाय नमः । ८५।

ॐ गणप्रथितनाम्ने नमः ।

ॐ गणाभीष्टकराय नमः ।

ॐ गणमान्याय नमः ।

ॐ गणख्याताअय नमः ।

ॐ गणवीताय नमः । ९०।

ॐ गणोत्कटाय नमः ।

ॐ गणपालाय नमः ।

ॐ गणवराय नमः ।

ॐ गणगौरवदाय नमः ।

ॐ गणगर्जितसंतुष्टाय नमः । ९५।

ॐ गणस्वच्छंदगाय नमः ।

ॐ गणराजाय नमः ।

ॐ गणश्रीदाय नमः ।

ॐ गणभीतिहराय नमः ।

ॐ गणमूर्धाभिषिक्ताय नमः । १००।

ॐ गणसैन्यपुरःसराय नमः ।

ॐ गुणातीताय नमः ।

ॐ गुणमयाय नमः ।

ॐ गुणत्रयविभगकृते नमः ।

ॐ गुणिने नमः । १०५।

ॐ गुणकृतिधराय नमः ।

ॐ गुणशालिने नमः ।

ॐ गुणप्रियाय नमः ।

ॐ गुणपूर्णाय नमः ।

ॐ गुणभोधये नमः । ११०।

ॐ गुण भाजे नमः ।

ॐ गुणदूरगाय नमः ।

ॐ गुणागुणवपुषे नमः ।

ॐ गुणशरीराय नमः ।

ॐ गुणमण्डिताय नमः । ११५।

ॐ गुणस्रष्ट्रे नमः ।

ॐ गुणेशाय नमः ।

ॐ गुणेशानाय नमः ।

ॐ गुणेश्वराय नमः ।

ॐ गुणसृष्टजगत्संगाय नमः । १२०।

ॐ गुणसंघाय नमः ।

ॐ गुणैकराजे नमः ।

ॐ गुणप्रविष्टाय नमः ।

ॐ गुणभुवे नमः ।

ॐ गुणीकृतचराचराय नमः । १२५।

ॐ गुणप्रवणसंतुष्टाय नमः ।

ॐ गुणहीनपराङ्मुखाय नमः ।

ॐ गुणैकभुवे नमः ।

ॐ गुणश्रेष्टाय नमः ।

ॐ गुणज्येष्टाय नमः । १३०।

ॐ गुणप्रभवे नमः ।

ॐ गुणज्ञाय नमः ।

ॐ गुणसंपूज्याय नमः ।

ॐ गुणप्रणतपादाब्जाय नमः ।

ॐ गुणिगीताय नमः । १३५।

ॐ गुणोज्ज्वलाय नमः ।

ॐ गुणवते नमः ।

ॐ गुणसंपन्नाय नमः ।

ॐ गुणानन्दितमानसाय नमः ।

ॐ गुणसंचारचतुराय नमः । १४०।

ॐ गुणसंचयसुंदराय नमः ।

ॐ गुणगौराय नमः ।

ॐ गुणाधाराय नमः ।

ॐ गुणसंवृतचेतनाय नमः ।

ॐ गुणकृते नमः । १४५।

ॐ गुणभृते नमः ।

ॐ गुण्याय नमः ।

ॐ गुणाग्रयाय नमः ।

ॐ गुणपारदृशे नमः ।

ॐ गुणप्रचारिणे नमः । १५०।

ॐ गुणयुजे नमः ।

ॐ गुणागुणविवेककृते नमः ।

ॐ गुणाकराय नमः ।

ॐ गुणप्रवणवर्धनाय नमः ।

ॐ गुणगूढचराय नमः । १५५।

ॐ गौणसर्वसंसारचेष्टिताय नमः । ॐ गुणदक्षिणसौहार्दाय नमः ।

ॐ गुणदक्षिणतत्त्वविदे नमः ।

ॐ गुणहारिणे नमः । १६०।

ॐ गुणकलाय नमः ।

ॐ गुणसंघसखाय नमः ।

ॐ गुणस,न्स्कृतसंसाराय नमः ।

ॐ गुणतत्त्वविवेकाय नमः ।

ॐ गुणगर्वधराय नमः । १६५।

ॐ गौणसुखदुःखोदयाय नमः ।

ॐ गुणाय नमः ।

ॐ गुणाधीशाय नमः ।

ॐ गुणालयाय नमः ।

ॐ गुणवीक्षणालालसाय नमः । १७०।

ॐ गुणगौरवदात्रे नमः ।

ॐ गुणदात्रे नमः ।

ॐ गुणप्रभ्वे नमः ।

ॐ गुणकृते नमः ।

ॐ गुणसंबोधाय नमः । १७५।

ॐ गुणभुजे नमः ।

ॐ गुणबंधनाय नमः ।

ॐ गुणहृद्याय नमः ।

ॐ गुणस्थायिने नमः ।

ॐ गुणदायिने नमः । १८०।

ॐ गुणोत्कटाय नमः ।

ॐ गुणचक्रचराय नमः ।

ॐ गुणावताराय नमः ।

ॐ गुणबांधवाय नमः।

ॐ गुणबंधवे नमः। १८५।

ॐ गुणप्रज्ञाय नमः।

ॐ गुणप्राज्ञाय नमः।

ॐ गुणालयाय नमः।

ॐ गुणधात्रे नमः।

ॐ गुणप्राणाय नमः। १९०।

ॐ गुणगोपाय नमः।

ॐ गुणाश्रयाय नमः।

ॐ गुणयायिने नमः।

ॐ गुणदायिने नमः।

ॐ गुणपाय नमः। १९५।

ॐ गुणपालकाय नमः।

ॐ गुणहृततनवे नमः।

ॐ गौणाय नमः।

ॐ गीर्वाणाय नमः।

ॐ गुणगौरवाय नमः। २००।

ॐ गुणवत्पूजितपदाय नमः।

ॐ गुणवत्प्रीतिदाय नमः।

ॐ गुणवते नमः।

ॐ गीतकीर्तये नमः।

ॐ गुणवद्बद्धसौहृदाय नमः। २०५।

ॐ गुणवद्वरदाय नमः।

ॐ गुणवत्प्रतिपालकाय नमः।

ॐ गुणवत्गुणसंतुष्टाय नमः।

ॐ गुणवद्रचितद्रवाय नमः।

ॐ गुणवद्रक्षणपराय नमः । २१०।

ॐ गुणवात्प्रणयप्रियाय नमः ।

ॐ गुणवच्चक्रसंचाराय नमः ।

ॐ गुणवत्कीर्तिवर्धनाय नमः ।

ॐ गुणवद्गुणचित्तस्थाय नमः ।

ॐ गुणवद्गुणरक्षणाय नमः । २१५।

ॐ गुणवत्पोषणकराय नमः ।

ॐ गुणवच्छत्रुसूदनाय नमः ।

ॐ गुणवत्सिद्धिदात्रे नमः ।

ॐ गुणवद्गौरवप्रदाय नमः ।

ॐ गुणवत्प्रणवस्वांताय नमः । २२०।

ॐ गुणवद्गुणभूषणाय नमः ।

ॐ गुणवत्कुलविद्वेषि विनाशकरण-

क्षमाय नमः ।

ॐ गुणिस्तुतगुणाय नमः ।

ॐ गर्जत्प्रलयांबुदनिःस्वनाय नमः ।

ॐ गजाय नमः । २२५।

ॐ गजाननाय नमः ।

ॐ गजपतये नमः ।

ॐ गर्जन्नागयुद्धविशारदाय नमः ।

ॐ गजकर्णाय नमः ।

ॐ गजराजाय नमः । २३०।

ॐ गजाननाय नमः ।

ॐ गजरूपधराय नमः ।

ॐ गर्जते नमः ।

ॐ गजयूथोद्धुरध्वनये नमः ।

ॐ गजाधीशाय नमः । २३५।

ॐ गजाधराय नमः ।

ॐ गजासुरजयोद्‌धुरय नमः ।

ॐ गजदंताय नमः ।

ॐ गजवराय नमः ।

ॐ गजकुंभाय नमः । २४०।

ॐ गजध्वनये नमः ।

ॐ गजमायाय नमः ।

ॐ गजमयाय नमः ।

ॐ गजश्रिये नमः ।

ॐ गजगर्जिताय नमः । २४५।

ॐ गजामयहराय नमः ।

ॐ गजपुष्टिप्रदाय नमः ।

ॐ गजोत्पत्तये नमः ।

ॐ गजत्रात्रे नमः ।

ॐ गजहेतवे नमः । २५०।

ॐ गजाधिपाय नमः ।

ॐ गजमुख्याय नमः ।

ॐ गजकुलप्रवराय नमः ।

ॐ गजदैत्यघ्ने नमः ।

ॐ गजकेतवे नमः । २५५।

ॐ गजाध्यक्षाय नमः ।

ॐ गजसेतवे नमः ।

ॐ गजाकृतये नमः ।

ॐ गजवंद्याय नमः ।

ॐ गजप्राणाय नमः । २६०।

ॐ गजसेव्याय नमः।

ॐ गजप्रभवे नमः।

ॐ गजमत्ताय नमः।

ॐ गजेशानाय नमः।

ॐ गजेशाय नमः। २६५।

ॐ गजपुंगवाय नमः।

ॐ गजदंतधराअय नमः।

ॐ गर्जन्मधुपाय नमः।

ॐ गजवेषभृते नमः।

ॐ गजच्छद्मने नमः। २७०।

ॐ गजाग्रस्थाय नमः।

ॐ गजयायिने नमः।

ॐ गजाजयाय नमः।

ॐ गजराजे नमः।

ॐ गजयूथस्थाय नमः। २७५।

ॐ गजगर्जकभंजकाय नमः।

ॐ गर्जितोज्झितदैत्यासिने नमः।

ॐ गर्जितत्रातविष्टपाय नमः।

ॐ गानज्ञाय नमः।

ॐ गानकुशलाय नमः। २८०।

ॐ गानतत्त्वविवेचकाय नमः।

ॐ गानश्लाघिने नमः।

ॐ गानरसाय नमः।

ॐ गानज्ञानपरायणाय नमः।

ॐ गानागमज्ञाय नमः। २८५।

ॐ गानांगाय नमः।

ॐ गानप्रवणचेतनाय नमः ।

ॐ गानध्येयाय नमः ।

ॐ गानगम्याय नमः ।

ॐ गानध्यानपरायणाय नमः । २९०।

ॐ गानभुवे नमः ।

ॐ गानकृते नमः ।

ॐ गानचतुराय नमः ।

ॐ गानविद्याविशारदाय नमः ।

ॐ गानशीलाय नमः । २९५।

ॐ गानशालिने नमः ।

ॐ गतश्रमाय नमः ।

ॐ गानविज्ञानसंपन्नाय नमः ।

ॐ गानश्रवणलालसाय नमः ।

ॐ गानायत्ताय नमः । ३००।

ॐ गानमयाय नमः ।

ॐ गानप्रणयवते नमः ।

ॐ गानध्यात्रे नमः ।

ॐ गानबुद्धये नमः ।

ॐ  गानोत्सुकमनसे नमः । ३०५।

ॐ गानोत्सुकाय नमः ।

ॐ गानभूमये नमः ।

ॐ गानसीम्ने नमः ।

ॐ गानोज्ज्वलाय नमः ।

ॐ गानांगज्ञानवते नमः । ३१०।

ॐ गानमानवते नमः ।

ॐ गानपेशलाय नमः ।

ॐ गानवत्प्रणयाय नमः ।

ॐ गानसमुद्राय नमः ।

ॐ गानभूषणाय नमः । ३१५।

ॐ गानसिंधवे नमः ।

ॐ गानपराय नमः ।

ॐ गानप्राणाय नमः ।

ॐ गणाश्रयाय नमः ।

ॐ गनैकभुवे नमः । ३२०।

ॐ गानहृष्टाय नमः ।

ॐ गानचक्षुषे नमः ।

ॐ गनैकदृशे नमः ।

ॐ गानमत्ताय नमः ।

ॐ गानरुचये नमः । ३२५।

ॐ गानविदे नमः ।

ॐ गनवित्प्रियाय नमः ।

ॐ गानांतरात्मने नमः ।

ॐ गानाढ्याय नमः ।

ॐ गानभ्राजत्स्वभावाय नमः । ३३०।

ॐ गनमायाय नमः ।

ॐ गानधराय नमः ।

ॐ गानविद्याविशोधकाय नमः ।

ॐ गानाहितघ्नाय नमः ।

ॐ गानेन्द्राय नमः । ३३५।

ॐ गानलीलाय नमः ।

ॐ गतिप्रियाय नमः ।

ॐ गानाधीशाय नमः ।

ॐ गानलयाय नमः ।

ॐ गानाधाराय नमः । ३४०।

ॐ गतीश्वराय नमः ।

ॐ गानवन्मानदाय नमः ।

ॐ गानभूतये नमः ।

ॐ गानैकभूतिमते नमः ।

ॐ गानताननताय नमः । ३४५।

ॐ गानतानदानविमोहिताय नमः ।

ॐ गुरवे नमः ।

ॐ गुरूदरश्रेणये नमः ।

ॐ गुरुतत्त्वार्थदर्शनाय नमः ।

ॐ गुरुस्तुताय नमः । ३५०।

ॐ गुरुगुणाय नमः ।

ॐ गुरुमायाय नमः ।

ॐ गुरुप्रियाय नमः ।

ॐ गुरुकीर्तये नमः ।

ॐ गुरुभुजाय नमः । ३५५।

ॐ गुरुवक्षसे नमः ।

ॐ गुरुप्रभाय नमः ।

ॐ गुरुलक्षणसंपन्नाय नमः ।

ॐ गुरुद्रोहपराङ्मुखाय नमः ।

ॐ गुरुविद्याय नमः । ३६०।

ॐ गुरुप्रणाय नमः ।

ॐ गुरुबाहुबलोच्छ्रयाय नमः ।

ॐ गुरुदैत्यप्राणहराय नमः ।

ॐ गुरुदैत्यापहारकाय नमः ।

ॐ गुरुगर्वहराय नमः । ३६५।

ॐ गुरुप्रवराय नमः ।

ॐ गुरुदर्पघ्ने नमः ।

ॐ गुरुगौरवदायिने नमः ।

ॐ गुरुभीत्यपहारकाय नमः ।

ॐ गुरुशुण्डाय नमः । ३७०।

ॐ गुरुस्कन्धाय नमः ।

ॐ गुरुजंघाय नमः ।

ॐ गुरुप्रथाय नमः ।

ॐ गुरुभालाय नमः ।

ॐ गुरुगलाय नमः । ३७५।

ॐ गुरुश्रिये नमः ।

ॐ गुरुगर्वनुदे नमः ।

ॐ गुरवे नमः ।

ॐ गुरुपीनांसाय नमः ।

ॐ गुरुप्रणयलालसाय नमः । ३८०।

ॐ गुरुमुख्याय नमः ।

ॐ गुरुकुलस्थायिने नमः ।

ॐ गुणगुरवे नमः ।

ॐ गुरुसंशयभेत्रे नमः ।

ॐ गुरुमानप्रदायकाय नमः । ३८५।

ॐ गुरुधर्मसदाराध्याय नमः ।

ॐ गुरुधर्मनिकेतनाय नमः ।

ॐ गुरुदैत्यगलच्छेत्रे नमः ।

ॐ गुरुसैन्याय नमः ।

ॐ गुरुद्युतये नमः । ३९०।

ॐ गुरुधर्माग्रण्याय नमः ।

ॐ गुरुधर्मधुरंधराय नमः ।

ॐ गरिष्ठाय नमः ।

ॐ गुरुसंतापशमनाय नमः ।

ॐ गुरुपूजिताय नमः । ३९५।

ॐ गुरुधर्मधराय नमः ।

ॐ गौरवधर्मधराय नमः ।

ॐ गदापहाय नमः ।

ॐ गुरुशास्त्रविचारज्ञाय नमः ।

ॐ गुरुशास्त्रकृतोद्यमाय नमः । ४००।

ॐ गुरुशास्त्रार्थनिलयाय नमः ।

ॐ गुरुशास्त्रालयाय नमः ।

ॐ गुरुमन्त्राय नमः ।

ॐ गुरुश्रेष्ठाय नमः ।

ॐ गुरुमन्त्रफलप्रदाय नमः । ४०५।

ॐ गुरुस्त्रीगमनदोषप्रायश्चित्तनिवारकाय नमः ।

ॐ गुरुसंसारसुखदाय नमः ।

ॐ गुरुसंसारदुःखभिदे नमः ।

ॐ गुरुश्लाघापराय नमः ।

ॐ गौरभानुखंडावतंसभृते नमः । ४१०।

ॐ गुरुप्रसन्नमूर्तये नमः ।

ॐ गुरुशापविमोचकाय नमः ।

ॐ गुरुकांतये नमः ।

ॐ गुरुमहते नमः ।

ॐ गुरुशासनपालकाय नमः । ४१५।

ॐ गुरुतंत्राय नमः ।

ॐ गुरुप्रज्ञाय नमः।

ॐ गुरुभाय नमः।

ॐ गुरुदैवताय नमः।

ॐ गुरुविक्रमसंचाराय नमः। ४२०।

ॐ गुरुदृशे नमः।

ॐ गुरुविक्रमाय नमः।

ॐ गुरुक्रमाय नमः।

ॐ गुरुप्रेष्ठाय नमः।

ॐ गुरुपाखंडखंडकाय नमः। ४२५।

ॐ गुरुगर्जितसंपूर्णब्रह्माण्डाय नमः।

ॐ गुरुगर्जिताय नमः।

ॐ गुरुपुत्रप्रियसखाय नमः।

ॐ गुरुपुत्रभयापहाय नमः।

ॐ गुरुपुत्रपरित्रात्रे नमः। ४३०।

ॐ गुरुपुत्रवरप्रदाय नमः।

ॐ गुरुपुत्रार्तिशमनाय नमः।

ॐ गुरुपुत्राधिनाशनाय नमः।

ॐ गुरुपुत्रप्राणदाय नमः।

ॐ गुरुभक्तिपरायणाय नमः। ४३५।

ॐ गुरुविज्ञानविभवाय नमः।

ॐ गौरभानुवरप्रदाय नमः।

ॐ गौरभानुसुताय नमः।

ॐ गौरभानुत्रासापहारकाय नमः।

ॐ गौरभानुप्रियाय नमः। ४४०।

ॐ गौरभानवे नमः।

ॐ गौरववर्धनाय नमः।

ॐ गौरभानुपरित्रात्रे नमः ।

ॐ गौरभानुसखाय नमः ।

ॐ गौरभानुप्रभवे नमः । ४४५।

ॐ गौरभानुमत्प्राणनाशनाय नमः ।

ॐ गौरीतेजःसमुत्पन्नाय नमः ।

ॐ गौरीहृदयनन्दनाय नमः ।

ॐ गौरीस्तनंधयाय नमः ।

ॐ गौरीमनोवाञ्छितसिद्धिकृते नमः । ४५०।

ॐ गौराय नमः ।

ॐ गौरगुणाय नमः ।

ॐ गौरप्रकाशाय नमः ।

ॐ गौरभैरवाय नमः ।

ॐ गौरीशनन्दनाय नमः । ४५५।

ॐ गौरीप्रियपुत्राय नमः ।

ॐ गदाधराय नमः ।

ॐ गौरीवरप्रदाय नमः ।

ॐ गौरीप्रणयाय नमः ।

ॐ गौरच्छवये नमः । ४६०।

ॐ गौरीगणेश्वराय नमः ।

ॐ गौरीप्रवणाय नमः ।

ॐ गौरभावनाय नमः ।

ॐ गौरात्मने नमः ।

ॐ गौरकीर्तये। ४६५।

ॐ गौरभावाय नमः ।

ॐ गरिष्ठदृशे नमः ।

ॐ गौतमाय नमः ।

ॐ गौतमीनाथाय नमः ।

ॐ गौतमीप्राणवल्लभाय नमः । ४७०।

ॐ गौतमाभीष्टवरदाय नमः ।

ॐ गौतमाभयदायकाय नमः ।

ॐ गौतमप्रणयप्रह्वाय नमः ।

ॐ गौतमाश्रमदुःखघ्ने नमः ।

ॐ गौतमीतीरसंचारिणे नमः । ४७५।

ॐ गौतमीतीर्थदायकाय नमः ।

ॐ गौतमापत्परिहराय नमः ।

ॐ गौतमाधिविनाशनाय नमः ।

ॐ गोपतये नमः ।

ॐ गोधनाय नमः । ४८०।

ॐ गोपाय नमः ।

ॐ गोपालप्रियदर्शनाय नमः ।

ॐ गोपालाय नमः ।

ॐ गोगणाधीशाय नमः ।

ॐ गोकश्मलनिवर्तकाय नमः । ४८५।

ॐ गोसहस्राय नमः ।

ॐ गोपवराय नमः ।

ॐ गोपगोपीसुखावहाय नमः ।

ॐ गोवर्धनाय नमः ।

ॐ गोपगोपाय नमः । ४९०।

ॐ गोपाय नमः ।

ॐ गोकुलवर्धनाय नमः ।

ॐ गोचराय नमः ।

ॐ गोचराध्यक्षाय नमः ।

ॐ गोचरप्रीतिवृद्धिकृते नमः । ४९५।

ॐ गोमिने नमः ।

ॐ गोकष्टसंत्रात्रे नमः ।

ॐ गोसंतापनिवर्तकाय नमः ।

ॐ गोष्ठाय नमः ।

ॐ गोष्ठाश्रयाय नमः । ५००।

ॐ गोष्ठपतये नमः ।

ॐ गोधनवर्धनाय नमः ।

ॐ गोष्ठप्रियाय नमः ।

ॐ गोष्ठमयाय नमः ।

ॐ गोष्ठामयनिवर्तकाय नमः । ५०५।

ॐ गोलोकाय नमः ।

ॐ गोलकाय नमः ।

ॐ गोभृते नमः ।

ॐ गोभर्त्रे नमः ।

ॐ गोसुखावहाय नमः । ५१०।

ॐ गोदुहे नमः ।

ॐ गोधुग्गणप्रेष्ठाय नमः ।

ॐ गोदोग्ध्रे नमः ।

ॐ गोपयःप्रियाय नमः ।

ॐ गोत्राय नमः । ५१५।

ॐ गोत्रपतये नमः ।

ॐ गोत्रभवाय नमः ।

ॐ गोत्रभयापहाय नमः ।

ॐ गोत्रवृद्धिकराय नमः ।

ॐ गोत्रप्रियाय नमः । ५२०।

ॐ गोत्रातिनाशनाय नमः ।

ॐ गोत्रोद्धारपराय नमः ।

ॐ गोत्रप्रभवाय नमः ।

ॐ गोत्रदेवतायै नमः ।

ॐ गोत्रविख्यातनाम्ने नमः । ५२५।

ॐ गोत्रिणे नमः ।

ॐ गोत्रप्रपालकाय नमः ।

ॐ गोत्रसेतवे नमः ।

ॐ गोत्रकेतवे नमः ।

ॐ गोत्रहेतवे नमः । ५३०।

ॐ गतक्लमाय नमः ।

ॐ गोत्रत्राणकराय नमः ।

ॐ गोत्रपतये नमः ।

ॐ गोत्रेशपूजिताय नमः ।

ॐ गोत्रविदे नमः । ५३५।

ॐ गोत्रभित्त्रात्रे नमः ।

ॐ गोत्रभिद्वरदायकाय नमः ।

ॐ गोत्रभित्पूजितपदाय नमः ।

ॐ गोत्रभिच्छत्रुसूदनाय नमः ।

ॐ गोत्रभित्प्रीतिदाय नमः । ५४०।

ॐ गोत्रभिदे नमः ।

ॐ गोत्रपालकाय नमः ।

ॐ गोत्रभिद्गीतचरिताय नमः ।

ॐ गोत्रभिद्राज्यरक्षकाय नमः ।

ॐ गोत्रभिद्वरदायिने नमः । ५४५।

ॐ गोत्रभित्प्राणनिलयाय नमः ।

ॐ गोत्रभिद्भयसंहर्त्रे नमः ।

ॐ गोत्रभिन्मानदायकाय नमः ।

ॐ गोत्रभिद्गोपनपराय नमः ।

ॐ गोत्रभित्सैन्यनायकाय नमः । ५५०।

ॐ गोत्राधिपप्रियाय नमः ।

ॐ गोत्रापुत्रप्रीताय नमः ।

ॐ गिरिप्रियाय नमः ।

ॐ ग्रन्थज्ञाय नमः ।

ॐ ग्रन्थकृते नमः । ५५५।

ॐ ग्रन्थग्रन्थिदाय नमः ।

ॐ ग्रन्थविघ्नघ्ने नमः ।

ॐ ग्रन्थादये नमः ।

ॐ ग्रन्थसञ्चारये नमः ।

ॐ ग्रन्थश्रवणलोलुपाय नमः । ५६०।

ॐ ग्रन्ताधीनक्रियाय नमः ।

ॐ ग्रन्थप्रियाय नमः ।

ॐ ग्रन्थार्थतत्त्वविदे नमः ।

ॐ ग्रन्थसंशयसंछेदिने नमः ।

ॐ ग्रन्थवक्त्राय नमः । ५६५।

ॐ ग्रहाग्रण्ये नमः ।

ॐ ग्रन्थगीतगुणाय नमः ।

ॐ ग्रन्थगीताय नमः ।

ॐ ग्रन्थादिपूजिताय नमः ।

ॐ ग्रन्थारंभस्तुताय नमः । ५७०।

ॐ ग्रन्थग्राहिणे नमः ।

ॐ ग्रन्थार्थपारदृशे नमः ।

ॐ ग्रन्थदृशे नमः ।

ॐ ग्रन्थविज्ञानाय नमः ।

ॐ ग्रन्थसंदर्शशोधकाय नमः । ५७५।

ॐ ग्रन्थकृत्पूजिताय नमः ।

ॐ ग्रन्थकराय नमः ।

ॐ ग्रन्थपरायणाय नमः ।

ॐ ग्रन्थपारायणपराय नमः ।

ॐ ग्रन्थसंदेहभंजकाय नमः । ५८०।

ॐ ग्रन्थकृद्वरदात्रे नमः ।

ॐ ग्रन्थकृते नमः ।

ॐ ग्रन्थवन्दिताय नमः ।

ॐ ग्रन्थानुरक्ताय नमः ।

ॐ ग्रन्थज्ञाय नमः । ५८५।

ॐ ग्रन्थानुग्रहदायकाय नमः ।

ॐ ग्रन्थान्तरात्मने नमः ।

ॐ ग्रन्थार्थपण्डिताय नमः ।

ॐ ग्रन्थसौहृदाय नमः ।

ॐ ग्रन्थपारङ्गमाय नमः । ५९०।

ॐ ग्रन्थगुणविदे नमः ।

ॐ ग्रन्थविग्रहाय नमः ।

ॐ ग्रन्थसेवते नमः ।

ॐ ग्रन्थहेतवे नमः ।

ॐ ग्रन्थकेतवे नमः । ५९५।

ॐ ग्रहाग्रगाय नमः ।

ॐ ग्रन्थपूज्याय नमः ।

ॐ ग्रन्थगेयाय नमः ।

ॐ ग्रन्थग्रथनलालसाय नमः ।

ॐ ग्रन्थभूमये नमः । ६००।

ॐ ग्रहश्रेष्ठाय नमः ।

ॐ ग्रहकेतवे नमः ।

ॐ ग्रहाश्रयाय नमः ।

ॐ ग्रन्थकाराय नमः ।

ॐ ग्रन्थकारमान्याय नमः । ६०५।

ॐ ग्रन्थप्रसारकाय नमः ।

ॐ ग्रन्थश्रमज्ञाय नमः ।

ॐ ग्रन्थांगाय नमः ।

ॐ ग्रन्थभ्रमनिवारकाय नमः ।

ॐ ग्रन्थप्रवणसर्वाङ्गाय नमः । ६१०।

ॐ ग्रन्थप्रणयतत्पराय नमः ।

ॐ गीताय नमः ।

ॐ गीतगुणाय नमः ।

ॐ गीतकीर्तये नमः ।

ॐ गीतविशारदाय नमः । ६१५।

ॐ गीतस्फीतये नमः ।

ॐ गीतप्रणयिने नमः ।

ॐ गीतचंचुराय नमः ।

ॐ गीतप्रसन्नाय नमः ।

ॐ गीतात्मने नमः । ६२०।

ॐ गीतलोलाय नमः ।

ॐ गीतस्पृहाय नमः ।

ॐ गीताश्रयाय नमः ।

ॐ गीतमयाय नमः ।

ॐ गीततत्वार्थकोविदाय नमः । ६२५।

ॐ गीतसंशयसंछेत्रे नमः ।

ॐ गीतसङ्गीतशासनाय नमः ।

ॐ गीतार्थज्ञाय नमः ।

ॐ गीततत्वाय नमः ।

ॐ गीतातत्वाय नमः । ६३०।

ॐ गताश्रयाय नमः ।

ॐ गीतसाराय नमः ।

ॐ गीतकृतये नमः ।

ॐ गीतविघ्नविनाशनाय नमः ।

ॐ गीतासक्ताय नमः । ६३५।

ॐ गीतलीनाय नमः ।

ॐ गीताविगतसंज्व्राय नमः ।

ॐ गीतैकदृशे नमः ।

ॐ गीतभूतये नमः ।

ॐ गीताप्रियाय नमः । ६४०।

ॐ गतालसाय नमः ।

ॐ गीतवाद्यपटवे नमः ।

ॐ गीतप्रभवे नमः ।

ॐ गीतार्थतत्वविदे नमः ।

ॐ गीतागीतविवेकज्ञाय नमः । ६४५।

ॐ गीतप्रवणचेतनाय नमः ।

ॐ गतभिये नमः ।

ॐ गतविद्वेषाय नमः ।

ॐ गतसंसारबंधनाय नमः ।

ॐ गतमायाय नमः । ६५०।

ॐ गतत्रासाय नमः ।

ॐ गतदुःखाय नमः ।

ॐ गतज्वराय नमः ।

ॐ गतासुहृदे नमः ।

ॐ गताज्ञानाय नमः । ६५५।

ॐ गतदुष्टाशयाय नमः ।

ॐ गताय नमः ।

ॐ गतार्तये नमः ।

ॐ गतसंकल्पाय नमः ।

ॐ गतदुष्टविचेष्टिताय नमः । ६६०।

ॐ गताहंहारसंचाराय नमः ।

ॐ गतदर्पाय नमः ।

ॐ गताहिताय नमः ।

ॐ गताविघ्नाय नमः ।

ॐ गतभयाय नमः । ६६५।

ॐ गतागतनिवारकाय नमः ।

ॐ गतव्यथाय नमः ।

ॐ गतापायाय नमः ।

ॐ गतदोषाय नमः ।

ॐ गतेः पराय नमः । ६७०।

ॐ गतसर्वविकाराय नमः ।

ॐ गजगर्जितकुञ्जराय नमः ।

ॐ गतकंपितमूपृष्ठाय नमः ।

ॐ गतरुषे नमः ।

ॐ गतकल्मषाय नमः । ६७५।

ॐ गतदैन्याय नमः ।

ॐ गतस्तैन्याय नमः ।

ॐ गतमानाय नमः ।

ॐ गतश्रमाय नमः ।

ॐ गतक्रोधाय नमः । ६८०।

ॐ गतग्लानये नमः ।

ॐ गतम्लानये नमः ।

ॐ गतभ्रमाय नमः ।

ॐ गताभावाय नमः ।

ॐ गतभवाय नमः । ६८५।

ॐ गततत्वार्थसंशयाय नमः ।

ॐ गयासुरशिरश्छेत्रे नमः ।

ॐ गयासुरवरप्रदाय नमः ।

ॐ गयावासाय नमः ।

ॐ गयानाथाय नमः । ६९०।

ॐ गयावासिनमस्कृतय नमः ।

ॐ गयातीर्थफलाध्यक्षाय नमः ।

ॐ गयायात्राफलप्रदाय नमः ।

ॐ गयामयाय नमः ।

ॐ गयाक्षेत्राय नमः । ६९५।

ॐ गयाक्षेत्रनिवासकृते नमः ।

ॐ गयावासिस्तुताय नमः ।

ॐ गायन्मधुव्रतलसत्कटाय नमः ।

ॐ गायकाय नमः ।

ॐ गायकवराय नमः । ७००।

ॐ गायकेष्टफलप्रदाय नमः ।

ॐ गायकप्रणयिने नमः ।

ॐ गात्रे नमः।

ॐ गायकाभयदायकाय नमः।

ॐ गायकप्रवणस्वांताय नमः। ७०५।

ॐ गायकप्रथमाय नमः।

ॐ गायकोद्गीतसंप्रीताय नमः।

ॐ गायकोत्कटविघ्नघ्ने नमः।

ॐ गानगेयाय नमः।

ॐ गायकेशाय नमः। ७१०।

ॐ गायकांतरसंचाराय नमः।

ॐ गायकप्रियदाय नमः।

ॐ गायकाधीनविग्रहाय नमः।

ॐ गेयाय नमः।

ॐ गेयगुणाय नमः। ७१५।

ॐ गेयचरिताय नमः।

ॐ गेयतत्वविदे नमः।

ॐ गायकत्रासघ्ने नमः।

ॐ ग्रंथाय नमः।

ॐ ग्रंथतत्वविवेचकाय नमः। ७२०।

ॐ गाढानुरागय नमः।

ॐ गाढांगाय नमः।

ॐ गाढगंगाजलोद्वहाय नमः।

ॐ गाढावगाढजलधये नमः।

ॐ गाढप्रज्ञाय नमः। ७२५।

ॐ गतामयाय नमः।

ॐ गाढप्रत्यर्थिसैन्याय नमः।

ॐ गाढानुग्रहतत्पराय नमः।

ॐ गाढाश्लेषरसाभिज्ञाय नमः ।

ॐ गाढनिर्वृत्तिसाधकाय नमः । ७३०।

ॐ गंगाधरेष्टवरदाय नमः ।

ॐ गंगाधरभयापहाय नमः ।

ॐ गंगाधरगुरवे नमः ।

ॐ गंगाधरध्यानपरायणाय नमः ।

ॐ गंगाधरस्तुताय नमः । ७३५।

ॐ गंगाधरराध्याय नमः ।

ॐ गतस्मयाय नमः ।

ॐ गंगाधरप्रियाय नमः ।

ॐ गंगाधराय नमः ।

ॐ गंगांबुसुन्दराय नमः । ७४०।

ॐ गंगाजलरसास्वाद चतुराय नमः ।

ॐ गंगानिरताय नमः ।

ॐ गंगाजलप्रणयवते नमः ।

ॐ गंगातीरविहाराय नमः ।

ॐ गंगाप्रियाय नमः । ७४५।

ॐ गंगाजलावगाहनपराय नमः ।

ॐ गन्धमादनसंवासाय नमः ।

ॐ गन्धमादनकेलिकृते नमः ।

ॐ गन्धानुलिप्तसर्वाङ्गाय नमः ।

ॐ गन्धलुभ्यन्मधुव्रताय नमः । ७५०।

ॐ गन्धाय नमः ।

ॐ गन्धर्वराजाय नमः ।

ॐ गन्धर्वप्रियकृते नमः ।

ॐ गन्धर्वविद्यातत्वज्ञाय नमः ।

ॐ गन्धर्वप्रीतिवर्धनाय नमः । ७५५।

ॐ गकारबीजनिलयाय नमः ।

ॐ गन्धकाय नमः ।

ॐ गर्विगर्वनुदे नमः ।

ॐ गन्धर्वगणसंसेव्याय नमः ।

ॐ गन्धर्ववरदायकाय नमः । ७६०।

ॐ गन्धर्वाय नमः ।

ॐ गन्धमातङ्गाय नमः ।

ॐ गन्धर्वकुलदैवताय नमः ।

ॐ गन्धर्वसंशयच्छेत्रे नमः ।

ॐ गन्धर्ववरदर्पघ्ने नमः । ७६५।

ॐ गन्धर्वप्रवणस्वान्ताय नमः ।

ॐ गन्धर्वगणसंस्तुताय नमः ।

ॐ गन्धर्वार्चितपादाब्जाय नमः ।

ॐ गन्धर्वभयहारकाय नमः ।

ॐ गन्धर्वाभयदाय नमः । ७७०।

ॐ गन्धर्वप्रीतिपालकाय नमः ।

ॐ गन्धर्वगीतचरिताय नमः ।

ॐ गन्धर्वप्रणयोत्सुकाय नमः ।

ॐ गन्धर्वगानश्रवणप्रणयिने नमः ।

ॐ गन्धर्वभाजनाय नमः । ७७५।

ॐ गन्धर्वत्राणसन्नद्धाय नमः ।

ॐ गन्धर्वसमरक्षमाय नमः ।

ॐ गन्धर्वस्त्रीभिराराध्याय नमः ।

ॐ गानाय नमः ।

ॐ गानपटवे नमः । ७८०।

ॐ गच्छाय नमः ।

ॐ गच्छपतये नमः ।

ॐ गच्छनायकाय नमः ।

ॐ गच्छगर्वघ्ने नमः ।

ॐ गच्छराजाय नमः । ७८५।

ॐ गच्छेशाय नमः ।

ॐ गच्छराजनमस्कृताय नमः ।

ॐ गच्छप्रियाय नमः ।

ॐ गच्छगुरवे नमः ।

ॐ गच्छत्राणकृतोद्यमाय नमः । ७९०।

ॐ गच्छप्रभवे नमः ।

ॐ गच्छचराय नमः ।

ॐ गच्छप्रियकृतोद्यमाय नमः ।

ॐ गच्छातीतगुणाय नमः ।

ॐ गच्छमर्यादाप्रतिपालकाय नमः । ७९५।

ॐ गच्छधात्रे नमः ।

ॐ गच्छभर्त्रे नमः ।

ॐ गच्छवन्द्याय नमः ।

ॐ गुरोर्गुरवे नमः ।

ॐ गृत्साय नमः । ८००।

ॐ गृत्समदाय नमः ।

ॐ गृत्समदाभीष्टवरप्रदाय नमः ।

ॐ गीर्वाणगीतचरिताय नमः ।

ॐ गीर्वाणगणसेविताय नमः ।

ॐ गीर्वाणवरदात्रे नमः । ८०५।

ॐ गीर्वाणभयनाशकृते नमः ।

ॐ गीर्वाणगणसङ्गीताय नमः।

ॐ गीर्वाणारातिसूदनाय नमः।

ॐ गीर्वाणधाम्ने नमः।

ॐ गीर्वाणगोप्त्रे नमः। ८१०।

ॐ गीर्वाणगर्वनुदे नमः।

ॐ गीर्वाणार्तिहराय नमः।

ॐ गीर्वाणवरदायकाय नमः।

ॐ गीर्वाणशरणाय नमः।

ॐ गीतनाम्ने नमः। ८१५।

ॐ गीर्वाणसुन्दराय नमः।

ॐ गीर्वाणप्राणदाय नमः।

ॐ गंत्रे नमः।

ॐ गीर्वाणानीकरक्षकाय नमः।

ॐ गुहेहापूरकाय नमः। ८२०।

ॐ गन्धमत्ताय नमः।

ॐ गीर्वाणपुष्टिदाय नमः।

ॐ गीर्वाणप्रयुतत्रात्रे नमः।

ॐ गीतगोत्राय नमः।

ॐ गताहिताय नमः। ८२५।

ॐ गीर्वाणसेवितपदाय नमः।

ॐ गीर्वाणप्रथिताय नमः।

ॐ गलते नमः।

ॐ गीर्वाणगोत्रप्रवराय नमः।

ॐ गीर्वाणबलदाय नमः। ८३०।

ॐ गीर्वाणप्रियकर्त्रे नमः।

ॐ गीर्वाणागमसारविदे नमः।

ॐ गीर्वाणागमसंपत्तये नमः ।

ॐ गीर्वाणव्यसनापत्ने  नमः ।

ॐ गीर्वाणप्रणयाय नमः । ८३५।

ॐ गीतग्रहणोत्सुकमानसाय नमः ।

ॐ गीर्वाणमदसंहर्त्रे नमः ।

ॐ गीर्वाणगणपालकाय नमः ।

ॐ ग्रहाय नमः ।

ॐ ग्रहपतये नमः । ८४०।

ॐ ग्रहाय नमः ।

ॐ ग्रहपीडाप्रणाशनाय नमः ।

ॐ ग्रहस्तुताय नमः ।

ॐ ग्रहाध्यक्षाय नमः ।

ॐ ग्रहेशाय नमः । ८४५।

ॐ ग्रहदैवताय नमः ।

ॐ ग्रहकृते नमः ।

ॐ ग्रहभर्त्रे नमः ।

ॐ ग्रहेशानाय नमः ।

ॐ ग्रहेश्वराय नमः । ८५०।

ॐ ग्रहाराध्याय नमः ।

ॐ ग्रहत्रात्रे नमः ।

ॐ ग्रहगोप्त्रे नमः ।

ॐ ग्रहोत्कटाय नमः ।

ॐ ग्रहगीतगुणाय नमः । ८५५।

ॐ ग्रन्थप्रणेत्रे नमः ।

ॐ ग्रहवन्दिताय नमः ।

ॐ गविने नमः ।

ॐ गवीश्वराय नमः ।

ॐ ग्रहणे नमः । ८६०।

ॐ ग्रहष्ठायनमः ।

ॐ ग्रहगर्वघ्ने नमः ।

ॐ गवांप्रियाय नमः ।

ॐ गवांनाथाय नमः ।

ॐ गवीशानाय नमः । ८६५।

ॐ  गवांपतये नमः ।

ॐ गव्यप्रियाय नमः ।

ॐ गवांगोप्त्रे नमः ।

ॐ गविसंपत्तिसाधकाय नमः ।

ॐ गविरक्षणसन्नद्धाय नमः । ८७०।

ॐ गविभयहरय नमः ।

ॐ गविगर्वहराय नमः ।

ॐ गोदाय नमः ।

ॐ गोप्रदाय नमः ।

ॐ गोजयप्रदाय नमः । ८७५।

ॐ गोजायुतबलाय नमः ।

ॐ गंडगुंजन्मधुव्रताय नमः ।

ॐ गंडस्थलगलद्दानमिलन्मत्तालिमण्डिताय नमः ।

ॐ गुडाय नमः ।

ॐ गुडाप्रियाय नमः । ८८०।

ॐ गण्डगलद्दानाय नमः ।

ॐ गुडाशनाय नमः ।

ॐ गुडाकेशाय नमः ।

ॐ गुडाकेशसहायाय नमः ।

ॐ गुडलड्डुभुजे नमः । ८८५।

ॐ गुडभुजे नमः ।

ॐ गुडभुग्गण्याय नमः ।

ॐ गुडाकेशवरप्रदाय नमः ।

ॐ गुडाकेशार्चितपदाय नमः ।

ॐ गुडाकेशसखाय नमः । ८९०।

ॐ गदाधरार्चितपदाय नमः ।

ॐ गदाधरजयप्रदाय नमः ।

ॐ गदायुधाय नमः ।

ॐ गदापाणये नमः ।

ॐ गदायुद्धविशारदाय नमः । ८९५।

ॐ गदघ्ने नमः ।

ॐ गददर्पघ्ने नमः ।

ॐ गदगर्वप्रणाशनाय नमः ।

ॐ गदग्रस्तपरित्रात्रे नमः ।

ॐ गदाडंबरखण्डकाय नमः । ९००।

ॐ गुहाय नमः ।

ॐ गुहाग्रजाय नमः ।

ॐ गुप्ताय नमः ।

ॐ गुहाशायिने नमः ।

ॐ गुहाशयाय नमः । ९०५।

ॐ गुहप्रीतिकराय नमः ।

ॐ गूढाय नमः ।

ॐ गूढगुल्फाय नमः ।

ॐ गुणैकदृशे नमः ।

ॐ गिरे नमः । ९१०।

ॐ गीष्पतये नमः ।

ॐ गिरीशानाय नमः ।

ॐ गीर्देवीगीतसद्गुणाय नमः ।

ॐ गीर्देवाय नमः ।

ॐ गीष्प्रियाय नमः । ९१५।

ॐ गीर्भुवे नमः ।

ॐ गीरात्मने नमः ।

ॐ गीष्प्रियङ्कराय नमः ।

ॐ गीर्भूमये अमः ।

ॐ गीरसज्ञ्याय नमः । ९२०।

ॐ गीःप्रसन्नाय नमः ।

ॐ गिरीश्वराय नमः ।

ॐ गिरीशजाय नमः ।

ॐ गिरीशायिने नमः ।

ॐ गिरिराजसुखावहाय नमः । ९२५।

ॐ गिरिराजार्चितपदाय नमः ।

ॐ गिरिराजनमस्कृताय नमः ।

ॐ गिरिराजगुहाविष्टाय नमः ।

ॐ गिरिराजाभयप्रदाय नमः ।

ॐ गिरिराजेष्टवरदाय नमः । ९३०।

ॐ गिरिराजप्रपालकाय नमः ।

ॐ गिरिराजसुतासूनवे नमः ।

ॐ गिरिराजजयप्रदाय नमः ।

ॐ गिरिव्रजवनस्थायिने नमः ।

ॐ गिरिव्रजचराय नमः । ९३५।

ॐ गर्गाय नमः ।

ॐ गर्गप्रियाय नमः ।

ॐ गर्गदेवाय नमः ।

ॐ गर्गनमस्कृताय नमः ।

ॐ गर्गभीतिहराय नमः । ९४०।

ॐ गर्गवरदाय नमः ।

ॐ गर्गसंस्तुताय नमः ।

ॐ गर्गगीतप्रसन्नात्मने नमः ।

ॐ गर्गानन्दकराय नमः ।

ॐ गर्गप्रियाय नमः । ९४५।

ॐ गर्गमानप्रदाय नमः ।

ॐ गर्गारिभञ्जकाय नमः ।

ॐ गर्गवर्गपरित्रात्रे नमः ।

ॐ गर्गसिद्धिप्रदायकाय नमः ।

ॐ गर्गग्लानिहराय नमः । ९५०।

ॐ गर्गश्रमनुदे नमः ।

ॐ गर्गसङ्गताय नमः ।

ॐ गर्गाचार्याय नमः ।

ॐ गर्गऋषये नमः ।

ॐ गर्गसन्मानभाजनाय नमः । ९५५।

ॐ गंभीराय नमः ।

ॐ गणितप्रज्ञाय नमः ।

ॐ गणितागमसारविदे नमः ।

ॐ गणकाय नमः ।

ॐ गणकश्लाघ्याय नमः । ९६०।

ॐ गणकप्रणयोत्सुकाय नमः ।

ॐ गणकप्रवणस्वान्ताय नमः ।

ॐ गणिताय नमः।

ॐ गणितागमाय नमः।

ॐ गद्याय नमः। ९६५।

ॐ गद्यमयाय नमः।

ॐ गद्यपद्यविद्याविवेचकाय नमः।

ॐ गललग्नमहानागाय नमः।

ॐ गलदर्चिषे नमः।

ॐ गलन्मदाय नमः। ९७०।

ॐ गलत्कुष्ठिव्यथाहन्त्रे नमः।

ॐ गलत्कुष्ठिसुखप्रदाय नमः।

ॐ गंभीरनाभये नमः।

ॐ गंभीरस्वराय नमः।

ॐ गंभीरलोचनाय नमः। ९७५।

ॐ गंभीरगुणसंपन्नाय नमः।

ॐ गंभीरगतिशोभनाय नमः।

ॐ गर्भप्रदाय नमः।

ॐ गर्भरूपाय नमः।

ॐ गर्भापद्विनिवारकाय नमः। ९८०।

ॐ गर्भागमनसंभूतये नमः।

ॐ गर्भदाय नमः।

ॐ गर्भशोकनुदे नमः।

ॐ गर्भत्रात्रे नमः।

ॐ गर्भगोप्त्रे नमः। ९८५।

ॐ गर्भपुष्टिकराय नमः।

ॐ गर्भगौरवसाधनाय नमः।

ॐ गर्भगर्वनुदे नमः।

ॐ गरीयसे नमः ।

ॐ गर्वनुदे नमः । ९९०।

ॐ गर्वमर्दिने नमः ।

ॐ गरदमर्दकाय नमः ।

ॐ गरसंतापशमनाय नमः ।

ॐ गुरुराजसुखप्रदाय नमः ।

ॐ गर्भाश्रयाय नमः । ९९५।

ॐ गर्भमयाय नमः ।

ॐ गर्भामयनिवारकाय नमः ।

ॐ गर्भाधाराय नमः ।

ॐ गर्भधराय नमः ।

ॐ गर्भसन्तोषसाधकाय नमः । १०००।

॥इति श्री गणेश गकार

सहस्रनामावलिः संपूर्णम् ॥

**********************************

॥ श्रीगणेश गायत्री ॥

लम्बोदराय विद्महे महोदराय धीमहि ।

तन्नो दन्ती प्रचोदयात् ॥ (अग्निपुराण ७१ अध्याय)

महोत्कटाय विद्महे वक्रतुण्डाय धीमहि ।

तन्नो दन्ती प्रचोदयात् ॥ (अग्निपुराण, १७९ अध्याय)

एकदन्ताय विद्महे वक्रतुण्डाय धीमहि ।

तन्नो दन्ती प्रचोदयात् ॥ (गणपत्यथर्वशीर्ष)

तत्कराटाय विद्महे हस्तिमुखाय धीमहि ।

तन्नो दन्ती प्रचोदयात् ॥ (मैत्रायणीय-संहिता)

तत्पुरूषाय विद्महे वक्रतुण्डाय धीमहि ।

तन्नो दन्ती प्रचोदयात् ॥ (तैत्तिरीयारण्यक-नारायणोपनिषद्)

**************************************

॥ श्रीगणेशगीतासारस्तोत्रम् ॥

श्री गणेशाय नमः ।

शिव उवाच ।

गणेशवचनं श्रुत्वा प्रणता भक्तिभावतः ।

पप्रच्छुस्तं पुनः शान्ता ज्ञानं ब्रूहि गजानन ॥ १॥

गणेश उवाच ।

देहश्चतुर्विधः प्रोक्तस्त्वंपदं ब्रह्मभिन्नतः ।

सोऽहं देहि चतुर्धा तत्पदं ब्रह्म सदैकतः ॥ २॥

संयोग उभयोर्यच्चासिपदं ब्रह्म कथ्यते ।

स्वत उत्थानकं देवा विकल्पकरणात्त्रिधा ॥ ३॥

सदा स्वसुखनिष्ठं यद्ब्रह्म सांख्यं प्रकीर्तितम् ।

परतश्चोत्थानकं तत् क्रीडाहीनतया परम् ॥ ४॥

स्वतः परत उत्थानहीनं यद्ब्रह्म कथ्यते ।

स्वानन्दः सकलाभेदरूपः संयोगकारकः ॥ ५॥

तदेव पञ्चधा जातं तन्निबोधत ईश्वराः ।

स्वतश्च परतो ब्रह्मोत्थानं यत्रिविधं स्मृतम् ॥ ६॥

ब्रह्मणो नाम तद्भेदे कथ्यते भिन्नभावतः ।

तयोरनुभवो यश्च योगिनां हृदि जायते ॥ ७॥

रूपं तदेव ज्ञातव्यमसद्भेदेषु कथ्यते ।

सा शक्तिरियमाख्याता ब्रह्मरूपा ह्यसन्मयी ॥ ८॥

तत्रामृतमयाधारः सूर्य आत्मा प्रकथ्यते ।

शक्तिसूर्यमयो विष्णुश्चिदानन्दात्मको हि सः ॥ ९॥

त्रिविधेषु तदाकारस्तत्क्रियाहीनरूपकः ।

नेति शिवश्चतुर्थोऽयं त्रिनेति कारकात्परः ॥ १०॥

त्रिविधं मोहमात्रं यन्निर्मोहस्तु सदाशिवः ।

तेषामभेदे यद्ब्रह्म स्वानन्दः सर्वयोगकः ॥ ११॥

पञ्चानां ब्रह्मणां यच्च बिम्बं मायामयं स्मृतम् ।

ब्रह्मा तदेव विज्ञेयः सर्वादिः सर्वभावतः ॥ १२॥

बिम्बेन सकलं सृष्टं तेनायं प्रपितामहः ।

असत्सत्सदसच्चेति स्वानन्दरूपा वयं स्मृताः ॥ १३॥

स्वानन्दाद्यत्परं ब्रह्मयोगाख्यं ब्रह्मणां भवेत् ।

केषामपि प्रवेशो न तत्र तस्यापि कुत्रचित् ॥ १४॥

मदीयं दर्शनं तत्र योगेन योगिनां भवेत् ।

स्वानन्दे दर्शनं प्राप्तं स्वसंवेद्यात्मकं च मे ॥ १५॥

तेन स्वानन्द आसीनं वेदेषु प्रवदन्ति माम् ।

चतुर्णां ब्रह्मणां योगात्संयोगाभेदयोगतः ॥ १६॥

संयोगश्च ह्ययोगश्च तयोः परतयोर्मतः ।

पूर्णशान्तिप्रदो योगश्चित्तवृत्तिनिरोधतः ॥ १७॥

क्षिप्तं मूढं च विक्षिप्तमेकाग्रं च निरोधकं ।

पञ्चभूमिमयं चित्तं तत्र चिन्तामणिः स्थितः ॥ १८॥

पञ्चभूतनिरोधेन प्राप्यते योगिभिर्हृदि ।

शान्तिरूपात्मयोगेन ततः शान्तिर्मदात्मिका ॥ १९॥

एतद्योगात्मकं ज्ञानं गाणेशं कथितं मया ।

नित्यं युञ्जन्त योगेन नैव मोहं प्रगच्छत ॥ २०॥

चित्तरूपा स्वयं बुद्धिः सिद्धिर्मोहमयी स्मृता ।

नानाब्रह्मविभेदेन ताभ्यां क्रीडति तत्पतिः ॥ २१॥

त्यक्त्वा चिन्ताभिमानं ये गणेशोऽहंसमाधिना ।

भविष्यथ भवन्तोऽपि मद्रूपा मोहवर्जिताः ॥ २२॥

शिव उवाच ।

इत्युक्त्वा विररामाथ गणेशो भक्तवत्सलः ।

तेऽपि भेदं परित्यज्य शान्तिं प्राप्ताश्च तत्क्षणात् ॥ २३॥

एकविंशतिश्लोकैस्तैर्गणेशेन प्रकीर्तितम् ।

गीतासारं सुशान्तेभ्यः शान्तिदं योगसाधनैः ॥ २४॥

गणेशगीतासारं च यः पठिष्यति भावतः ।

श्रोष्यति श्रद्दधानश्चेद्ब्रह्मभूतसमो भवेत् ॥ २५॥

इह भुक्त्वाऽखिलान्भोगानन्ते योगमयो भवेत् ।

दर्शनात्तस्य लोकानां सर्वपापं लयं व्रजेत् ॥ २६॥

इति मुद्गलपुराणोक्तं गणेशगीतासारस्तोत्रं समाप्तम् ।

************************************

॥ श्री गणेश चालीसा ॥

जय गणपति सद्गुणसदन कविवर बदन कृपाल । विघ्न हरण मंगल करण जय जय गिरिजालाल ॥

जय जय जय गणपति राजू । मंगल भरण करण शुभ काजू ॥

जय गजबदन सदन सुखदाता । विश्व विनायक बुद्धि विधाता ॥

वक्र तुण्ड शुचि शुण्ड सुहावन । तिलक त्रिपुण्ड भाल मन भावन ॥

राजित मणि मुक्तन उर माला । स्वर्ण मुकुट शिर नयन विशाला ॥

पुस्तक पाणि कुठार त्रिशूलं । मोदक भोग सुगन्धित फूलं ॥

सुन्दर पीताम्बर तन साजित । चरण पादुका मुनि मन राजित ॥

धनि शिवसुवन षडानन भ्राता । गौरी ललन विश्व-विधाता ॥

ऋद्धि सिद्धि तव चँवर सुधारे । मूषक वाहन सोहत द्वारे ॥

कहौं जन्म शुभ कथा तुम्हारी । अति शुचि पावन मंगल कारी ॥

एक समय गिरिराज कुमारी । पुत्र हेतु तप कीन्हा भारी ॥

भयो यज्ञ जब पूर्ण अनूपा । तब पहुँच्यो तुम धरि द्विज रूपा ॥

अतिथि जानि कै गौरी सुखारी । बहु विधि सेवा करी तुम्हारी ॥

अति प्रसन्न ह्वै तुम वर दीन्हा । मातु पुत्र हित जो तप कीन्हा ॥

मिलहि पुत्र तुहि बुद्धि विशाला । बिना गर्भ धारण यहि काला ॥

गणनायक गुण ज्ञान निधाना । पूजित प्रथम रूप भगवाना ॥

अस कहि अन्तर्ध्यान रूप ह्वै । पलना पर बालक स्वरूप ह्वै ॥

बनि शिशु रुदन जबहि तुम ठाना । लखि मुख सुख नहिं गौरि समाना ॥

सकल मगन सुख मंगल गावहिं । नभ ते सुरन सुमन वर्षावहिं ॥

शम्भु उमा बहुदान लुटावहिं । सुर मुनि जन सुत देखन आवहिं ॥

लखि अति आनन्द मंगल साजा । देखन भी आये शनि राजा ॥

निज अवगुण गुनि शनि मन माहीं । बालक देखन चाहत नाहीं ॥

गिरजा कछु मन भेद बढ़ायो । उत्सव मोर न शनि तुहि भायो ॥

कहन लगे शनि मन सकुचाई । का करिहौ शिशु मोहि दिखाई ॥

नहिं विश्वास उमा कर भयऊ । शनि सों बालक देखन कह्यऊ ॥

पड़तहिं शनि दृग कोण प्रकाशा । बालक शिर इड़ि गयो आकाशा ॥

गिरजा गिरीं विकल ह्वै धरणी । सो दुख दशा गयो नहिं वरणी ॥

हाहाकार मच्यो कैलाशा । शनि कीन्ह्यों लखि सुत को नाशा ॥

तुरत गरुड़ चढ़ि विष्णु सिधाये । काटि चक्र सो गज शिर लाये ॥

बालक के धड़ ऊपर धारयो । प्राण मंत्र पढ़ शंकर डारयो ॥

नाम गणेश शम्भु तब कीन्हे । प्रथम पूज्य बुद्धि निधि वर दीन्हे ॥

बुद्धि परीक्शा जब शिव कीन्हा । पृथ्वी की प्रदक्शिणा लीन्हा ॥

चले षडानन भरमि भुलाई । रची बैठ तुम बुद्धि उपाई ॥

चरण मातु-पितु के धर लीन्हें । तिनके सात प्रदक्शिण कीन्हें ॥

धनि गणेश कहि शिव हिय हरषे । नभ ते सुरन सुमन बहु बरसे ॥

तुम्हरी महिमा बुद्धि बड़ाई । शेष सहस मुख सकै न गाई ॥

मैं मति हीन मलीन दुखारी । करहुँ कौन बिधि विनय तुम्हारी ॥

भजत रामसुन्दर प्रभुदासा । लख प्रयाग ककरा दुर्वासा ॥

अब प्रभु दया दीन पर कीजै । अपनी शक्ति भक्ति कुछ दीजै ॥

दोहा

श्री गणेश यह चालीसा पाठ करें धर ध्यान । नित नव मंगल गृह बसै लहे जगत सन्मान ॥

संवत् अपन सहस्र दश ऋषि पंचमी दिनेश । पूरण चालीसा भयो मंगल मूर्ति गणेश ॥

॥ आरती श्री गणेश जी की ॥

जय गणेश जय गणेश जय गणेश देवा । माता जाकी पारवती पिता महादेवा ॥

एकदन्त दयावन्त चारभुजाधारी । माथे पर तिलक सोहे मूसे की सवारी ॥

पान चढ़े फल चढ़े और चढ़े मेवा । लड्डुअन का भोग लगे सन्त करें सेवा ॥

अंधे को आँख देत कोढ़िन को काया ।बाँझन को पुत्र देत निर्धन को माया ॥

सूर श्याम शरण आए सफल कीजे सेवा । जय गणेश जय गणेश जय गणेश देवा ॥

*******************************************

॥ श्रीगणेश्द्वादशनामस्तोत्रम् ॥

श्रीगणेशाय नमः ॥

शुक्लाम्बरधरं विश्णुं शशिवर्णं चतुर्भुजम् ।

प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तयेः ॥ १॥

अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ।

सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ २॥

गणानामधिपश्चण्डो गजवक्त्रस्त्रिलोचनः ।

प्रसन्नो भव मे नित्यं वरदातर्विनायक ॥ ३॥

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।

लम्बोदरश्च विकतो विघ्ननाशो विनायकः ॥ ४॥

धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।

द्वादशैतानि नामानि गणेशस्य तु यः पठेत् ॥ ५॥

विद्यार्थी लभते विद्यां धनार्थि विपुलं धनम् ।

इष्टकामं तु कामार्थी धर्मार्थी मोक्षमक्षयम् ॥ ६॥

विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा ।

सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥ ७॥

इति मुद्गलपुराणोक्तं श्रीगणेशद्वादशनामस्तोत्रं सम्पूर्णम् ।

**************************************

॥ श्रीगणेशन्यासः ॥

श्री गणेशाय नमः ॥

आचम्य, प्राणायामं संकल्पं च कृत्वा , दक्षिणहस्ते

वक्रतुण्डाय नमः ।

वामहस्ते शूर्पकर्णाय नमः ।

ओष्ठे विघ्नेशाय नमः ।

अधरोष्ठे चिन्तामणये नमः ।

सम्पुटे गजाननाय नमः ।

दक्षिणपादे लम्बोदराय नमः ।

वामपादे एकदन्ताय नमः ।

शिरसि एकदन्ताय नमः ।

चिबुके ब्रह्मणस्पतये नमः ।

दक्षिणनासिकायां विनायकाय नमः ।

वामनासिकायां ज्येष्ठराजाय नमः ।

दक्षिणनेत्रे विकटाय नमः ।

वामनेत्रे कपिलाय नमः ।

दक्षिणकर्णे धरणीधराय नमः ।

वामकर्णे आशापूरकाय नमः ।

नाभौ महोदराय नमः ।

हृदये धूम्रकेतवे नमः ।

ललाटे मयूरेशाय नमः ।

दक्षिणबाहौ स्वानन्दवासकारकाय नमः ।

वामबाहौ सच्चित्सुखधाम्ने नमः ॥

इति मुद्गलपुराणोक्तो गणेशन्यासः समाप्त ॥

**********************************

॥ श्रीगणेशपञ्चचामरस्तोत्रम् ॥

श्रीगणेशाय नमः ।

ललाट-पट्टलुण्ठितामलेन्दु-रोचिरुद्भटे

वृताति-वर्चरस्वरोत्सररत्किरीट-तेजसि ।

फटाफटत्फटत्स्फुरत्फणाभयेन भोगिनां

शिवाङ्कतः शिवाङ्कमाश्रयच्छिशौ रतिर्मम ॥ १॥

अदभ्र-विभ्रम-भ्रमद्-भुजाभुजङ्गफूत्कृती-

र्निजाङ्कमानिनीषतो निशम्य नन्दिनः पितुः ।

त्रसत्सुसङ्कुचन्तमम्बिका-कुचान्तरं यथा

विशन्तमद्य बालचन्द्रभालबालकं भजे ॥ २॥

विनादिनन्दिने सविभ्रमं पराभ्रमन्मुख-

स्वमातृवेणिमागतां स्तनं निरीक्ष्य सम्भ्रमात् ।

भुजङ्ग-शङ्कया परेत्यपित्र्यमङ्कमागतं

ततोऽपि शेषफूत्कृतैः कृतातिचीत्कृतं नमः ॥ ३॥

विजृम्भमाणनन्दि-घोरघोण-घुर्घुरध्वनि-

प्रहास-भासिताशमम्बिका-समृद्धि-वर्धिनम् ।

उदित्वर-प्रसृत्वर-क्षरत्तर-प्रभाभर-

प्रभातभानु-भास्वरं भवस्वसम्भवं भजे ॥ ४॥

अलङ्गृहीत-चामरामरी जनातिवीजन-

प्रवातलोलि-तालकं नवेन्दुभालबालकम् ।

विलोलदुल्ललल्ललाम-शुण्डदण्ड-मण्डितं

सतुण्ड-मुण्डमालि-वक्रतुण्डमीड्यमाश्रये ॥ ५॥

प्रफुल्ल-मौलिमाल्य-मल्लिकामरन्द-लेलिहा

मिलन् निलिन्द-मण्डलीच्छलेन यं स्तवीत्यमम् ।

त्रयीसमस्तवर्णमालिका शरीरिणीव तं

सुतं महेशितुर्मतङ्गजाननं भजाम्यहम् ॥ ६॥

प्रचण्ड-विघ्न-खण्डनैः प्रबोधने सदोद्धुरः

समर्द्धि-सिद्धिसाधनाविधा-विधानबन्धुरः ।

सबन्धुरस्तु मे विभूतये विभूतिपाण्डुरः

पुरस्सरः सुरावलेर्मुखानुकारिसिन्धुरः ॥ ७॥

अराल-शैलबालिका-ऽलकान्तकान्त-चन्द्रमो-

जकान्तिसौध-माधयन् मनोऽनुराधयन् गुरोः ।

सुसाध्य-साधवं धियां धनानि साधयन्नय-

नशेषलेखनायको विनायको मुदेऽस्तु नः ॥ ८॥

रसाङ्गयुङ्ग-नवेन्दु-वत्सरे शुभे गणेशितु-

स्तिथौ गणेशपञ्चचामरं व्यधादुमापतिः ।

पतिः कविव्रजस्य यः पठेत् प्रतिप्रभातकं

स पूर्णकामनो भवेदिभानन-प्रसादभाक् ॥ ९॥

छात्रत्वे वसता काश्यां विहितेयं यतः स्तुतिः ।

ततश्छात्रैरधीतेयं वैदुष्यं वर्द्धयेद्धिया ॥ १०॥

॥ इति श्रीकविपत्युपनामक-उमापतिशर्मद्विवेदि-विरचितं

गणेशपञ्चचामरस्तोत्रं सम्पूर्णम् ॥

*************************************

॥ श्रीगणेशपञ्चरत्नस्तोत्रम् ॥

श्रीगणेशाय नमः ॥

मुदाकरात्तमोदकं सदाविमुक्तिसाधकं

कलाधरावतंसकं विलासिलोकरञ्जकम् ।

अनायकैकनायकं विनाशितेभदैत्यकं

नताशुभाशुनाशकं नमामि तं विनायकम् ॥ १॥

नतेतरातिभीकरं नवोदितार्कभास्वरं

नमत्सुरारिनिर्जरं नताधिकापदुद्धरम् ।

सुरेश्वरं निधीश्वरं गजेश्वरं गणेश्वरं

महेश्वरं तमाश्रये परात्परं निरन्तरम् ॥ २॥

समस्तलोकशङ्करं निरस्तदैत्यकुञ्जरं

दरेतरोदरं वरं वरेभवक्त्रमक्षरम् ।

कृपाकरं क्षमाकरं मुदाकरं यशस्करं

मनस्करं नमस्कृतां नमस्करोमि भास्वरम् ॥ ३॥

अकिञ्चनार्तिमार्जनं चिरन्तनोक्तिभाजनं

पुरारिपूर्वनन्दनं सुरारिगर्वचर्वणम् ।

प्रपञ्चनाशभीषणं धनञ्जयादिभूषणं

कपोलदानवारणं भजे पुराणवारणम् ॥ ४॥

नितान्तकान्तदन्तकान्तिमन्तकान्तकात्मजं

अचिन्त्यरूपमन्तहीनमन्तरायकृन्तनम् ।

हृदन्तरे निरन्तरं वसन्तमेव योगिनां

तमेकदन्तमेव तं विचिन्तयामि सन्ततम् ॥ ५॥

महागणेशपञ्चरत्नमादरेण योऽन्वहं

प्रगायति प्रभातके हृदि स्मरन् गणेश्वरम् ।

अरोगतामदोषतां सुसाहितीं सुपुत्रतां

समाहितायुरष्टभूतिमभ्युपैति सोऽचिरात् ॥ ६॥

इति श्रीशङ्करभगवतः कृतौ श्रीगणेशपञ्चरत्नस्तोत्रं

सम्पूर्णम् ॥

************************************

॥ श्रीगणेशप्रातःस्मरणम् ॥

प्रातः स्मरामि गणनाथमनाथबन्धुं

सिन्दूरपूरपरिशोभितगण्डयुग्मम् ।

उद्दण्डविघ्नपरिखण्डनचण्डदण्ड-

माखण्डलादिसुरनायकवृन्दवन्द्यम् ॥ १॥

प्रातर्नमामि चतुराननवन्द्यमान-

मिच्छानुकूलमखिलं च वरं ददानम् ।

तं तुन्दिलं द्विरसनाधिपयज्ञसूत्रं

पुत्रं विलासचतुरं शिवयोः शिवाय ॥ २॥

प्रातर्भजाम्यभयदं खलु भक्तशोक-

दावानलं गणविभुं वरकुञ्जरास्यम् ।

अज्ञानकाननविनाशनहव्यवाह-

मुत्साहवर्धनमहं सुतमीश्वरस्य ॥ ३॥

श्लोकत्रयमिदं पुण्यं सदा साम्राज्यदायकम् ।

प्रातरुत्थाय सततं यः पठेत्प्रयतः पुमान् ॥ ४॥

॥ इति श्रीगणेशप्रातःस्मरणम् ॥

**********************************

॥ श्रीगणेशबाह्यपूजा ॥

श्री गणेशाय नमः ॥

ऐल उवाच ॥

बाह्यपूजां वद विभो! गृत्समदप्रकीर्तिताम् ।

येन मार्गेण विघ्नेशं भजिष्यसि निरन्तरम् ॥ १॥

गार्ग्य उवाच ॥

आदौ च मानसीं पूजां कृत्वा गृत्समदो मुनिः ।

बाह्यां चकार विधिवत्तां श्रृणुष्व सुखप्रदाम् ॥ २॥

हृदि ध्यात्त्वा गणेशानं परिवारादिसंयुतम् ।

नासिकारन्ध्रमार्गेण तं बाह्यांग चकार ह ॥ ३॥

आदौ वैदिकमन्त्रं स गणानां त्वेति सम्पठन् ।

पश्चाच्छलोक समुच्चार्य पूजयामास विघ्नपम् ॥ ४॥

गृत्समद उवाच ॥

चतुर्बाहुं त्रिनेत्रं च गजास्यं रक्त वर्णकम् ।

पाशांकुशादि-संयुक्तं मायायुक्त प्रचिन्तयेत् ॥ ५॥

आगच्छ ब्रह्मणां नाथ सुरा-ऽसुर-वरार्चित ।

सिद्धि-बुद्ध्यादि-संयुक्त! भक्तिग्रहणलालस!॥ ६॥

कृतार्थोऽहं कृतार्थोऽहं तवागमनतः प्रभो ।

विघ्नेशाऽनुगृहीतोऽहं सफलो मे भवोऽभवत् ॥ ७॥

रत्नसिंहासनं स्वामिन् गृहाण गणनायक ।

तत्रोपविश्य विघ्नेश रक्ष भक्तान् विशेषतः ॥ ८॥

सुवासिताभिरद्भिश्च पादप्रक्षालनं प्रभो!।

शीतोष्णाम्भः करोमि ते गृहाण पाद्यमुत्तमम् ॥ ९॥

सर्वतीर्थाहृतं तोयं सुवासितं सुवस्तुभिः ।

आचमनं च तेनैव कुरूष्व गणनायक ॥ १०॥

रत्न-प्रवाल-मुक्ताद्यैरनर्घ्यैः संस्कृतं प्रभो ।

अर्घ्यं गृहाण हेरम्ब द्विरदानन तोषकम् ॥ ११॥

दधि-मधु-घृतैर्युक्तं मधुपर्कं गजानन ।

गृहाण भावसंयुक्तं मया दत्तं नमोऽस्तु ते ॥ १२॥

पाद्ये च मधुपर्के च स्नाने वस्त्रोपधारणे ।

उपवीते भोजनान्ते पुनराचमनं कुरू ॥ १३॥

चम्पकाद्यैर्गणाध्यक्ष वासितं तैलमुत्तमम् ।

अभ्यंगं कुरू सर्वेश! लम्बोदर! नमोऽस्तु ते ॥ १४॥

यक्ष-कर्दमकाद्यैश्च विघ्नेश भक्तवत्सल!।

उद्वर्तनं कुरुष्व त्वं मया दत्तैर्महाप्रभो ॥ १५॥

नानातीर्थजलैर्ढुण्ढे! सुखोष्णभावरूपकैः ।

कमण्डलूद्भवैः स्नानं कुरू ढुण्ढे समर्पितैः ॥ १६॥

कामधेनु समद्भूतं पयः परमपावनम् ।

तेन स्नानं कुरुष्व त्वं हेरंब परमार्थवित् ॥ १७॥

पंचामृतानां मध्ये तु जलैः स्नानं पुनः पुनः ।

कुरु त्वं सर्वतीर्थेभ्यो गंगादिभ्यः समाहृतैः ॥ १८॥

दधि धेनुपयोद्भूतं मलापहरणं परम् ।

गृहाण स्नानकार्यार्थं विनायक दयानिधे ॥ १९॥

धेनुदुग्धोद्भवं ढुण्ढे घृतं सन्तोषकारकम् ।

महामलापघातार्थं तेन स्नानं कुरू प्रभो ॥ २०॥

सारघं सस्कृतं पूर्णं मधु मधुरसोद्भवम् ।

गृहाण स्नानकार्यार्थं विनायक नमोऽस्तु ते ॥ २१॥

इक्षुदण्डसमुद्भूतां शर्करां मलनाशिनीम् ।

गृहाण गणनाथ त्वं तया स्नानं समाचर ॥ २२॥

यक्षकर्दमकाद्यैश्च स्नानं कुरू गणेश्वर ।

अन्त्यं मलहरं शुद्धं सर्वसौगन्ध्यकारकम् ॥ २३॥

ततो गन्धाक्षतादींश्च दूर्वांकुरान् गजानन ।

समर्पयामि स्वल्पांस्त्वं गृहाण परमेश्वर ॥ २४॥

ब्रह्मणस्पत्यसूक्तैश्च ह्येकविंशतिवारकैः ।

अभिषेकं करोमि ते गृहाण द्विरदानन ॥ २५॥

तत आचमनं देव सुवासितजलेन च ।

कुरुष्व गणनाथ त्वं सर्वतीर्थभवेन वै ॥ २६॥

वस्त्रयुग्मं गृहाण त्वमनर्घ्यं रक्तवर्णकम् ।

लोकलज्जाहरं चैव विघ्ननाथ नमोऽस्तु ते ॥ २७॥

उत्तरीयं सुचित्रं वै नभस्तारांकितं यथा ।

गृहाण सर्वसिद्धीश मया दत्तं सुभक्तितः ॥ २८॥

उपवीतं गणाध्यक्ष गृहाण च ततः परम् ।

त्रैगुण्यमयरूपं तु प्रणवग्रन्थिबन्धनम् ॥ २९॥

ततः सिन्दूरकं देव गृहाण गणनायक ।

अंगलेपनभावार्थं सदानन्दविवर्धनम् ॥ ३०॥

नानाभूषणकानि त्वमंगेषु विविधेषु च ।

भासुरस्वर्णरत्नैश्च निर्मितानि गृहाण भो ॥ ३१॥

अष्टगन्ध-समायुक्तं गन्धं रक्तं गजानन ।

द्वादशांगेषु ते ढुण्ढे लेपयामि सुचित्रवत् ॥ ३२॥

रक्तचन्दनसंयुक्तानथ वा कुंकुमैर्युतान् ।

अक्षतान् विघ्नराज त्वं गृहाण भालमण्डले ॥ ३३॥

चम्पकादि-सुवृक्षेभ्यः सम्भूतानि गजानन ।

पुष्पाणि शमी-मन्दार-दूर्वादीनि गृहाण च ॥ ३४॥

दशांग गुग्गुलं धूपं सर्वसौरभकारकम् ।

गृहाण त्वं मया दत्तं विनायक महोदर ॥ ३५॥

नानाजातिभवं दीप गृहाण गणनायक ।

अज्ञानमलजं दोषं हरन्तं ज्योतिरूपकम् ॥ ३६॥

चतुर्विधान्नसम्पन्नं मधुरं लड्डुकादिकम् ।

नैवेद्यं ते मया दत्त भोजनं कुरू विघ्नप ॥ ३७॥

सुवासितं गृहाणेदं जलं तीर्थ समाहृतम् ।

भुक्तिमध्ये च पानार्थं देवदेवेश ते नमः ॥ ३८॥

भोजनान्ते करोद्वर्तं यक्षकर्दमकेन च ।

कुरुष्व त्वं गणाध्यक्ष पिब तोयं सुवासितम् ॥ ३९॥

दाडिमं खर्जुरं द्राक्षां रम्भादीनि फलानि वै ।

गृहाण देवदेवेश नानामधुरकाणि तु ॥ ४०॥

अष्टांग देव ताम्बूलं गृहाण मुखवासनम् ।

असकृद्विघ्नराज त्वं मया दत्तं विशेषतः ॥ ४१॥

दक्षिणां कांचनाद्यां तु नानाधातुसमुद्भवाम् ।

रत्नाद्यैः संयुतां ढुंढे गृहाण सकलप्रिय ॥ ४२॥

राजोपचारकाद्यानि गृहाण गणनायक ।

दानानि तु विचित्राणि मया दत्तानि विघ्नप ॥ ४३॥

तत आभरणं तेऽहमर्पयामि विधानतः ।

विविधैरूपचारैश्च तेन तुष्टो भव प्रभो ॥ ४४॥

ततो दूर्वांकुरान् ढुंढे एकविंशतिसंख्यकान् ।

गृहाण कार्यसिद्ध्यर्थं भक्तवात्सल्यकारणात् ॥ ४५॥

नानादीपसमायुक्तं नीराजनं गजानन ।

गृहाण भावसंयुक्तं सर्वाज्ञानादिनाशन ॥ ४६॥

गणानां त्वेति मन्त्रस्य जपं साहस्रकं परम् ।

गृहाण गणनाथ त्वं सर्वसिद्धिप्रदो भव ॥ ४७॥

आर्तिक्यं च सुकर्पूरं नानादीपमयं प्रभो ।

गृहाण ज्योतिषां नाथ तथा नीराजयाम्यहम् ॥ ४८॥

पादयोस्ते तु चत्वारि नाभौ द्वे वदने प्रभो ।

एकं तु सप्तवारं वै सर्वांगेषु निरंजनम् ॥ ४९॥

चतुर्वेदभवैर्मन्त्रैर्गाणपत्यैर्गजानन ।

मन्त्रितानि गृहाण त्वं पुष्पपत्राणि विघ्नप ॥ ५०॥

पंचप्रकारकैः स्तोत्रैर्गाणपत्यैर्गणाधिप ।

स्तौमि त्वां तेन सन्तुष्टो भव भक्तिप्रदायक ॥ ५१॥

एकविंशतिसंख्यं वा त्रिसंख्यं वा गजानन ।

प्रादक्षिण्यं गृहाण त्वं ब्रह्मन् ब्रह्मेशभावन ॥ ५२॥

साष्टांगा प्रणतिं नाथ एकविंशतिसम्मिताम् ।

हेरम्ब सर्वपूज्य त्वं गृहाण तु मया कृताम् ॥ ५३॥

न्यूनातिरिक्तभावार्थं किंचिद् दुर्वांकुरान् प्रभो ।

समर्पयामि तेन त्वं सांगां पूजां कुरूष्व ताम् ॥ ५४॥

त्वया दत्तं स्वहस्तेन निर्माल्यं चिन्तयाम्यहम् ।

शिखायां धारयाम्येव सदा सर्वप्रदं च तत् ॥ ५५॥

अपराधानसंख्यातान् क्षमस्व गणनायक ।

भक्तं कुरु च मां ढुंढे तव पादप्रियं सदा ॥ ५६॥

त्वं माता त्वं पिता मे वै सुहृत्सम्बन्धिकादयः ।

त्वमेव कुलदेवश्च सर्वं त्वं मे न संशयः ॥ ५७॥

जाग्रत्-स्वप्न-सुषुप्तिभिर्देह-वांग्मनसैः कृतम् ।

सांसर्गिकेण यत्कर्म गणेशाय समर्पये ॥ ५८॥

ब्राह्यं नानाविधं पापं महोग्रं तल्लयं व्रजेत् ।

गणेशपादतीर्थस्य मस्तके धारणात् किल ॥ ५९॥

पादोदकं गणेशस्य पीतं मर्त्येण तत्क्षणात् ।

सर्वांतर्गतजं पापं नश्यति गणनातिगम् ॥ ६०॥

गणेशूच्छिष्टगन्धं वै द्वादशांगेषु चर्चयेत् ।

गणेशतुल्यरूपः स दर्शनात् सर्वपापहा ॥ ६१॥

यदि गणेशपूजादौ गन्धभस्मादिकं चरेत् ।

अथवोच्छिष्टगन्धं तु नो चेत्तत्र विधिं चरेत् ॥ ६२॥

द्वादशांगेषु विघ्नेशं नाममन्त्रेण चाऽर्चयेत् ।

तेन सोऽपि गणेशेन समो भवति भूतले ॥ ६३॥

आदौ गणेश्वरं मूर्ध्नि ललाटे विघ्ननायकम् ।

दक्षिणे कर्णमूले तु वक्रतुण्डं समर्चयेत् ॥ ६४॥

वामे कर्णस्य मूले वै चैकदन्तं समर्चयेत् ।

कण्ठे लम्बोदरं देवं हृदि चिन्तामणिं तथा ॥ ६५॥

बाहौ दक्षिणके चैव हेरंबं वामबाहुके ।

विकटं नाभिदेशे तु विघ्ननाथं समर्चयेत् ॥ ६६॥

कुक्षौ दक्षिणगायां तु मयूरेशं समर्चयेत् ।

वामकुक्षौ गजास्यं वै पृष्ठे स्वानन्दवासिनम् ॥ ६७॥

सर्वांगलेपनं शस्तं चित्रितं चाऽष्टगन्धकैः ।

गाणेशानां विशेषेण सर्वभद्रस्य कारणात् ॥ ६८॥

ततोच्छिष्टं तु नैवेद्यं गणेशस्य भुनज्म्यहम् ।

भुक्ति-मुक्तिप्रदं पूर्णं नानापापनिकृन्तनम् ॥ ६९॥

गणेशस्मरणेनैव करोमि कालखण्डनम् ।

गाणपत्यैश्च संवासः सदाऽस्तु मे गजानन ॥ ७०॥

गार्ग्य उवाच ॥

एवं गृत्समदश्चैव चकार बाह्यपूजनम् ।

त्रिकालेषु महायोगी सदा भक्तिसमन्वितः ॥ ७१॥

तथा कुरु महीपाल गाणपत्यो भविष्यसि ।

तथा गृत्समदः साक्षात्तथा त्वमपि निश्चितम् ॥ ७२॥

इति श्रीमदान्त्ये मुद्गलपुराणे गणेशबाह्यपूजा समाप्ता ॥

************************************

॥ श्रीगणेशभुजङ्गम् ॥

रणत्क्षुद्रघण्टानिनादाभिरामं

चलत्ताण्डवोद्दण्डवत्पद्मतालम् ।

लसत्तुन्दिलाङ्गोपरिव्यालहारं

गणाधीशमीशानसूनुं तमीडे ॥ १॥

ध्वनिध्वंसवीणालयोल्लासिवक्त्रं

स्फुरच्छुण्डदण्डोल्लसद्बीजपूरम् ।

गलद्दर्पसौगन्ध्यलोलालिमालं

गणाधीशमीशानसूनुं तमीडे ॥ २॥

प्रकाशज्जपारक्तरन्तप्रसून-

प्रवालप्रभातारुणज्योतिरेकम् ।

प्रलम्बोदरं वक्रतुण्डैकदन्तं

गणाधीशमीशानसूनुं तमीडे ॥ ३॥

विचित्रस्फुरद्रत्नमालाकिरीटं

किरीटोल्लसच्चन्द्ररेखाविभूषम् ।

विभूषैकभूशं भवध्वंसहेतुं

गणाधीशमीशानसूनुं तमीडे ॥ ४॥

उदञ्चद्भुजावल्लरीदृश्यमूलो-

च्चलद्भ्रूलताविभ्रमभ्राजदक्षम् ।

मरुत्सुन्दरीचामरैः सेव्यमानं

गणाधीशमीशानसूनुं तमीडे ॥ ५॥

स्फुरन्निष्ठुरालोलपिङ्गाक्षितारं

कृपाकोमलोदारलीलावतारम् ।

कलाबिन्दुगं गीयते योगिवर्यै-

र्गणाधीशमीशानसूनुं तमीडे ॥ ६॥

यमेकाक्षरं निर्मलं निर्विकल्पं

गुणातीतमानन्दमाकारशून्यम् ।

परं परमोङ्कारमान्मायगर्भं ।

वदन्ति प्रगल्भं पुराणं तमीडे ॥ ७॥

चिदानन्दसान्द्राय शान्ताय तुभ्यं

नमो विश्वकर्त्रे च हर्त्रे च तुभ्यम् ।

नमोऽनन्तलीलाय कैवल्यभासे

नमो विश्वबीज प्रसीदेशसूनो ॥ ८॥

इमं संस्तवं प्रातरुत्थाय भक्त्या

पठेद्यस्तु मर्त्यो लभेत्सर्वकामान् ।

गणेशप्रसादेन सिध्यन्ति वाचो

गणेशे विभौ दुर्लभं किं प्रसन्ने ॥ ९॥

इति श्रीमच्छङ्कराचार्यकृतं गणेशभुजङ्गप्रयातस्तोत्रं

सम्पूर्णम् ॥

************************************

॥ श्रीगणेशमन्त्रस्तोत्रम् ॥

श्रीगणेशाय नमः ।

उद्दालक उवाच ।

श्रृणु पुत्र महाभाग योगशान्तिप्रदायकम् ।

येन त्वं सर्वयोगज्ञो ब्रह्मभूतो भविष्यसि ॥ १॥

चित्तं पञ्चविधं प्रोक्तं क्षिप्तं मूढं महामते ।

विक्षिप्तं च तथैकाग्रं निरोधं भूमिसज्ञकम् ॥ २॥

तत्र प्रकाशकर्ताऽसौ चिन्तामणिहृदि स्थितः ।

साक्षाद्योगेश योगेज्ञैर्लभ्यते भूमिनाशनात् ॥ ३॥

चित्तरूपा स्वयंबुद्धिश्चित्तभ्रान्तिकरी मता ।

सिद्धिर्माया गणेशस्य मायाखेलक उच्यते ॥ ४॥

अतो गणेशमन्त्रेण गणेशं भज पुत्रक ।

तेन त्वं ब्रह्मभूतस्तं शन्तियोगमवापस्यसि ॥ ५॥

इत्युक्त्वा गणराजस्य ददौ मन्त्रं तथारुणिः ।

एकाक्षरं स्वपुत्राय ध्यनादिभ्यः सुसंयुतम् ॥ ६॥

तेन तं साधयति स्म गणेशं सर्वसिद्धिदम् ।

क्रमेण शान्तिमापन्नो योगिवन्द्योऽभवत्ततः ॥ ७॥

इति मुद्गलपुराणोक्तं गणेशमन्त्रस्तोत्रं समाप्तम् ।

************************************

॥ श्रीगणेशमहिम्नःस्तोत्रम् ॥

श्री गणेशाय नमः ।

अनिर्वाच्यं रूपं स्तवन-निकरो यत्र गलित-

स्तथा वक्ष्ये स्तोत्रं प्रथमपुरुषस्याऽत्र महतः ।

यतो जातं विश्वं स्थितमपि सदा यत्र विलयः

स कीदृग्गीर्वाणः सुनिगमनुतः श्रीगणपतिः ॥ १॥

गणेशं गाणेशाः शिवमिति च शैवाश्च विबुधा

रविं सौरा विष्णुं प्रथमपुरुषं विष्णुभजकाः ।

वदन्त्येके शाक्ता जगदुदयमूलां परिशिवां

न जाने किं तस्मै नम इति परं ब्रह्म सकलम् ॥ २॥

तथेशं योगज्ञा गणपतिमिमं कर्म निखिलं

समीमांसा वेदान्तिन इति परं ब्रह्म सकलम् ।

अजां सांख्यो ब्रूते सकलगुणरूपां च सततं

प्रकर्तारं न्यायस्त्वथ जगति बौद्धा धियमिति ॥ ३॥

कथं ज्ञेयो बुद्धेः परतर इयं बाह्यसरणिर्यथा

धीर्यस्य स्यात् स च तदनुरूपो गणपतिः ।

महत्कृत्यं तस्य स्वयमपि महान् सूक्ष्ममणुवद्

ध्वनिर्ज्योतिर्बिन्दुर्गगनसदृशः किं च सदसत् ॥ ४॥

अनेकास्योऽपाराक्षि- करचरणोऽनन्त-हृदयस्तथा

नानारूपो विविधवदनः श्रीगणपतिः ।

अनन्ताह्वः शक्त्या विविधगुणकर्मैकसमये

त्वसंख्यातानन्ताभिमत- फलदोऽनेकविषये ॥ ५॥

न यस्याऽन्तो मध्यो न च भवति चादिः सुमहतामलिप्तः

कृत्वेत्थं सकलमपि खंवत् स च पृथक् ।

स्मृतः संस्मर्तॄणां सकलहृदयस्थः प्रियकरो

नमस्तस्मै देवाय सकलसुरवन्द्याय महते ॥ ६॥

गणेशाद्यं बीजं दहन-वनिता-पल्लवयुतं

मनुश्चैकार्णोऽयं प्रणवसहितोऽभीष्टफलदम् ।

सबिन्दुश्चागाद्याङ्गणकऋषिछन्दोऽस्य च निचृत्

स देवः प्राग्बीजं विपदपि च शक्तिर्जपकृताम् ॥ ७॥

गकारो हेरम्बः सगुण इति पुनिर्गुणमयो

द्विधाऽप्येको जातः प्रकृतिपुरुषो ब्रह्म हि गणः ।

स चेशश्चोत्पत्ति-स्थिति- लयकरोऽयं प्रथमको

यतो भूतं भव्यं भवति पतिरीशो गणपतिः ॥ ८॥

गकारः कण्ठोर्ध्व गजमुखसमो मर्त्यसदृशो

णकारः कण्डाधो जठरसदृशाकार इति च ।

अधोभाग ः कट्यां चरण इति हीशोऽस्य च तनु-

र्विभातीत्थं नाम त्रिभुवनसमं भूर्भुवःसुवः ॥ ९॥

गणेशेति त्र्यर्णात्मकमपि वरं नाम सुखदं

सकृत्प्रोच्चैरुच्चारितमिति नृभिः पावनकरम् ।

गणेशस्यैकस्य प्रतिजपकरस्यास्य सुकृतं

न विज्ञातो नाम्नः सकलमहिमा कीदृशविधः ॥ १०॥

गणेशेत्याह्वां यः प्रवदति मुहुस्तस्य पुरतः

प्रपश्यँस्तद्वक्त्रं स्वयमपि गणस्तिष्ठति तदा ।

स्वरूपस्य ज्ञानं त्वमुक इति नाम्नाऽस्य भवति

प्रबोधः सुप्तस्य त्वखिलमिह सामर्थ्यममुना ॥ ११॥

गणेशो विश्वेऽस्मिन् स्थित इह च विश्वं गणपतौ

गणेशो यत्रास्ते धृति- मतिरनैश्वर्यमखिलम् ।

समुक्तं नामैकं गणपतिपदं मंगलमयं

तदेकास्यं दृष्टेः सकल-विबुधास्येक्षण- समम् ॥ १२॥

बहुक्लेशैर्व्याप्तः स्मृत उत गणेशे च हृदये

क्षणात् क्लेशान् मुक्तोभवति सहसा त्वभ्रचयवत् ।

बने विद्यारम्भे युधि रिपुभये कुत्र गमने

प्रवेशे प्राणान्ते गणपतिपदं चाऽऽशु विशति ॥ १३॥

गणाध्यक्षो ज्येष्ठः कपिल अपरो मंगलनिधि-

र्दयालुर्हेरमबो वरद इति चिन्तामणिरजः ।

वरानीशो ढुण्ढिर्गजवदननामा शिवसुतो

मयूरेशो गौरीतनय इति नामानि पठति ॥ १४॥

महेशोऽयं विष्णुः सकविरविरिन्दुः कमलजः

क्षितिस्तोयं वह्निः श्वसन इति खं त्वद्रिरूदधिः ।

कुजस्तारः शुक्रो गुरुरुडुबुधोऽगुश्च धनदो

यमः पाशो काव्यः शनिरखिलरूपो गणपतिः ॥ १५॥

मुखं वह्निः पादौ हरिरपि विधाता प्रजननं

रविर्नेत्रे चन्द्रो हृदयमपि कामोऽस्य मदनः ।

करौ शक्रः कट्यामवनिरूदरं भाति दशनं

गणेशस्यासन् वै क्रतुमयवपुश्चैव सकलम् ॥ १६॥

अनर्घ्यालंकारैररुण-वसनैर्भूषित- तनुः

करीन्द्रास्यः सिंहासनमुपगतो भाति बुधराट् ।

स्थितः स्यात्तन्मध्येऽप्युदित- रविबिम्बोपम-रुचिः

स्थिता सिद्धिर्वामे मतिरितरगा चामरकरा ॥ १७॥

समन्तात्तस्यासन् प्रवरमुनिसिद्धाः सुरगणाः

प्रशंसन्तीत्यग्रे विविधनुतिभिः साऽञ्जलिपुटाः ।

बिडौजाद्यैर्ब्रह्मादिभिरनुवृतो भक्तनिकरै-

र्गणक्रीडामोद-प्रमुद-विकटाद्यैः सहचरै ः ॥ १८॥

वशित्वाद्यष्टाष्टादश-दिगखिलाल्लोलमनुवाग्

धृतिः पादूः खड्गोऽञ्जनरसबलाः सिद्धय इमाः ।

सदा पृष्ठे तिष्टन्त्यानिमिषिदृशस्तन्मुखलया

गणेशं सेवन्तेऽत्यतिनिकटसूपायनकराः ॥ १९॥

मृगांकास्या रम्भाप्रभृतिगणिका यस्य पुरतः

सुसंगीत कुर्वन्त्यपि कुतुकगन्धर्वसहिताः ।

मुदः पारो नाऽत्रेत्यनुपमपदे दोर्विगलिता

स्थिरं जातं चित्तं चरणमवलोक्यास्य विमलम् ॥ २०॥

हरेणाऽयं ध्यातस्त्रिपुरमथने चाऽसुरवधे

गणेशः पार्वत्या बलिविजयकालेऽपि हरिणा ।

विधात्रा संसृष्टावुरगपतिना क्षोणिधरणे

नरैः सिद्धौ मुक्तौ त्रिभुवनजये पुष्पधनुषा ॥ २१॥

अयं सुप्रासादे सुर इव निजानन्दभुवने

महान् श्रीमानाद्यो लघुतरगृहे रंकसदृशः ।

शिवद्वारे द्वाःस्थो नृप इव सदा भूपतिगृहे

स्थितो भूत्वोमांके शिशुगणपतिर्लालनपरः ॥ २२॥

अमुष्मिन् सन्तुष्टे गजवदन एवापि विबुधे

ततस्ते सन्तुष्टास्त्रिभुवनगताः स्युर्बुधगणाः ।

दयालुर्हेरम्बो न च भवति यस्मिंश्च पुरुषे

वृथा सर्वं तस्य प्रजननमतः सान्द्रतमसि ॥ २३॥

वरेण्यो भूशुण्डिर्भृगु-गुरु-कुजा-मुद्गलमुखा

ह्यपारास्तद्भक्ता जप-हवन-पूजा-स्तुतिपराः ।

गणेशोऽयं भक्तप्रिय इति च सर्वत्र गदितं

विभक्तिर्यत्रास्ते स्वयमपि सदा तिष्ठति गणः ॥ २४॥

मृदः काश्चिद्धातोश्छद- विलिखिता वाऽपि दृषदः

स्मृता व्याजान्मूर्तिः पथि यदि बहिर्येन सहसा ।

अशुद्धोऽद्धा द्रष्टा प्रवदति तदाह्वां गणपतेः

श्रुत्वा शुद्धो मर्त्यो भवति दुरिताद् विस्मय इति ॥ २५॥

बहिर्द्वारस्योर्ध्वं गजवदन-वर्ष्मेन्धनमयं

प्रशस्तं वा कृत्वा विविध कुशलैस्तत्र निहितम् ।

प्रभावात्तन्मूर्त्या भवति सदनं मंगलमयं

विलोक्यानन्दस्तां भवति जगतो विस्मय इति ॥ २६॥

सिते भाद्रे मासे प्रतिशरदि मध्याह्नसमये

मृदो मूर्ति कृत्वा गणपतितिथौ ढुण्ढिसदृशीम् ।

समर्चन्त्युत्साहः प्रभवति महान् सर्व सदने

विलोक्यानन्दस्ताम् प्रभवति नृणां विस्मय इति ॥२७।

तथा ह्येकः श्लोको वरयति महिम्नो गणपतेः

कथं स श्लोके ऽस्मिन् स्तुत इति भवेत् सम्प्रपठिते ।

स्मृतं नामास्यैकं सकृदिदमनन्ताह्वयसमं

यतो यस्यैकस्य स्तवनसदृशं नाऽन्यदपरम् ॥ २८॥

गजवदन विभो यद्- वर्णितं वैभवं ते

त्विह जनुषि ममेत्थं चारु तद्दर्शयाशु ।

त्वमसि च करुणायाः सागरः कृत्स्नदाता-

अप्यति तव भृतकोऽहं सर्वदा चिन्तकोऽस्मि ॥ २९॥

सुस्तोत्रं प्रपठतु नित्यमेतदेव स्वानन्दं

प्रति गमनेऽप्ययं सुमार्गः ।

सचिन्त्यं स्वमनसि तत्पदारविन्दं

स्थाप्याग्रे स्तवनफलं नतीः करिष्ये ॥ ३०॥

गणेशदेवस्यं महात्म्यमेतद् यः श्रावयेद्वाऽपि पठेच्च तस्य ।

क्लेशा लयं यान्ति लभेच्च शीघ्रं स्त्री-पुत्र-

विद्यार्थ-गृहं च मुक्तिम् ॥ ३१॥

॥ इति श्रीपुष्पदन्तविरचितं श्रीगणेशमहिम्नः स्तोत्रं

सम्पूर्णम् ॥

**********************************

॥ श्रीगणेशमानसपूजा ॥

श्री गणेशाय नमः ॥

गृत्समद उवाच ॥

विघ्नेशवीर्याणि विचित्रकाणि बंदीजनैर्मागधकैः स्मृतानि ।

श्रुत्वा समुत्तिष्ठ गजानन त्वं ब्राह्मे जगन्मंगलकं कुरुष्व ॥ १॥

एवं मया प्रार्थितो विघ्नराजश्चित्तेन चोत्थाय बहिर्गणेशः ।

तं निर्गतं वीक्ष्य नमन्ति देवाः शंभ्वादयो योगिमुखास्तथाऽहम् ॥ २॥

शौचादिकं ते परिकल्पयामि हेरम्ब वै दन्तविशुद्धिमेवम् ।

वस्त्रेण सम्प्रोक्ष्य मुखारविन्दं देवं सभायां विनिवेशयामि ॥ ३॥

द्विजादिसर्वैरभिवन्दितं च शुकादिभिर्मोद-सुमोदकाद्यैः ।

संभाष्य चालोक्य समुत्थितं तं सुमण्डपं कल्प्य निवेशयामि ॥ ४॥

रत्नैः सुदीप्तैः प्रतिबिम्बितं तं पश्यामि चित्तेन विनायकं च ।

तत्रासनं रत्नसुवर्णयुक्तं संकल्प्य देवं विनिवेशयामि ॥ ५॥

सिद्ध्या च बुद्ध्या सह विघ्नराज! पाद्यं कुरु प्रेमभरेण सर्वैः ।

सुवासितं नीरमथो गृहाण चित्तेन दत्तं च सुखोष्णभावम् ॥ ६॥

ततः सुवस्त्रेण गणेशमादौ सम्प्रोक्ष्य दूर्वादिभिरर्चयामि ।

चित्तेन भावप्रिय दीनबन्धो मनो विलीनं कुरु ते पदाब्जे ॥ ७॥

कर्पूरकैलादि-सुवासितं तु सुकल्पितं तोयमथो गृहाण ।

आचम्य तेनैव गजानन! त्वं कृपाकटाक्षेण विलोकयाशु ॥ ८॥

प्रवाल-मुक्ताफल-हारकाद्यैः सुसंस्कृतं ह्यन्तरभावकेन ।

अनर्घ्यमर्घ्यं सफलं कुरुष्व मया प्रदत्तं गणराज ढुण्ढे ॥ ९॥

सौगंध्ययुक्तं मधुपर्कमाद्यं संकल्पितं भावयुतं गृहाण ।

पुनस्तथाऽऽचम्य विनायक त्वं भक्तांश्च भक्तेश सुरक्षयाशु ॥ १०॥

सुवासितं चंपक जातिकाद्यैस्तैलं मया कल्पितमेव ढुण्ढे ।

गृहाण तेन प्रविमर्दयामि सर्वांगमेवं तव सेवनाय ॥ ११॥

ततः सुखोष्णेन जलेन चाहमनेकतीर्थाहृतकेन ढुण्ढे ।

चित्तेन शुद्धेन च स्नापयामि स्नानं मया दत्तमथो गृहाण ॥ १२॥

ततः पयःस्नानमचिन्त्यभाव गृहाण तोयस्य तथा गणेश ।

पुनर्दधिस्नानमनामयत्वं चित्तेन दत्तं च जलस्य चैव ॥ १३॥

ततो घृतस्नानमपारवन्द्य सुतीर्थजं विघ्नहर प्रसीद ।

गृहाण चित्तेन सुकल्पितं तु ततो मधुस्नानमथो जलस्य ॥ १४॥

सुशर्करायुक्तमथो गृहाण स्नानं मया कल्पितमेव ढुण्ढे ।

ततो जलस्नानमघापहंतृ विघ्नेश मायाभ्रमं हिनिवारयाशु ॥ १५॥

सुयक्षपंकं स्तमथो गृहाण स्नानं परेशाधिपते ततश्च ।

कौमण्डलीसंभवजं कुरुष्व विशुद्धमेवं परिकल्पितं तु ॥ १६॥

ततस्तु सूक्तैर्मनसा गणेशं सम्पूज्य दूर्वादिभिरल्पभावैः ।

अपारकैर्मण्डलभूतब्रह्मणस्पत्यादिकैस्तं ह्यभिषेचयामि ॥ १७॥

ततः सुवस्त्रेण तु प्रोंछनं वै गृहाण चित्तेन मया सुकल्पितम् ।

ततो विशुद्धेन जलेन ढुण्ढे ह्याचान्तमेवं कुरु विघ्नराज ॥ १८॥

अग्नौ विशुद्धे तु गृहाण वस्त्रे ह्यनर्घ्यमौल्ये मनसा मया ते ।

दत्ते परिच्छाद्य निजात्मदेहं ताभ्यां मयूरेश जनांश्च पालय ॥ १९॥

आचम्य विघ्नेश पुनस्तथैव चित्तेन दत्तं सुखमुत्तरीयम् ।

गृहाण भक्तप्रतिपालक त्वं नमोऽथ तारकसंयुतं तु ॥ २०॥

यज्ञोपवीतं त्रिगुणस्वरूपं सौवर्णमेवं ह्यहिनाथभूतम् ।

भावेन दत्तं गणनाथ तत्वं गृहाण भक्तोद्‌धृतिकारणाय ॥ २१॥

आचान्तमेवं मनसा प्रदत्तं कुरुष्व शुद्धेन जलेन ढुण्ढे ।

पुनश्च कौमण्डलकेन पाहि विश्वं प्रभो खेलकरं सदा ते ॥ २२॥

उद्यद्दिनेशाभमथो गृहाण सिन्दूरकं ते मनसा प्रदत्तम् ।

सर्वांगसंलेपनमादराद्वै कुरुष्व हेरम्ब च तेन पूर्णम् ॥ २३॥

सहस्रशीर्षं मनसा मया त्वं दत्तं किरीटं तु सुवर्णजं वै ।

अनेकरत्नैः खचितं गृहाण ब्रह्मेश ते मस्तकशोभनाय ॥ २४॥

विचित्ररत्नैः कनकेन ढुण्ढे युतानि चित्तेन मया परेश ।

दत्तानि नानापदकुण्डलानि गृहाण शूर्पश्रुतिभूषणाय ॥ २५॥

शुण्डाविभूषार्थमनन्तखेलिन् सुवर्णजं कंचुकमागृहाण ।

रत्नैश्च युक्तं मनसा मया, यद्दत्तं प्रभो

तत्सफलंकुरुष्व ॥ २६॥

सुवर्णरत्नैश्च युतानि ढुण्ढे सदैकदन्ताभरणानि कल्प्य ।

गृहाण चूडाकृतये परेश दत्तानि दन्तस्य च शोभनार्थम् ॥ २७॥

रत्नैः सुवर्णेन कृतानि तानि गृहाण चत्वारि मया प्रकल्प्य ।

सम्भूषय त्वं कटकानि नाथ चतुर्भुजेषु ह्यज विघ्नहारिन् ॥ २८॥

विचित्ररत्नैः खचितं सुवर्णसंभूतकं गृह्य मया प्रदत्तम् ।

तथांगुलीष्वांगुलिकं गणेश चित्तेन् संशोभय तत्परेश ॥ २९॥

विचित्ररत्नैः खचितानि ढुण्ढे केयूरकाणि ह्यथ कल्पितानि ।

सुवर्णजानि प्रथमाधिनाथ गृहाण दत्तानि तु बाहुषु त्वम् ॥ ३०॥

प्रवाल-मुक्ताफल-रत्नजैस्त्वं सुवर्णसूत्रैश्च गृहाण कण्ठे ।

चित्तेन दत्ता विविधाश्च माला ऊरूदरे सोभय विघ्नराज ॥ ३१॥

चन्द्रं ललाटे गणनाथ पूर्णं वृद्धिक्षयाभ्यां तु विहीनमाद्यम् ।

संशोभय त्वं वरसंयुतं ते भक्तिप्रियत्वं प्रकटीकुरुष्व ॥ ३२॥

चिंतामणिं चिंतितदं परेश हृद्देशगं ज्योतिर्मयं कुरुष्व ।

मणिं सदानन्दसुखप्रदं च विघ्नेश दीनार्थद पालयस्व ॥ ३३॥

नाभौ फणीशं च सहस्रशीर्षं संवेष्टनेनैव गणाधिनाथ ।

भक्तं सुभूषं कुरु भूषणेन वरप्रदानं सफलं परेश ॥ ३४॥

कटीतटे रत्नसुवर्णयुक्तां कांचीं सुचित्तेन च धारयामि ।

विघ्नेश ज्योतिर्गणदीपनीं ते प्रसीद भक्तं कुरु मां दयाब्धे ॥ ३५॥

हेरम्ब ते रत्नसुवर्णयुक्ते सुनूपुरे मंजिरके तथैव ।

सुकिंकिणीनादयुते सुबुद्ध्या सुपादयोः शोभय मे प्रदत्ते ॥ ३६॥

इत्यादि-नानाविध-भूषणानि तवेच्छया मानसकल्पितानि ।

सम्भूषयाम्येव त्वदंकेषु विचित्रधातुप्रभवाणि ढुण्ढे ॥ ३७॥

सुचन्दनं रक्तममोघवीर्यं सुघर्षितं ह्यष्टकगन्धमुख्यैः ।

युक्तं मया कल्पितमेकदन्त गृहाण ते त्वंगविलेपनार्थम् ॥ ३८॥

लिप्तेषु वैचित्र्यमथाष्टगन्धैरंगेषु तेऽहं प्रकरोमि चित्रम् ।

प्रसीद चित्तेन विनायक त्वं ततः सुरक्तं रविमेव भाले ॥ ३९॥

घृतेन वै कुंकुमकेन रक्तान् सुतंडुलांस्ते परिकल्पयामि ।

भाले गणाध्यक्ष गृहाण पाहि भक्तान् सुभक्तिप्रिय दीनबन्धो ॥ ४०॥

गृहाण भो चम्पकमालतीनि जलपंकजानि स्थलपंकजानि ।

चित्तेन दत्तानि च मल्लिकादि पुष्पाणि नानाविधवृक्षजानि ॥ ४१॥

पुष्पोपरि त्वं मनसा गृहाण हेरम्ब मन्दारशमीदलानि ।

मया सुचित्तेन च कल्पितानि ह्यपारकाणि प्रणवाकृते तु ॥ ४२॥

दूर्वांकुरान् वै मनसा प्रदत्तांस्त्रिपंचपत्रैर्युतकांश्च स्निग्धान ।

गृहाण विघ्नेश्वर संख्यया त्वं हीनाश्च सर्वोपरि वक्रतुण्ड ॥ ४३॥

दशांगभूतं मनसा मया ते धूपं प्रदत्तं गणराज ढुण्ढे ।

गृहाण सौरभ्यकरं परेश सिद्ध्या च बुद्ध्या सह भक्तपाल ॥ ४४॥

दीपं सुवर्त्या युतमादरात्ते दत्तं मया मानसकं गणेश ।

गृहाण नानाविधजं घृतादि-तैलादि-संभूतममोघदृष्टे ॥ ४५॥

भोज्यं च लेह्यं गणराज पेयं चोष्यं च नानाविध-षड्रसाढ्यम् ।

गृहाण नैवेद्यमथो मया ते सुकल्पितं पुष्टिपते महात्मन् ॥ ४६॥

सुवासितं भोजनमध्यभागे जलं मया दत्तमथो गृहाण ।

कमण्डलुस्थं मनसा गणेश पिबस्व विश्वादिकतृप्तिकारिन् ॥ ४७॥

ततः करोद्वर्तनकं गृहाण सौगन्ध्युक्तं मुखमार्जनाय ।

सुवासितेनैव सुतीर्थजेन सुकल्पितं नाथ गृहाण ढुण्ढे ॥ ४८॥

पुनस्तथाचम्य सुवासितं च दत्तं मया तीर्थजलं पिबस्व ।

प्रकल्प्य विघ्नेश ततः परं ते सम्प्रोंछनं हस्तमुखेकरोमि ॥ ४९॥

द्राक्षादि-रम्भाफल-चूतकानि खार्जूर-कार्कन्धुक-दाडिमानि ।

सुस्वादयुक्तानि मया प्रकल्प्य गृहाण दत्तानि फलानि ढुण्ढे ॥ ५०॥

पुनर्जलेनैव करादिकं ते संक्षालयेऽहं मनसा गणेश ।

सुवासितं तोयमथो पिबस्व मया प्रदत्तं मनसा परेश ॥ ५१॥

अष्टांगयुक्तं गणनाथ दत्तं ताम्बूलकं ते मनसा मया वै ।

गृहाण विघ्नेश्वर भावयुक्तं सदासकृत्तुण्डविशोधनार्थम् ॥ ५२॥

ततो मया कल्पितके गणेश महासने रत्नसुवर्णयुक्ते ।

मन्दारकूर्पासकयुक्त-वस्त्रैरनर्घ्य-संछादितके प्रसीद ॥ ५३॥

ततस्त्वदीयावरणं परेश सम्पूजयेऽहं मनसा यथावत् ।

नानोपचारैः परमप्रियैस्तु त्वत्प्रीतिकामार्थमनाथबन्धो ॥ ५४॥

गृहाण लम्बोदर दक्षिणां ते ह्यसंख्यभूतां मनसा प्रदत्ताम् ।

सौवर्ण-मुद्रादिक-मुख्यभावां, पाहि प्रभो विश्वमिदं गणेश ॥। ५५॥

राजोपचारान् विविधान् गृहाण हस्त्यश्व-छत्रादिकमादराद्वै ।

चित्तेन दत्तान् गणनाथ ढुण्ढे ह्यपारसख्यान् स्थिरजंगमांस्ते ॥ ५६॥

दानाय नानाविधरूपकांस्ते गृहाण दत्तान् मनसा मया वै ।

पदार्थभूतान् स्थिर-जंगमांश्च हेरम्ब मां तारय मोहभावात् ॥ ५७॥

मन्दारपुष्पाणि शमीदलानि दूर्वांकुरांस्ते मनसा ददामि ।

हेरम्ब लम्बोदर दीनपाल गृहाण भक्तं कुरु मां पदे ते ॥ ५८॥

ततो हरिद्रामबिरं गुलालं सिंदूरकं ते परिकल्पयामि ।

सुवासितं वस्तुसुवासभूतैर्गृहाण ब्रह्मेश्वर-शोभनार्थम् ॥ ५९॥

ततः शुकाद्याः शिव-विष्णुमुख्या इन्द्रादयः शेषमुखास्तथाऽन्ये ।

मुनीन्द्रकाः सेवकभावयुक्ताः सभासनस्थं प्रणमन्ति ढुण्ढिम् ॥ ६०॥

वामांगके शक्तियुता गणेशं सिद्धिस्तु नानाविधसिद्धि भिस्तम् ।

अत्यन्तभावेन सुसेवते तु मायास्वरूपा परमार्थभूता ॥ ६१॥

गणेश्वर दक्षिणभागसंस्था बुद्धिः कलाभिश्च सुबोधिकाभिः ।

विद्याभिरेवं भजते परेशा मायासु सांख्यप्रदचित्तरूपा ॥ ६२॥

प्रमोदमोदादयः पृष्ठभागे गणेश्वरं भावयुता भजन्ते ।

भक्तेश्वरा मुद्गलशम्भुमुख्याः शुकादयस्तं स्म पुरो भजन्ते ॥ ६३॥

गन्धर्वमुख्या मधुरं जगुश्च गणेशगीतं विविधस्वरूपम् ।

नृत्यंकलायुक्तमथो पुरस्ताच्चक्रुस्तथा ह्यसरसो विचित्रम् ॥ ६४॥

इत्यादि-नानाविध-भावयुक्तैः संसेवितं विघ्नपतिं भजामि ।

चित्तेन ध्यात्वा तु निरंजनं वै करोमि नानाविधदीपयुक्तम् ॥ ६५॥

चतुर्भुजं पाशधरं गणेशं तथांकुशं दन्तयुतं तमेवम् ।

त्रिनेत्रयुक्तं त्वभयंकरं तं महोदरं चैकरदं गजास्यम् ॥ ६६॥

सर्पोपवीतं गजकर्णधारं विभूतिभिः सेवितपादपद्मम् ।

ध्याये गणेशं विविधप्रकारैः सुपूजितं शक्तियुतं परेशम् ॥ ६७॥

ततो जपं वै मनसा करोमि स्वमूलमन्त्रस्य विधानयुक्तम् ।

असंख्यभूतं गणराजहस्ते समर्पयाम्येव गृहाण ढुण्ढे ॥ ६८॥

आरार्तिका कर्पुरकादिभूतामपारदीपां प्रकरोमि पूर्णाम् ।

चित्तेन लम्बोदर तां गृहाण ह्यज्ञानध्वान्तौघहरां निजानाम् ॥ ६९॥

वेदेषु वैघ्नैश्वरकैः सुमन्त्रैः सुमन्त्रितं पुष्पदलं प्रभूतम् ।

गृहाण चित्तीन मया प्रदत्तमपारवृत्त्या त्वथ मन्त्रपुष्पम् ॥ ७०॥

अपारवृत्या स्तुतिमेकदन्तं गृहाण चित्तेन कृतां गणेश ।

युक्तां श्रुतिस्मार्तभवैः पुराणैः सर्वैः परेशाधिपते मया ते ॥ ७१॥

प्रदक्षिणा मानसकल्पितास्ता गृहाण लम्बोदर भावयुक्ताः ।

संख्याविहीना विविधस्वरूपा भक्तान् सदा रक्ष भवार्णवाद्वै ॥ ७२॥

नतिं ततो विघ्नपते गृहाण साष्टांगकाद्यां विविधस्वरूपाम् ।

संख्याविहीनां मनसा कृतां ते सिद्ध्या च बुद्ध्या परिपालयाशु ॥ ७३॥

न्यूनातिरिक्तं तु मया कृतं चेत्तदर्थमन्ते मनसा गृहाण ।

दूर्वांकुरान विघ्नपते प्रदत्तान् सम्पूर्णमेवं कुरु पूजनं मे ॥ ७४॥

क्षमस्व विघ्नाधिपते मदीयान् सदापराधान् विविधस्वरूपान् ।

भक्तिं मदीयां सफलां कुरुष्व सम्प्रार्थयेऽहं मनसा गणेश ॥ ७५॥

ततः प्रसन्नेन गजानेन दत्तं प्रसादं शिरसाऽभिवन्द्य ।

स्वमस्तके तं परिधारयामि चित्तेन विघ्नेश्वरमानतोऽस्मि ॥ ७६॥

उत्थाय विघ्नेश्वर एव तस्माद्गतस्ततस्त्वन्तरधानशक्त्या ।

शिवादयस्तं प्रणिपत्य सर्वे गताः सुचित्तेन च चिन्तयामि ॥ ७७॥

सर्वान्नमस्कृत्य ततोऽहमेव भजामि चित्तेन गणाधिपं तम् ।

स्वस्थानमागत्य महानुभावैर्भक्तैर्गणेशस्य च खेलयामि ॥ ७८॥

एवं त्रिकालेषु गणाधिपं तं चित्तेन नित्यं परिपूजयामि ।

तेनैव तुष्टः प्रददातु भावं विघ्नेश्वरो भक्तिमयं तु मह्यम् ॥ ७९॥

गणेशपादोदकपानकं च उच्छिष्टगंधस्य सुलेपन तु ।

निर्माल्य-सन्धारणकं सुभोज्यं लम्बोदरस्यास्तु हि भुक्तशेषम् ॥ ८०॥

यं यं करोम्येव तदेव दीक्षा गणेश्वरस्यास्तु सदा गणेश ।

प्रसीद नित्यं तवपादभक्तं कुरुष्व मां ब्रह्मपते दयालो ॥ ८१॥

ततस्तु शय्यां परिकल्पयामि मन्दार-कूर्पासक-वस्त्रयुक्ताम् ।

सुवास-पुष्पादिभिरर्चितां ते गृहाण निद्रां कुरु विघ्नराज ॥ ८२॥

सिद्ध्या च बुद्ध्या सहितं गणेश सुनिद्रितं वीक्ष्य तथाऽहमेव ।

गत्वा स्ववासं च करोमि निद्रां ध्यात्वा हृदि ब्रह्मपतिं तदीयः ॥ ८३॥

एतादृशं सौख्यममोघशक्ते देहि प्रभो मानसजं गणेश ।

मह्यं च तेनैव कृतार्थरूपो भवामि भक्त्यमृतलालसोऽहम् ॥ ८४॥

गार्ग्य उवाच ॥

एवं नित्यं महाराज गृत्समादो महायशाः ।

चकार मानसीं पूजां योगीन्द्राणां गुरुः स्वयम् ॥ ८५॥

य एतां मानसीं पूजां करिष्यति नरोत्तमः ।

पठिष्यति सदा सोऽपि गाणपत्यो भविष्यति ॥ ८६॥

श्रावयिष्यति यो मर्त्यः श्रोष्यते भावसंयुतः ।

स क्रमेण महीपाल ब्रह्मभूतो भविष्यति ॥ ८७॥

यद्यदिच्छति तत्तद्वै सफलं तस्य जायते ।

अन्ते स्वानन्दगः सोऽपि योगिवन्द्यो भविष्यति ॥ ८८॥

इति श्रीमदान्त्ये मुद्गलपुराणे गणेशमानसपूजा समाप्ता ॥

************************************

॥ वाल्मीकिकृतं श्रीगणेशस्तवनम् अथवा गणेशाष्टकम् ॥

चतुःषष्टिकोट्याख्यविद्याप्रदं त्वां सुराचार्यविद्याप्रदानापदानम् ।

कठाभीष्टविद्यार्पकं दन्तयुग्मं कविं बुद्धिनाथं कवीनां नमामि ॥ १॥

स्वनाथं प्रधानं महाविघ्ननाथं निजेच्छाविसृष्टाण्डवृन्देशनाथम् ।

प्रभु दक्षिणास्यस्य विद्याप्रदं त्वां कविं बुद्धिनाथं कवीनां नमामि ॥ २॥

विभो व्यासशिष्यादिविद्याविशिष्टप्रियानेकविद्याप्रदातारमाद्यम् ।

महाशाक्तदीक्षागुरुं श्रेष्ठदं त्वां कविं बुद्धिनाथं कवीनां नमामि ॥ ३॥

विधात्रे त्रयीमुख्यवेदांश्च योगं महाविष्णवे चागमाञ् शङ्कराय ।

दिशन्तं च सूर्याय विद्यारहस्यं कविं बुद्धिनाथं कवीनां नमामि ॥ ४॥

महाबुद्धिपुत्राय चैकं पुराणं दिशन्तं गजास्यस्य माहात्म्ययुक्तम् ।

निजज्ञानशक्त्या समेतं पुराणं कविं बुद्धिनाथं कवीनां नमामि ॥ ५॥

त्रयीशीर्षसारं रुचानेकमारं रमाबुद्धिदारं परं ब्रह्मपारम् ।

सुरस्तोमकायं गणौघाधिनाथं कविं बुद्धिनाथं कवीनां नमामि ॥ ६॥

चिदानन्दरूपं मुनिध्येयरूपं गुणातीतमीशं सुरेशं गणेशम् ।

धरानन्दलोकादिवासप्रियं त्वां कविं बुद्धिनाथं कवीनां नमामि ॥ ७॥

अनेकप्रतारं सुरक्ताब्जहारं परं निर्गुणं विश्वसद्ब्रह्मरूपम् ।

महावाक्यसन्दोहतात्पर्यमूर्तिं कविं बुद्धिनाथं कवीनां नमामि ॥ ८॥

इदं ये तु कव्यष्टकं भक्तियुक्तास्त्रिसन्ध्यं पठन्ते गजास्यं स्मरन्तः ।

कवित्वं सुवाक्यार्थमत्यद्भुतं ते लभन्ते प्रसादाद् गणेशस्य मुक्तिम् ॥ ९॥

इति वाल्मीकिकृतं गणेशस्तवनं समाप्तम् ।

*************************************

॥ श्रीगणेशस्तवराजः ॥

श्रीगणेशाय नमः । श्रीभगवानुवाच ।

गणेशस्य स्तवं वक्ष्ये कलौ झटिति सिद्धिदम् ।

न न्यासो न च संस्कारो न होमो न च तर्पणम् ॥ १॥

न मार्जनं च पञ्चाशत्सहस्रजपमात्रतः ।

सिद्ध्यत्यर्चनतः पञ्चशत-ब्राह्मणभोजनात् ॥ २॥

अस्य श्रीगणेशस्तवराजमन्त्रस्य भगवान् सदाशिव ऋषिः,

अनुष्टुप् छन्दः, श्रीमहागणपतिर्देवता,

श्रीमहागणपतिप्रीत्यर्थे जपे विनियोगः ।

विनायकैक-भावना-समर्चना-समर्पितं

प्रमोदकैः प्रमोदकैः प्रमोद-मोद-मोदकम् ।

यदर्पितं सदर्पितं नवान्नधान्यनिर्मितं

न कण्डितं न खण्डितं न खण्डमण्डनं कृतम् ॥ १॥

सजातिकृद्-विजातिकृत-स्वनिष्ठभेदवर्जितं

निरञ्जनं च निर्गुणं निराकृतिं ह्यनिष्क्रियम्

सदात्मकं चिदात्मकं सुखात्मकं परं पदं

भजामि तं गजाननं स्वमाययात्तविग्रहम् ॥२।

गणाधिप! त्वमष्टमूर्तिरीशसूनुरीश्वर-

स्त्वमम्बरं च शम्बरं धनञ्जयः प्रभञ्जनः ।

त्वमेवं दीक्षितः क्षितिर्निशाकरः प्रभाकर-

श्चराऽचर-प्रचार-हेतुरन्तराय-शान्तिकृत् ॥ ३॥

अनेकदं तमाल-नीलमेकदन्त-सुन्दरं

गजाननं नमोऽगजाननाऽमृताब्धि-चन्दिरम् ।

समस्त-वेदवादसत्कला-कलाप-मन्दिरं

महान्तराय-कृत्तमोऽर्कमाश्रितोऽन्दरूं परम् ॥ ४॥

सरत्नहेम-घण्टिका-निनाद-नुपुरस्वनै-

मृदङ्ग-तालनाद-भेदसाधनानुरूपतः ।

धिमि-द्धिमि-त्तथोंग-थोङ्ग-थैयि-थैयिशब्दतो

विनायकः शशाङ्कशेखरः प्रहृष्य नृत्यति ॥ ५॥

सदा नमामि नायकैकनायकं विनायकं

कलाकलाप-कल्पना-निदानमादिपरूषम् ।

गणेश्वरं गुणेश्वरं महेश्वरात्मसम्भवं

स्वपादपद्म-सेविना-मपार-वैभवप्रदम् ॥ ६॥

भजे प्रचण्ड-तुन्दिलं सदन्दशूकभूषणं

सनन्दनादि-वन्दितं समस्त-सिद्धसेवितम् ।

सुराऽसुरौघयोः सदा जयप्रदं भयप्रदं

समस्तविघ्न-घातिनं स्वभक्त-पक्षपातिनम् ॥ ७॥

कराम्बुजात-कङ्कणः पदाब्ज-किङ्किणोगणो

गणेश्वरो गुणार्णवः फणीश्वराङ्गभूषणः ।

जगत्त्रयान्तराय-शान्तिकारकोऽस्तु तारको

भवार्णवस्थ-घोरदुर्गहा चिदेकविग्रहः ॥ ८॥

यो भक्तिप्रवणश्चरा-ऽचर-गुरोः स्तोत्रं गणेशाष्टकं

शुद्धः संयतचेतसा यदि पठेन्नित्यं त्रिसन्ध्यं पुमान् ।

तस्य श्रीरतुला स्वसिद्धि-सहिता श्रीशारदा सर्वदा

स्यातां तत्परिचारिके किल तदा काः कामनानां कथाः ॥ ९॥

॥ इति श्रीरूद्रयामलोक्तो गणेशस्तवराजः सम्पूर्णः ॥

***********************************

॥ श्रीगणेशस्तवराज भविष्योत्तरपुराणे ॥

ॐ नमः शिवाय ॥

अथ श्री गणेशस्तवराजः ॥

ॐ विघ्नेशो नः स पायाद्विहृतिषु जलधि पुष्कराग्रेण पीत्वा

यस्मिन्नुद्धृत्य हस्तं वमति तदऽखिलं दृश्यते व्योम्नि देवैः ।

क्वाप्यऽनन्तः क्वच श्रीः क्वाप्यौर्बः क्वपि शैलः क्वचन

मणिगणः क्वापि नक्रादिसत्वाः ॥

निर्विघ्नविश्वनिर्माणसिद्धये यदनुग्रहम् ।

मन्ये स वव्रे धातापि तस्मै विघजिते नमः ॥

सर्गारम्भेऽप्यजाताय बीजरुपेण तिष्ठते ।

धात्रा कृतप्रणामाय गणाधिपतये नमः ॥

गणेशाय नमः प्रह ववाञ्छिताम्बुजभानवे ।

सितदंष्ट्राकुरस्फीतविघ्नौघतिमिरेन्दवे ॥

प्रणमाम्यजमीशानं योगशास्त्रविशारदम ।

निःशेषगणवृन्दस्य नायकं सुविनायकम् ॥

श्री ब्रह्मोवाच

भगवञ्छ्रोतुमिच्छामि विस्तरेण यथायथम । स्तवराजस्य माहात्मयं स्वरुपं च विशेषतः ॥

श्री नन्दिकेश्वर उवाच

स्तवराजस्य माहात्मयं प्रवक्ष्यामि समासतः ।

श्रृणुष्वावहितो भूत्वा सर्वसिद्धिकरं परम् ॥ कर्मणा मनसा वाचा ये प्रपन्ना विनायकम् ।

ते तरन्ति महाघोरं संसारं कामवर्जिताः ॥ सकृच्च जप्त्वा स्तवराजमुत्तमं तरत्यशेषं भवपाशपञ्जरम् ।

विमुच्यते संसृतिसागरान्नरो विभूतिमाप्नोति सुरैः सुदुर्लभाम् ॥ यत्फलं लभते जप्त्वा स्वरुपं चापि यादृशम् ।

यः प्रातरुत्थितो विद्वान्ब्राह्मो वापि महूर्तके ॥ विषुवायनकालेषु पुण्ये वा समयान्तरे ॥

सर्वदा वा जपञ्जन्तुः स्तवराजं स्तवोत्तमम् । यत्फलं लभते मर्त्यः तच्छृणुष्व चतुर्मुख ॥

गङ्गाप्रवाहवत्तस्य वाग्विभूतिर्विजृम्भते । बृहस्पतिसमो बुद्या पुरन्दरसमः श्रिया । तेजसादित्यसङ्काशो भार्गवेण समो नये ॥

धनदेन समो दाने तथा वित्तपरिग्रहे ।

धर्मराजसमो न्याये शिवभक्तो मया समः ॥

प्रतापे वह्निसङ्काशः प्रसादे शशिना समः ।

बलेन मरुता तुल्यो भवता ब्रह्मावर्चसे ॥

सर्वतत्वार्थविज्ञाने मयापि समतां व्रजेत् ।

एवमेतत्त्रिसन्ध्यं वै जपन्स्तवमनुत्तमम ॥

सर्वान्कामान्नरः प्राप्य भुक्त्वा भोगान्यथेप्सितान् ।

सशरीरः सुरेन्द्रस्य पदं न्यस्यति मूर्धनि ॥

प्राप्याष्टगुणमैश्वर्यं भुक्त्वा भोगान्सुपुष्कलान् ।

अक्षयो वीतशोकश्च निरातङ्को निरामयः ॥

जरामरणनिर्मुक्तो वेदशास्त्रार्थकोविदः ।

सिद्धचारणगन्धर्वदेवविद्याधरादिभिः ॥

संस्तूमानो मुनिभिः शंस्यमानो दिनेदिने ।

विचरत्यऽखिलाँल्लोकोन्बन्धुवर्गैः समं नरः ॥

एवं चिराय निर्वाह्य देवस्यानुचरोभवेत् ।

स्तवरजं सकृज्जप्त्वा मुच्यते सर्वकिल्वषैः ॥

सर्वसिद्धिमवाप्नोति पुनात्यासप्तमं कुलम् ।

नाशयेद्विघ्नसङ्घातांस्तेन् वैनायकं स्मृतम् ॥

स्तवराजमनुस्मरञ्जपन्हृदयाग्रे विलिखन्पठन्नपि ।

स सुरासुरसिद्धचारणैर्मुनिभिः प्रत्यहमेव पूज्यते ॥

तरति च भवचक्रं सर्वमोहं निहन्ति

क्षिपति च परवादं मान्यते बन्धुवर्गैः ।

अखिलमपि च लोकं क्षेमतामाशु नीत्वा

व्रजति यतिभिरीड्यं शाश्वतं धाम मर्त्यः ॥

यो जपति स्तवराजमशोकः क्षेमतमं पदमेति मनुष्यः ।

चारणसिद्धसुरैरभिवन्द्यो याति पदं परमं स विमुक्तः ॥

जपेद्यः स्तवराजाख्यमिमं प्रातः स्तवोत्तमम् ॥

तस्यापचारं क्षमते सर्वदैव विनायकः ॥

सर्वान्निहन्ति वै विघ्नान्विपदश्च समन्ततः ।

अशेषाभिर्गणाध्यक्षः सम्पद्भिरभिषिञ्चति ॥

अस्य च प्रणता लक्ष्मीः कटाक्षानुविधायिनी ।

किं करोमीति वै भीत्या पुरस्तादेव तिष्ठति ॥

तस्मान्निःश्रेयसं गन्तुमतिभक्त्या विचक्षणः ।

स्तवराजं जपेज्जन्तुर्धर्मकामार्थसिद्धये ॥

आधिव्याध्यस्त्रशस्त्राग्नितमःपङ्कार्णवादिषु ।

भयेष्वन्येषु चाप्येतत्स्मरन्मुक्तो भवेन्नरः ॥

स्तवराजं सकृज्जप्त्वा मार्गं गच्छति मानवः ।

न जातु जायते तस्य चौरव्याघ्रादिभिर्भयम् ॥

यथा वरिष्ठो देवानामशेषाणां विनायकः ।

तथा स्तवो वरिष्ठोयं स्तवानां शम्भुभावितः ॥

अवतीर्णो यदा देवो विघ्नराजो विनायकः ।

तदा लोकोपकारार्थं प्रोक्तोऽयं शम्मुना स्वयम् ॥

विनायकप्रियकरो देवस्य हृदयङ्गमः ।

जप्यः स्तवोऽयं यत्नेन धर्मकामार्थसिद्धये ॥

अस्य श्रीमहागणपतिस्तवराजमन्त्रस्य श्री ईश्वर ऋषिः नानावृत्तानि

छन्दांसि विनायको देवता तत्पुरुष इति बीजं एकदन्त इति शक्तिः वक्रतुण्ड

इति कीलकं आत्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं

सर्वविघ्ननिवारणार्थं धर्मकामार्थसिद्ध्यर्थे पाठे विनियोगः

ध्यानं

जेतुं यस्त्रिपुरं हरेण हरिणा व्याजाब्दलेर्बन्धने

स्त्रष्टुं वारिरुहोद्भवेन बिधिना शेषेण धर्तुं धराम् ।

पार्वत्या महिषासुरप्रमथने सिद्धाधिपैर्मुक्तये ध्यातः पञ्चशरेण लोकविजये पायात्स नागाननः ॥

श्री ईश्वर उवाच

ॐकारममृतं ब्रह्म शिवमक्षरमव्ययम् ।

यमामनान्ति वेदेषु तं प्रपद्ये विनायकम् ॥

यतः प्रवृत्तिर्जगतां यः साक्षी हृदयस्थितः ।

आधारभूतो विश्वस्य तं प्रपद्ये विनायकम् ॥

यस्य प्रसादाच्छक्राद्याः प्राणन्ति निमिषन्ति च ।

प्रवर्तकं तं लोकानां प्रणमामि विनायकम् ॥

शिखाग्रे द्वादशाङ्गुल्ये स्थितं सूक्ष्मतनुं विभुम् ।

युञ्जन्ति यं मरीच्याद्यास्तं नमामि गणाधिपम् ॥

लीलया लोकरक्षार्थं द्विधाभूतो महेश्वरः ।

यः स्वयं जगतः साक्षी तं वन्दे द्विरदाननम् ॥

विघ्नेश्वरं विधातारं धातारं जगतामपि ।

प्रणमामि गणाध्यक्षं प्रणतार्तिविनाशनम् ॥

उत्सङ्गतल्पे यो देव्या भवान्याः क्रीडते विभु ।

बालो हरन्मनस्तस्यास्तं प्रपद्ये विनायकम् ॥

विधाय भूषणैश्चित्रैर्वेशकर्म मनोरमम् ।

यं दृष्टा पश्यतीशानी तं प्रपद्ये विनायकम् ॥

लीलया यः सृजँल्लोकान्भिन्दन्नपि मुहुर्मुहुः ।

सङ्क्रीडते महासत्वस्तं नतोस्मि गणाधिपम् ॥

सिन्दूरितमहाकुम्भस्तुङ्गदन्तः सुभैरवः ।

भिनत्ति दैत्यकरिणस्तं वन्दे द्विरडननम् ॥

यस्य मूर्ति व्रजन्त्याशु मदामोदानुषङ्गिणः ।

भ्रमरास्तीव्रसंरावीस्तं नमामि विनायकम् ॥

गम्भीरभीमनिनदं श्रुत्वा यद्बृंहितं क्षणात् ।

पतन्त्यसुरनागेन्द्रास्तं वन्दे द्विरदाननम् ॥

यो भिनत्ति गिरीन्सर्वानिघोरनिर्घातभैरवैः ।

रवैः सन्त्रासजननैस्तं वन्दे द्विरदाननम् ॥

लीलया प्रहता येन् पादाभ्यां धरणी क्षणात् ।

संशीर्यते सशैलौघा तं वन्दे चण्डविक्रमम् ॥

यत्कराताडनैर्भिन्नमम्भः शतसहस्रधा ।

विशीर्यते समुद्राणां तं नतोस्मि गणाधिपम् ॥

विमुखा यत्र दृश्यन्ते भ्रष्टवीर्याः पदच्युताः ।

निष्प्रभा विबुधाः सद्यस्तं प्रपद्ये विनायकम् ॥

यद्ध् प्रणिहितां लक्ष्मीं लभन्ते वासवादयः ।

स्वतन्त्रमेकं नेतारं विघ्नराजं नमाम्यहम् ॥

यत्पादपांसुनिचयं विभ्राणा मणिमौलिषु ।

अमरा बहु मन्यन्ते तं नतोस्मि गणाधिपम् ॥

वेदान्तगीतं पुरुषं वरेन्यमऽभयप्रदम् ।

हिरण्मयपुरान्तःस्थं तमस्मि शरणं गतः ॥ चित्सुधानन्दसन्मात्रं परानन्दस्वरुपिणम् ।

निष्कलं निर्मलं साक्षाद्विनायकमुपैमि तम् ॥

अनपायं च सद्भुतं भूतिदं भूतिवर्धनम् ।

नमामि सत्यंविज्ञानमनन्तं ब्रह्मरुपिणम् ॥

अनाद्यन्तं महादेवप्रियपुत्रं मनोरमम् ॥

द्विपाननं विभुं साक्षादात्मानं तं नमाम्यहम् ॥

विश्वामरेश्वरैर्वन्द्यमाधारं जगतामपि ।

प्रणमामि गणाध्यक्षं प्रणताज्ञानमोचनम् ॥

शिखाग्रे द्वादशाङ्गुल्ये स्थितं स्फटिकसन्निभम् ।

गोक्षीरधवलाकारं प्रणमामि गजाननम् ॥

अनाधारं नवाधारमनन्ताधारसंस्थितम् ।

धातारं च विधातारं तमस्मि शरणं गतः ॥

अनन्तदृष्टिं लोकादिमनन्तं विद्रुमप्रभम् ।

अप्रतर्क्यमनिर्देश्यं निरालम्बं नमाम्यहम् ॥

भूतालयं जगद्योनिमणीयांसमणोरपि ।

स्वसंवेद्यमसंवेद्यं वेद्यावेद्यं नमाम्यहम् ॥

प्रमाणप्रत्ययातीतं हंसमव्यक्तलक्षणम् ।

अनाविलमनाकारं तमस्मि शरणं गतः ॥

विश्वाकारमनाकारं विश्वावासमनामयम् ।

सकलं निष्कलं नित्यं नित्यानित्यं नमाम्यहम् ॥

संसारवैद्यं सर्वज्ञं सर्वभेषजभेषजम् ।

आत्मानं सदसत्व्यक्तं धातारं प्रणमाम्यहम् ॥

भ्रूमध्ये संस्थितं देवं नाभिमध्ये प्रतिष्ठितम् ।

हृन्मध्ये दीपवत्संस्थं वन्दे सर्वस्य मध्यगम् ॥

हृत्पुण्डरीकनिलयं सूर्यमण्डलनिष्ठितम् ।

तारकान्तरसंस्थानं तारकं तं नमाम्यहम् ॥

तेजस्विनं विकर्तारं सर्वकारणकारणम् ।

भक्तिगम्यमहं वन्दे प्रणवप्रतिपादितम् ॥

अन्तर्योगरतैर्युक्तैः कल्पितैः स्वस्तिकासनैः ॥

बद्धं हृत्कर्णिकामध्ये ध्यानगम्यं नमाम्यहम् ॥

ध्येयं दुर्ज्ञेयमद्वैतं त्रयीसारं त्रिलोचनम् ।

आत्मानं त्रिपुराराते: प्रियसूनुं नमाम्यहम् ॥

स्कनदप्रियं स्कन्दगुरुं स्कन्दस्याग्रजमेव च ।

स्कन्देन सहितं शश्वन्नमामि स्कन्दवत्सलम् ॥

नमस्ते विघ्नराजाय भक्तविघ्नविनाशिने ।

विघ्नाध्यक्षाय विघ्नानां निहन्त्रे विश्वचक्षुषे ॥

विघ्नदात्रेऽप्यभक्तानां भक्तानां विघ्नहारिणे ॥

विघ्नेश्वराय वीराय विघ्नेशाय नमोनमः ॥

कुलाद्रिमेरुकैलासशिखराणां प्रभेदिने ।

दन्तभिन्नाभ्रमालाय करिराजाय ते नमः ॥

किरीटिने कुण्डलिने मालिने हारिणे तथा ।

नमो मौञ्जीसनाथाय जटिने ब्रह्मचारिणे ॥

डिण्डिमुण्दाय चण्डाय नमोऽध्ययनशीलिने ॥

वेदाध्ययनयुक्ताय सामगानपराय च ।

त्र्यक्षाय च वरिष्ठाय नमश्चन्द्रशिखण्डिने ॥

कपर्दिने करालाय शङ्करप्रियसूनवे ।

सुताय हैमवत्याश्च हर्त्रे च सुरविद्विषाम् ॥

ऐरावणादिभिर्दिव्यैर्दिग्गजैः संस्तुताय च ।

स्वबृंहितपरित्रस्तैर्नमस्ते मुक्तिहेतवे ॥

कूष्माण्डगणनाथाय गणानां पतये नमः ।

वज्रिणाराधितायैव वज्रिवज्रनिवारिणे ॥

पूष्णो दन्तभिदे साक्षान्मरुतां भीषणाय च ।

ब्रह्मणश्च शिरोहर्त्रे विवस्वद्बन्धनाय च ॥

अग्नेश्चैव सरस्वत्या इन्द्रस्य च बलच्छिदे ।

भैरवाय सुभीमाय भयानकरवाय च ॥

विभीषणाय भीष्माय नागाभरणधारिणे ।

प्रमत्ताय प्रचण्डाय वक्रतुण्डाय ते नमः ॥

हेरम्बाय नमस्तुभ्यं प्रलम्बजठराय च ।

आखुवाहाय देवाय चैकदन्ताय ते नमः ॥

शूर्पकर्णाय शूराय परश्वधधराय च ।

सृणिहस्ताय धीराय नमः पाशासिपाणये ॥

धारणाय नमस्तुभ्यं धारणाभिरताय च ।

धारणाभ्यासयुक्तानां पुरस्तात्संस्तुताय च ॥

प्रत्याहाराय वै तुभ्यं प्रत्याहाररताय च ।

प्रत्याहाररतानां च प्रत्याहारस्थितात्मने ॥

विघ्नाध्यक्षाय दक्षाय लोकाध्यक्षाय धीमते ।

भूताध्यक्षाय भव्याय गणाध्यक्षाय ते नमः ॥

योगपीठान्तरस्थाय योगिने योगधारिणे ।

योगिनां हृदिसंस्थाय योगगम्याय ते नमः ॥

ध्यानाय ध्यानगम्याय शिवध्यानपराय च ।

ध्येयानामपि ध्येयाय नमो ध्येयतमाय च ॥

सप्तपातालपादाय सप्तब्दीपोरुजङ्घिने ।

नमो दिग्बाहवे तुभ्यं व्योमदेहाय ते नमः ॥

सोमसूर्याग्निनेत्राय ब्रह्मविद्यामदाम्भसे ।

ब्रह्माण्डकुण्डपीठाय हृदयालानकाय च ॥

ज्योतिर्मण्डलपुच्छाय हृद्यालानकाय च ।

ध्यानार्द्रबद्धपादाय पूजाधोरणधारिणे ॥

सोमार्कबिम्बघण्टाय दिक्करीन्द्रवियोगिने ।

आकाशसरसो मध्ये क्रीडागहनशालिने ॥

सुमेरुदन्तकोशाय पृथिवीस्थलगाय च ।

सुघोषाय सुभीमाय सुरकुञ्जरभेदिने ॥

हेमाद्रिकूटभेत्त्रे च दैत्यदानवमर्दिने ।

गजाकाराय देवाय गजराजाय ते नमः ॥

ब्रह्मणे ब्रह्मरुपाय ब्रह्मगोत्रेऽव्ययाय च ।

ब्रह्मघ्ने ब्रह्मणायैव ब्रह्मणः प्रियबन्धवे ॥

यज्ञाय यज्ञगोप्त्रे च यज्ञानां फलदायिने ॥

यज्ञहर्त्रे यज्ञकर्त्रे सर्वयज्ञमयाय च ।

सर्वनेत्राधिवासाय सर्वैश्वर्यप्रदायिने ।

गुहाशयाय गुह्याय योगिने ब्रह्मवादिने ॥ १०० ॥

ॐ गं तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि तन्नो

दन्ती प्रचोदयात् ॥

एकाक्षरपरायैव मायिने ब्रह्मचारिणे ।

भूतानां भुवनेशानां पतये पापहारिणे ॥

सर्वारम्भनिहन्त्रे च विमुखानां निजार्चने ।

नमो नमो गणेशाय विघ्नेशाय नमो नमः ॥

त्रिपुरं दग्धुकामेन पूजिताय त्रिशूलिना ।

दयाशील दयाहार दयापर नमोस्तु ते ॥

विनायकाय वै तुभ्यं विकृताय नमो नमः ।

नमस्तुभ्यं जगद्धात्रे नमस्तुभ्यं वियोगिने ॥

नमस्तुभ्यं त्रिनेत्राय त्रिनेत्रप्रियसूनवे ।

सप्तकोटिमहामन्त्रैर्मन्त्रितावयवाय ते ॥

मन्त्राय नम्त्रिणां नित्यं मन्त्राणां फलदायिने ।

लीलया लोकरक्षार्थं विभक्तनिजमूर्तये ॥

स्वयं शिवाय देवाय लोकक्षेमानुपालिने ।

नमो नमः क्षमाभर्त्रे नमः क्षेमतमाय च ॥

दयामयाय देवाय सर्वभूतदयालवे ॥ दयाकर दयारुप दयामूर्ते दयापर ॥ दयाप्राप्य दयासार दयाकृतिरतात्मक ॥

जगतां तु दयाकर्त्रे सर्वकर्त्रे नमो नमः ॥

नमः कारुण्यदेहाय वीराय शुभदन्तिने ।

भक्तिगम्याय भक्तानां दुःखहर्त्रे नमोस्तु ते ॥

नमः समस्तगीर्वाणवन्दिताङ्घ्रियुगाय ते ।

जगतां तस्थुषां भर्त्रे विघ्नहर्त्रे नमोस्तु ते ॥

नमो नमस्ते गणनायकाय सुनायकायाखिलनायकाय ।

विनायकायाभयदायकाय नमः शुभानामुपनायकाय ॥

गणाधिराजाय गणानुशास्त्रे गजाधिराजाय गजाननाय ।

शताननायामितमाननाय नमो नमो दैत्यविनाशनाय ॥

अनामयायामलधीमयाय ।

स्वमाययाविष्टजगन्मयाय ।

अमेयमायाविकसन्मयाय नमो नमस्तेस्तु मनोमयाय ॥

नमस्ते समस्ताधिनाथाधिकर्त्रे

नमस्ते समस्तोरुविस्तारभाजे ।

नमस्ते समस्ताधिकायातिभूम्ने नमस्ते पुनर्व्यस्तविन्यस्तधाम्ने ॥

पात्रे सुराणां प्रमथेश्वराणां शास्त्रेऽनुशास्त्रे सचराचरस्य ।

नेत्रे प्रनेत्रे च शरीरभाजां धात्रे वराणां भवते नमोऽस्ते ॥

नमोस्तु ते विघ्नविनाशकाय

नमोस्तु ते भक्तभयापहाय ।

नमोस्तु ते मुक्तमनस्थिताय नमश्च भूयो गणनायकाय ॥

अखिलभुवनभर्त्रे सम्पदामेकदात्रे

निखिलतिमिरभेत्त्रे निष्कलायाव्ययाय ।

प्रणतमनुजगोप्त्रे प्राणिनां त्राणकर्त्रे सकलविबुधशास्त्रे विश्वनेत्रे नमोऽस्तु ॥

दशनकुललिशभिन्नैर्निर्गतेर्दिग्गजानां विलसितशुभदन्तं मौक्तिकैश्चन्द्रगौरैः ।

भवन्मुपसरन्तं प्रेक्ष्य गौरी भवन्तं सुदृढमथ कराभ्यां श्लिष्यते प्रेमनुन्ना ॥

मृदुनि ललितशीते तल्परङ्गे भवान्याः शुभविलसितभावां नृत्यलीलां विधाय ।

अचलदुहितुरङ्कादऽङ्कमन्यं विसर्पन्-

पितुरुपहरसि त्वं नृत्यहर्षोपहारम् ॥

भुजगवलयितेनोपस्पृश्न्पाणिना त्वां

सरभसमथ बाह्वोरन्तराले निवेश्य ।

कलमधुरसुगीतं नृत्तमालोकयंस्ते कलमऽविकलतालं चुम्बते हस्तेपद्मे ॥

कुवलयशतशीतैर्भूरिकल्हारहृद्यैः

तव मुहुरपि गात्रस्पर्शनैः सम्प्रहृष्यन् ।

क्षिपति च सुविशाले स्वाङ्कमध्ये भवन्तं

तव मुहुरनुरागान्मूर्ध्नि जिघ्रन्महेशः ॥

बालोऽबालपराक्रमः सुरगणैः सम्प्रार्थ्यसेऽहर्निशं

गायन्किम्पुरुषङ्गनाविरचितैः स्तोत्रैरभिष्टूयसे ।

हाहाहूहुकतुम्बुरुप्रभृतिभिस्त्वं गीयसे नारद

स्तोत्रैरद्भुतचेष्टितैः प्रतिदिनं प्रोद्घोषसे सामभिः ॥

त्वां नमन्ति सुरसिद्धचारणा-

स्त्वां यजन्ति निखिला द्विजातयः ।

त्वां पठन्ति मुनयः पुराविद-

स्त्वां स्मरन्ति यतयः सनातनाः ॥

परं पुराणं गुणिनं महान्तं हिरण्मयं पुरुषं योगगम्यम् ।

यमामनन्त्यात्मभुवं मनीषिणो विपस्चितं कविमप्यक्षयं च ॥

गणानान्त्वा गणनाथं सुरेन्द्रं कविं कवीनामतिमेध्यविग्रहम् ।

ज्येष्ठराजमृषभं केतुमेकमानः

श्रृण्वन्नूतिभिः सीद शश्वत् ॥

नमो नमो वाङ्मनसातिभूमये नमो नमो वाङ्मनसैकभूतये ।

नमो नमोनन्तसुखैकदायिने नमो नमोनन्तसुखैकसिन्धवे ॥

नमो नमः शाश्वतशान्तिहेतवे क्षमादयापूरितचारुचेतसे ।

गजेन्द्ररुपाय गणेश्वराय ते

परस्य पुंसः प्रथमाय सूनवे ॥

नमो नमः कारणकारणाय ते नमो नमो मङ्गलमङ्गलात्मने ।

नमो नमो वेदविदां मनीषिणा-

मुपासनीयाय नमो नमो नमः ॥ ३॥

श्री ईश्वर उवाच

वैनायकं स्तवं पुण्यं सर्वपापप्रणाशनम् ।

चिन्ताशोकप्रशमनमायुरारोग्यवर्धनम् ॥

नृपाणां सततं रक्षा द्विजानां च विशेषतः ।

स्तवराज इति ख्यातं सर्व सिद्धिकरं परम् ॥

यः पठेच्छृणुयाद्वापि सर्वपापैः प्रमुच्यते ।

रुपं वीर्यं बलं प्रज्ञां यशश्चायुः समन्वितम् ॥

मनीषां सिद्धिमारोग्यं श्रियमप्यक्षयिष्णुताम् ।

सर्वलोकाधिपत्यं च सर्वदेवाधिराजताम् ॥

प्राप्याष्टगुणमैश्वर्यं च सर्वदेवाधिराजताम् ॥

प्राप्याष्टगुणमैश्वर्यं प्राप्य भूतिं च शाश्वतीम् ।

उद्धृत्यासप्तमं वंशं दुस्तराद्भ्वसागरात् ॥

काञ्चनेन विमानेन शतनामायुतेन च ।

विचरत्यखिलाँल्लोकान्सशरीरो गणाधिपः ॥

भत्प्रिश्च भवेन्मर्त्यः सर्वदेवप्रियः सदा ।

प्रियौ विनायकस्यापि प्रियोस्माकं विशेषतः ॥

सङ्कल्पसिद्धः सर्वज्ञः सर्वभूतहिते रतः ।

स्तवराजं जपन्मर्त्यः सुहृद्भिः सह मोदते॥

स्तवराजजपासक्तभावयुक्तस्य धीमतः ।

अस्मिञ्जपन्त्रयेप्यस्ति नासाध्यं न च दुष्करम् ॥

तस्मात्सर्वप्रयत्नेन स्तवराजं जपेन्नरः ।

सकृज्जप्त्वा लभेन्मुक्तिं दुःस्वप्नेषु भयेष्वपि ॥

सर्वं तरति पाप्मानं ब्रह्मभूतो भवेन्नरः ।

तस्मात्सम्पूजितो ह्येष धर्मकामार्थसिद्धये ॥

स्तवराजमिमं स्तवोत्तमं प्रलपंश्चैव पठन्स्मरन्नपि ।

कुरुते शुभकर्म मानवः शुभमभ्येति शुभानि चाश्नुते ॥

बहुनात्र किमुक्तेन स्तवराजमिमं जपन् ।

सर्वं तद्भद्रमाप्नोति यद्यदिच्छति शाश्वतम् ॥

स्तवानाम्प्यशेषाणां वरिष्ठोयं यतः स्तवः ।

स्तवराज इति ख्यातिं सर्वलोकेषु यास्यति ॥

श्रीनन्दिकेश्वर उवाच

इत्थमेषं स्तवः प्रोक्तः प्रशस्तः शम्भुनास्वयम् ।

सर्वसिद्धिकरो नृणां सर्वाभीषटफलप्रदः ॥

तस्मादनेन स्तोत्रेण स्तवराजेन मानवः ।

स्तवञ्जपन्स्मरन्वापि कुर्वन्निर्वाणमृच्छति ॥

एवं ते कथितं ह्येतत्क्रमेण परिपृच्छतः ।

विनायकस्य माहात्म्यं प्रतिष्ठाचर्नयोर्विधिः ॥

प्रशंसा ब्रह्मगायत्र्याः कल्पस्तस्याश्च शोभनः ।

उक्तमेतत्परं ब्रह्म किं भूयः श्रोतुमिच्छसि ॥

इति विरचयति स्म त्र्यम्बकः स्तोत्रमेतद्वरमिभवदनस्य स्वामिनोऽत्यादरेण ।

गुरुवरचरणाग्रान्मूर्ध्नि कृत्वा वराज्ञां पठितमिह वरेण्यं धोरविघ्नौघशान्त्यै ॥

लाक्षासिन्दूरवर्णं सुरवरनमितं

मोदकर्मोदितास्यं हस्ते दन्तं ददानं दिनकरसदृशं

तेजसोग्रं त्रिनेत्रम् ।

दक्षे रत्नाक्षसूत्रं वरपरशुधरं साखुसिंहासनस्थं गाङ्गेयं रौद्रमूर्तिं त्रिपुरवधकरं

विघ्नभक्षं नमामि ॥

नमताशेषविघ्नौधवारणं वारणाननम् ।

कारणं सर्वसिद्धीनां दुरितार्णवतारणम् ॥

शङ्कर जगदम्बिकयोरङ्के पङ्केन खेलन्तम् ।

लम्बोदरमवलम्बे स्तम्भेरमराजचारुमुखम् ॥

इति श्रीभविष्योत्तर उत्तरखण्डे

नन्दिकेश्वरसंवादे गणेशस्तवराजः सम्पूर्णः ॥

॥ गणेशस्तुति ॥

हेमजा सुतं भजे गणेशमीशनन्दनम् ।

एकदन्त वक्रतुण्ड नागयज्ञसूत्रकम् ।

रक्त गात्र धूम्रनेत्र शुक्ल वस्त्र मण्डितम् ।

कल्पवृक्ष भक्त रक्ष नमोऽस्तुते गजाननम् ॥ १ ॥

पाशपाणि चक्रपाणि मूषकादि रोहिणम् ।

अग्निकोटि सूर्यज्योति वज्रकोटि निर्मलम् ।

चित्रभाल भक्तिजाल भालचन्द्र शोभितम् ।

कल्पवृक्ष भक्त रक्ष नमोऽस्तुते गजाननम् ॥ २ ॥

भूतभव्य हव्यकव्य भृगु भार्गवार्चितम् ।

दिव्यवह्नि कालजाल लोकपाल वन्दितम् ।

पूर्णब्रह्म सूर्यवर्ण पूरुषं पुरान्तकम् ।

कल्पवृक्ष भक्त रक्ष नमोऽस्तुते गजाननम् ॥ ३ ॥

विश्ववीर्य विश्वसुर्य विश्वकर्म निर्मलम् ।

विश्वहर्ता विश्वकर्ता यत्र तत्र पूजितम् ।

चतुर्मुखं चतुर्भुजं सेवितं चतुर्यगम् ।

कल्पवृक्ष भक्त रक्ष नमोऽस्तुते गजाननम् ॥ ४ ॥

ऋद्धि बुद्धि अष्टसिद्धि नवनिधान दायकम् ।

यज्ञकर्म सर्वधर्म सर्ववर्ण अर्चितम ।

पूत धूम्र दुष्ट मुष्ट दायकं विनायकम् ।

कल्पवृक्ष भक्त रक्ष नमोऽस्तुते गजाननम् ॥ ५ ॥

हर्ष रुप वर्ष रुप पुरुष रुप वन्दितम् ।

शूर्पकर्ण रक्तवर्ण रक्त चन्दन लेपितम् ।

योग इष्ट योग सृष्ट योग दृष्टिदायकम् ।

कल्पवृक्ष भक्त रक्ष नमोऽस्तुते गजाननम् ॥६॥

**********************************

॥ श्रीगणेशस्तुती ॥

वन्दे गजेन्द्रवदनं वामाङ्कारूढवल्लभाश्लिष्टम् ।

कुङ्कुमरागशोणं कुवलयिनीजारकोरकापीडम् ॥ १॥

विघ्नान्धकारमित्रं शङ्करपुत्रं सरोजदलनेत्रम् ।

सिन्दूरारुणगात्रं सिन्धुरवक्त्रं नमाम्यहोरात्रम् ॥ २॥

गलद्दानगण्डं मिलद्भृङ्गषण्डं

चलच्चारुशुण्डं जगत्त्राणशौण्डम् ।

लसद्दन्तकाण्डं विपद्भङ्गचण्डं

शिवप्रेमपिण्डं भजे वक्रतुण्डम् ॥ ३॥

गणेश्वरमुपास्महे गजमुखं कृपासागरं

सुरासुरनमस्कृतं सुरवरं कुमाराग्रजम् ।

सुपाशसृणिमोदकस्फुटितदन्तहस्तोज्ज्वलं

शिवोद्भवमभीष्टदं श्रिततते्स्सुसिद्धिप्रदम् ॥ ४॥

विघ्नध्वान्तनिवारणैकतरणिर्विघ्नाटवीहव्यवाट्

विघ्नव्यालकुलप्रमत्तगरुडो विघ्नेभपञ्चाननः ।

विघ्नोत्तुङ्गगिरिप्रभेदनपविर्विघ्नाब्धिकुंभोद्भवः

विघ्नाघौघघनप्रचण्डपवनो विघ्नेश्वरः पातु नः ॥ ५॥

**********************************

॥ श्रीगणेशस्तोत्रम् ॥

महागणपतिस्तोत्रम्

ॐकारमाद्यं प्रवदन्ति सन्तो वाचः श्रुतिनामपि ये गृणन्ति ।

गजाननं देवगणानतांघ्रिं भजेऽहमर्द्धेन्दुकृतावतंसम् ॥ १॥

पादारविन्दार्चनतत्पराणां संसारदावानलभङ्गदक्षम् ।

निरन्तरं निर्गतदानतोयैस्तं नौमि विघ्नेश्वरमम्बुजाभम् ॥ २॥

कृताङ्गरागं नवकुंकुमेन, मत्तालिमालां मदपङ्कलग्नाम् ।

निवारयन्तं निजकर्णतालैः, को विस्मरेत् पुत्रमनङ्गशत्रोः ॥ ३॥

शम्भोर्जटाजूटनिवासिगङ्गाजलं समानीय कराम्बुजेन ।

लीलाभिराराच्छिवमर्चयन्तं, गजाननं भक्तियुता भजन्ति ॥ ४॥

कुमारभुक्तौ पुनरात्महेतोः, पयोधरौ पर्वतराजपुत्र्याः । प्रक्षालयन्तं करशीकरेण, मौग्ध्येन तं नागमुखं भजामि ॥ ५॥

त्वया समुद्धृत्य गजास्यहस्तं, शीकराः पुष्कररन्ध्रमुक्ताः । व्योमाङ्गने ते विचरन्ति ताराः, कालात्मना मौक्तिकतुल्यभासः ॥ ६॥

क्रीडारते वारिनिधौ गजास्ये, वेलामतिक्रामति वारिपूरे ।

कल्पावसानं परिचिन्त्य देवाः, कैलासनाथं श्रुतिभिः स्तुवन्ति ॥ ७॥

नागानने नागकृतोत्तरीये, क्रीडारते देवकुमारसङ्घैः । त्वयि क्षणं कालगतिं विहाय, तौ प्रापतुः कन्दुकतामिनेन्दु ॥ ८॥

मदोल्लसत्पञ्चमुखैरजस्रमध्यापयन्तं सकलागमार्थान् ।

देवान् ऋषीन् भक्तजनैकमित्रं, हेरम्बमर्कारुणमाश्रयामि ॥ ९॥

पादाम्बुजाभ्यामतिकोमलाभ्यां, कृतार्थयन्तं कृपया धरित्रीम् ।

अकारणं कारणमाप्तवाचां, तन्नागवक्त्रं न जहाति चेतः ॥ १०॥

येनार्पितं सत्यवतीसुताय, पुराणमालिख्य विषाणकोट्या ।

तं चन्द्रमौलेस्तनयं तपोभिराराध्यमानन्दघनं भजामि ॥ ११॥

पदं श्रुतीनामपदं स्तुतीनां, लीलावतारं परमात्ममूर्तेः ।

नागात्मको वा पुरुषात्मको वेत्यभेद्यमाद्यं भज विघ्नराजम् ॥ १२॥

पाशांकुशौ भग्नरदं त्वभीष्टं, करैर्दधानं कररन्ध्रमुक्तैः ।

मुक्ताफलाभैः पृथुशीकरौघैः, सिञ्चन्तमङ्गं शिवयोर्भजामि ॥ १३॥

अनेकमेकं गजमेकदन्तं, चैतन्यरूपं जगदादिबीजम् ।

ब्रह्मेति यं ब्रह्मविदो वदन्ति, तं शम्भुसूनुं सततं भजामि ॥ १४॥

अङ्के स्थिताया निजवल्लभाया, मुखाम्बुजालोकनलोलनेत्रम् ।

स्मेराननाब्जं मदवैभवेन, रुद्धं भजे विश्वविमोहनं तम् ॥ १५॥

ये पूर्वमाराध्य गजानन! त्वां, सर्वाणि शास्त्राणि पठन्ति तेषाम् ।

त्वत्तो न चान्यत् प्रतिपाद्यमस्ति, तदस्ति चेत् सत्यमसत्यकल्पम् ॥ १६॥

हिरण्यवर्णं जगदीशितारं, कविं पुराणं रविमण्डलस्थम् ।

गजाननं यं प्रवदन्ति सन्तस्तत् कालयोगैस्तमहं प्रपद्ये ॥ १७॥

वेदान्त गीतं पुरुषं भजेऽहमात्मानमानन्दघनं हृदिस्थम् ।

गजाननं यन्महसा जनानां, विघ्नान्धकारो विलयं प्रयाति ॥ १८॥

शम्भोः समालोक्य जटाकलापे, शशाङ्कखण्डं निजपुष्करेण ।

स्वभग्नदन्तं प्रविचिन्त्य मौग्ध्यादाकर्ष्टुकामः श्रियमातनोतु ॥ १९॥

विघ्नार्गलानां विनिपातनार्थं, यं नारिकेलैः कदलीफलाद्यैः ।

प्रभावयन्तो मदवारणास्यं, प्रभुं सदाऽभीष्टमहं भजे तम् ॥ २०॥

॥ फलश्रुति ॥

यज्ञैरनेकैर्बहुभिस्तपोभिराराध्यमाद्यं गजराजवक्त्रम् ।

स्तुत्याऽनया ये विधिना स्तुवन्ति, ते सर्वलक्ष्मीनिधयो भवन्ति ॥ १॥

॥ इति श्रीगणेशस्तोत्रं सम्पूर्णम् ॥

***********************************

॥ श्रीगणेशस्तोत्रं प्रह्लादकृतम् ॥

श्री गणेशाय नमः ।

अधुना श्रृणु देवस्य साधनं योगदं परम् ।

साधयित्वा स्वयं योगी भविष्यसि न संशयः ॥ १॥

स्वानन्दः स्वविहारेण संयुक्तश्च विशेषतः ।

सर्वसंयोगकारित्वाद् गणेशो मायया युतः ॥ २॥

विहारेण विहीनश्चाऽयोगो निर्मायिकः स्मृतः ।

संयोगाभेद हीनत्वाद् भवहा गणनायकः ॥ ३॥

संयोगाऽयोगयोर्योगः पूर्णयोगस्त्वयोगिनः ।

प्रह्लाद गणनाथस्तु पूर्णो ब्रह्ममयः परः ॥ ४॥

योगेन तं गणाधीशं प्राप्नुवन्तश्च दैत्यप ।

बुद्धिः सा पञ्चधा जाता चित्तरूपा स्वभावतः ॥ ५॥

तस्य माया द्विधा प्रोक्ता प्राप्नुवन्तीह योगिनः ।

तं विद्धि पूर्णभावेन संयोगाऽयोगर्वजितः ॥ ६॥

क्षिप्तं मूढं च विक्षिप्तमेकाग्रं च निरोधकम् ।

पञ्चधा चित्तवृत्तिश्च सा माया गणपस्य वै ॥ ७॥

क्षिप्तं मूढं च चित्तं च यत्कर्मणि च विकर्मणि ।

संस्थितं तेन विश्वं वै चलति स्व-स्वभावतः ॥ ८॥

अकर्मणि च विक्षिप्तं चित्तं जानीहि मानद!।

तेन मोक्षमवाप्नोति शुक्लगत्या न संशयः ॥ ९॥

एकाग्रमष्टधा चित्तं तदेवैकात्मधारकम् ।

सम्प्रज्ञात समाधिस्थम् जानीहि साधुसत्तम ॥ १०॥

निरोधसंज्ञितं चित्तं निवृत्तिरूपधारकम् ।

असम्प्रज्ञातयोगस्थं जानीहि योगसेवया ॥ ११॥

सिद्धिर्नानाविधा प्रोक्ता भ्रान्तिदा तत्र सम्मता ।

माया सा गणनाथस्य त्यक्तव्या योगसेवया ॥ १२॥

पञ्चधा चित्तवृत्तिश्च बुद्धिरूपा प्रकीर्तिता ।

सिद्ध्यर्थं सर्वलोकाश्च भ्रमयुक्ता भवन्त्यतः ॥ १३॥

धर्मा-ऽर्थ-काम-मोक्षाणां सिद्धिर्भिन्ना प्रकीर्तिता ।

ब्रह्मभूतकरी सिद्धिस्त्यक्तव्या पंचधा सदा ॥ १४॥

मोहदा सिद्धिरत्यन्तमोहधारकतां गता ।

बुद्धिश्चैव स सर्वत्र ताभ्यां खेलति विघ्नपः ॥ १५॥

बुद्ध्या यद् बुद्ध्यते तत्र पश्चान् मोहः प्रवर्तते ।

अतो गणेशभक्त्या स मायया वर्जितो भवेत् ॥ १६॥

पञ्चधा चित्तवृत्तिश्च पञ्चधा सिद्धिमादरात् ।

त्यक्त्वा गणेशयोगेन गणेशं भज भावतः ॥ १७॥

ततः स गणराजस्य मन्त्रं तस्मै ददौ स्वयम् ।

गणानां त्वेति वेदोक्तं स विधिं मुनिसत्तम ॥ १८॥

तेन सम्पूजितो योगी प्रह्लादेन महात्मना ।

ययौ गृत्समदो दक्षः स्वर्गलोकं विहायसा ॥ १९॥

प्रह्लादश्च तथा साधुः साधयित्वा विशेषतः ।

योगं योगीन्द्रमुख्यं स शान्तिसद्धारकोऽभवत् ॥ २०॥

विरोचनाय राज्यं स ददौ पुत्राय दैत्यपः ।

गणेशभजने योगी स सक्तः सर्वदाऽभवत् ॥ २१॥

सगुणं विष्णु रूपं च निर्गुणं ब्रह्मवाचकम् ।

गणेशेन धृतं सर्वं कलांशेन न संशयः ॥ २२॥

एवं ज्ञात्वा महायोगी प्रह्लादोऽभेदमाश्रितः ।

हृदि चिन्तामणिम् ज्ञात्वाऽभजदनन्यभावनः ॥ २३॥

स्वल्पकालेन दैत्येन्द्रः शान्तियोगपरायणः ।

शान्तिं प्राप्तो गणेशेनैकभावोऽभवतत्परः ॥ २४॥

शापश्चैव गणेशेन प्रह्लादस्य निराकृतः ।

न पुनर्दुष्टसंगेन भ्रान्तोऽभून्मयि मानद!॥ २५॥

एवं मदं परित्यज ह्येकदन्तसमाश्रयात् ।

असुरोऽपि महायोगी प्रह्लादः स बभूव ह ॥ २६॥

एतत् प्रह्लादमाहात्म्यं यः शृणोति नरोत्तमः ।

पठेद् वा तस्य सततं भवेदोप्सितदायकम् ॥ २७॥

॥ इति मुद्गलपुराणोक्तं प्रह्लादकृतं गणेशस्तोत्रं सम्पूर्णम् ॥

************************************

॥ भक्तमनोरथसिद्धिप्रदं गणेशस्तोत्रम् ॥

श्री गणेशाय नमः । स्कन्द उवाच ।

नमस्ते योगरूपाय सम्प्रज्ञातशरीरिणे ।

असम्प्रज्ञातमूर्ध्ने ते तयोर्योगमयाय च ॥ १॥

वामाङ्गभ्रान्तिरूपा ते सिद्धिः सर्वप्रदा प्रभो ।

भ्रान्तिधारकरूपा वै बुद्धिस्ते दक्षिणाङ्गके ॥ २॥

मायासिद्धिस्तथा देवो मायिको बुद्धिसंज्ञितः ।

तयोर्योगे गणेशान त्वं स्थितोऽसि नमोऽस्तु ते ॥ ३॥

जगद्रूपो गकारश्च णकारो ब्रह्मवाचकः ।

तयोर्योगे हि गणपो नाम तुभ्यं नमो नमः ॥ ४॥

चतुर्विधं जगत्सर्वं ब्रह्म तत्र तदात्मकम् ।

हस्ताश्चत्वार एवं ते चतुर्भुज नमोऽस्तु ते ॥ ५॥

स्वसंवेद्यं च यद्ब्रह्म तत्र खेलकरो भवान् ।

तेन स्वानन्दवासी त्वं स्वानन्दपतये नमः ॥ ६॥

द्वंद्वं चरसि भक्तानां तेषां हृदि समास्थितः ।

चौरवत्तेन तेऽभूद्वै मूषको वाहनं प्रभो ॥ ७॥

जगति ब्रह्मणि स्थित्वा भोगान्भुंक्षि स्वयोगगः ।

जगद्भिर्ब्रह्मभिस्तेन चेष्टितं ज्ञायते न च ॥ ८॥

चौरवद्भोगकर्ता त्वं तेन ते वाहनं परम् ।

मूषको मूषकारूढो हेरम्बाय नमो नमः ॥ ९॥

किं स्तौमि त्वां गणाधीश योगशान्तिधरं परम् ।

वेदादयो ययुः शान्तिमतो देवं नमाम्यहम् ॥ १०॥

इति स्तोत्रं समाकर्ण्य गणेशस्तमुवाच ह ।

वरं वृणु महाभाग दास्यामि दुर्लभं ह्यपि ॥ ११॥

त्वया कृतमिदं स्तोत्रं योगशान्तिप्रदं भवेत् ।

मयि भक्तिकरं स्कंद सर्वसिद्धिप्रदं तथा ॥ १२॥

यं यमिच्छसि तं तं वै दास्यामि स्तोत्रयंत्रितः ।

पठते श्रृण्वते नित्यं कार्तिकेय विशेषतः ॥ १३॥

इति श्रीमुद्गलपुराणन्तर्वर्ति गणेशस्तोत्रं समाप्तम् ।

************************************

॥ योगशान्तिज्ञानप्रदं गणेशस्तोत्रम् ॥

श्रीगणेशाय नमः ।

सनकाद्या ऊचुः ।

धन्योऽसि नृपशार्दूल बुद्धिस्ते परमाद्भुता ।

निर्वेदं राजभोगेभ्यः सम्प्राप्तः पृथुलश्रवाः ॥ १॥

योगशन्तिमयं पूर्णं गणेशं विद्धि भूमिप ।

तं भजस्व महाभक्त्या तया शान्तिं गमिष्यसि ॥ २॥

एकदा स्म वयं सर्वे सङ्गताः शङ्करालयम् ।

वटमूले समासीनं पश्यामो ध्यानसंस्थितम् ॥ ३॥

तम् प्रणम्य स्थिताः सर्वे वयं विनयसंस्थिताः ।

स्तोत्रैस्तं बोधयन्तश्च बुबोध वै शिवस्ततः ॥ ४॥

त्यक्त्वा ध्यानं गणेशाय नमो वदतमादरात् ।

श्रुत्वा भ्रान्ता वयं तस्मै पृच्छामः संशयान्विताः ॥ ५॥

कोऽसौ गणाधिपः स्वामिन्नमसि त्वं कथं प्रभो ।

शिवः सहजरूपस्त्वं स्वाधीनः सततं मतः ॥ ६॥

अस्माकं वचनं श्रुत्वा शिवो हर्पसमन्वितः ।

जगाद ज्ञानमाद्यं यद्गाणपत्यं स शान्तिदम् ॥ ७॥

श्रीशिव उवाच ।

ब्रह्म यत्कथ्यते वेदैः कथं तत्र प्रवर्तते ।

स्वाधीनं सहजं विप्रापराधीनं त्रिधाभवम् ॥ ८॥

कर्मयोगादिभेदेन वेदेषु वेदवादिभिः ।

नानाविधं वर्णितं यद् ब्रह्म तन्माययान्वितम् ॥ ९॥

कर्मणां सकलानां संयोगो ब्रह्मणि जायते ।

तेन कर्मात्मकं ब्रह्म तदज्ञानाधिकं मतम् ॥ १०॥

समूहात्मकशब्दश्च गण इत्यभिधीयते ।

बाह्यान्तराधिभेदेनासंयोगे समूहो मतः ॥ ११॥

अन्नप्राणादिकाः शब्दा ब्रह्मणो वाचका मताः ।

ते सर्वे गणरूपाश्च तेषां स्वामी गणेश्वर ॥ १२॥

संयोगाऽयोगकाद्या ये नाना योगा मता बुधैः ।

योगानां योगरूपोऽयं गणेशो नात्र संशयः ॥ १३॥

गणो योगात्मकः प्रोक्तस्तसमात्तस्य गणा वयम् ।

योगरूपं विशेषेण नमामो भक्तिसंयुताः ॥ १४॥

माया विघ्नात्मिका प्रोक्ता भ्रान्तिदा बिम्बभावतः ।

तां जयन्ति जना ईशा विघ्नराजस्य सेवया ॥ १५॥

भवन्ति ते ब्रह्मभूता योगीन्द्रा गाणपाः स्मृताः ।

अहं गणेशरूपो वै भिन्नं मायामयं मतम् ॥ १६॥

चित्तं पञ्चविधं प्रोक्तं सा बुद्धिर्विविधात्मिका ।

तत्रैश्वर्यं च यत्प्रोक्तं सिद्धिदः सा परमाद्भुता ॥ १७॥

तत्र यद् बिम्बभावेन गणेशः प्रतितिष्ठति ।

मायाभ्यां मोहितोऽत्यन्तं सर्वत्रासौ विराजते ॥ १८॥

बिम्बभावं परित्यजय गणेशस्यैव सेवया ।

पञ्चधा चित्तमुत्सृज्य स्वयं चिन्तामणिर्भवेत् ॥ १९॥

गणेशोऽहं यदा विप्रास्तदा कुत्र प्रवर्तते ।

संयोगो मे तथा योगः शान्तियोगं लभेत्ततः ॥ २०॥

न भिन्नोऽहं कदा तस्माद्गणेशान्नात्र संशयः ।

योगीन्द्रः शान्तियोगेन ब्रह्मभूतो भविष्यति ॥ २१॥

एतदेव मदीयं यद्गुह्यं ध्यानं प्रकीर्तितम् ।

अतो गणेशदासोऽहं तं नमामि सदा द्विजाः ॥ २२॥

एवमुक्त्वा महायोगी वीरराम स शङ्करः ।

उच्छिन्नसंशया जाताः सनकाद्या वयं नृप ॥ २३॥

विचरामो महीमेताम् स्वर्गेषु विवरेषु ।

योगमार्गेण योगीशा गाणपत्यस्वभावतः ॥ २४॥

गणेशदर्शने जाता लालसा वयमादरात् ।

तस्मिन्काले गणाधीशः कश्यपस्यात्मजोऽभवत् ॥ २५॥

काशीराजो महाभक्तो गाणपत्यपरायणः ।

तस्य गृहे गतो देवः स्वकीयाचार्यसाधनात् ॥ २६॥

दर्शनार्थं वयं तत्र गताः काश्यां महामते ।

दर्शयामो गणेशं स्म ब्रह्मचारिस्वरूपिणम् ॥ २७॥

तम् प्रणम्य वयं राजन् स्थिता भक्त्या समन्विताः ।

बालरूपधरं देवं स्तुमः स्म बालयूथगम् ॥ २८॥

सनकाद्या ऊचुः ।

नमो विनायकायैव कश्यपप्रियसूनवे ।

अदितेर्जठरोत्पन्न ब्रह्मचारिन्नमोऽस्तु ते ॥ २९॥

गणेशाय सदा मायाधाराय तद्विवर्जित ।

भक्त्यधीनाय वै तुभ्यं हेरम्बाय नमो नमः ॥ ३०॥

तद् ब्रह्म शाश्वतं देव ब्रह्मणां पतिरञ्जसा ।

योयायोगादिभेदेन क्रीडसे नात्र संशयः ॥ ३१॥

आदिमध्यान्तरूपस्त्वं प्रकृतिः पुरुषस्तथा ।

नादानन्दौ च सूक्षस्त्वं स्थूलरूपो भवान् प्रभो ॥ ३२॥

सुरासुरमयः साक्षान्नरनागस्वरूपधृक् ।

जलस्थलादिभेदेन शोभसे त्वं गजानन ॥ ३३॥

सर्वेभ्यो वर्जितस्त्वं वै मायाहीनः स्वरूपधृक् ।

मायामायिकरूपश्च को जानाति गतिं पराम् ॥ ३४॥

कथं स्तुमो गणाधीशं योगाकारमयं सदा ।

देवा न शंभुमुख्याश्च शक्ताः स्तोतुं कदाचन ॥ ३५॥

वयं धन्या वयं धन्या येन प्रत्यक्षतां गतः ।

अस्माकं योगिनां ढुण्ढे कुलदेवस्त्वमञ्जसा ॥ ३६॥

इत्युक्त्वा मौनमास्थाय ननाम दण्डवच्च तम् ।

उवाच नो गणाधीशो भक्तिभावनियन्त्रितः ॥ ३७॥

विनायक उवाच ।

भवद्भिर्यत्कृतं स्तोत्रं मदीयं योगशान्तिदम् ।

भविष्यति महाभागाः पठतः शृण्वतः सदा ॥ ३८॥

यं यमिच्छति तं तं वै दास्यामि स्तोत्रभावतः ।

भवन्तो गाणपत्याश्च भविष्यथ यथा शिवः ॥ ३९॥

एवमुक्त्वा स्वयं बालश्चिक्रीड प्राकृतो यथा ।

बालकैः सह योगात्मा काश्यपः पूर्ववन्नृपः ॥ ४०॥

वयं काशीपते राजन् दर्शनार्थं गतास्ततः ।

तेनापि मानिताः सम्यक् भुक्त्वा च स्वपदे पुनः ॥ ४१॥

एतत्ते कथितं सर्वं योगशान्तिमयं महत् ।

ज्ञानं पूर्णं गणेशाख्यं तं भजस्व गणाधिपं ॥ ४२॥

इति श्रीमुद्गलपुराणान्तर्गतं गणेशस्तोत्रं समाप्तम् ।

**********************************

॥ श्रीविष्णुकृतं गणेशस्तोत्रम् ॥

नारायण उवाच ।

अथ विष्णुः सभामध्ये तं सम्पूज्य गणेश्वरम् ।

तुष्टाव परया भक्त्या सर्वविघ्नविनाशकम् ॥

ईश त्वां स्तोतुमिच्छामि ब्रह्मज्योतिः सनातनम् ।

नैव वर्णयितुं शक्तोऽस्म्यनुरूपमनीहकम् ॥ १॥

प्रवरं सर्वदेवानां सिद्धानां योगिनां गुरुम् ।

सर्वस्वरूपं सर्वेशं ज्ञानराशिस्वरूपिणम् ॥ २॥

अव्यक्तमक्षरं नित्यं सत्यमात्मस्वरूपिणम् ।

वायुतुल्यं च निर्लिप्तं चाक्षतं सर्वसाक्षिणम् ॥ ३॥ var वायुतुल्याति

संसारार्णवपारे च मायापोते सुदुर्लभे ।

कर्णधारस्वरूपं च भक्तानुग्रहकारकम् ॥ ४॥

वरं वरेण्यं वरदं वरदानामपीश्वरम् ।

सिद्धं सिद्धिस्वरूपं च सिद्धिदं सिद्धिसाधनम् ॥ ५॥

ध्यानातिरिक्तं ध्येयं च ध्यानासाध्यं च धार्मिकम् ।

धर्मस्वरूपं धर्मज्ञं धर्माधर्मफलप्रदम् ॥ ६॥

बीजं संसारवृक्षाणामङ्कुरं च तदाश्रयम् ।

स्त्रीपुंनपुंसकानां च रूपमेतदतीन्द्रियम् ॥ ७॥

सर्वाद्यमग्रपूज्यं च सर्वपूज्यं गुणार्णवम् ।

स्वेच्छया सगुणं ब्रह्म निर्गुणं स्वेच्छया पुनः ॥ ८॥

स्वयं प्रकृतिरूपं च प्राकृतं प्रकृतेः परम् ।

त्वां स्तोतुमक्षमोऽनन्तः सहस्रवदनैरपि ॥ ९॥ var वदनेन च

न क्षमः पञ्चवक्त्रश्च न क्षमश्चतुराननः ।

सरस्वती न शक्ता च न शक्तोऽहं तव स्तुतौ ।

न शक्ताश्च चतुर्वेदाः के वा ते वेदवादिनः ॥ १०॥

इत्येवं स्तवनं कृत्वा मुनीशसुरसंसदि । var  सुरेशं सुरसंसदि

सुरेशश्च सुरैः सार्द्धं विरराम रमापतिः ॥ ११॥

इदं विष्णुकृतं स्तोत्रं गणेशस्य च यः पठेत् ।

सायं प्रातश्च मध्याह्ने भक्तियुक्तः समाहितः ॥ १२॥

तद्विघ्ननाशं कुरुते विघ्नेशः सततं मुने ।

वर्धते सर्वकल्याणं कल्याणजनकः सदा ॥ १३॥

यात्राकाले पठित्वा यो याति तद्भक्तिपूर्वकम् ।

तस्य सर्वाभीष्टसिद्धिर्भवत्येव न संशयः ॥ १४॥

तेन दृष्टं च दुःस्वप्नं सुस्वप्नमुपजायते ।

कदाऽपि न भवेत्तस्य ग्रहपीडा च दारुणा ॥ १५॥

भवेद्विनाशः शत्रूणां बन्धूनां चापिवर्धनम् । var  च विवर्धनम्

शश्वदिघ्नविनाशश्च शश्वत्सम्यग्विवर्धनम् ॥ १६॥

स्थिरा भवेद्गृहे लक्ष्मीः पुत्रपौत्रविवर्धनम् ।

सर्वैश्वर्यमिह प्राप्य ह्यन्ते विष्णुपदं लभेत् ॥ १७॥

फलं चापि च तीर्थानां यज्ञानां यद्भवेद्ध्रुवम् ।

महतां सर्वदानानां श्रीगणेशप्रसादतः ॥ १८॥

इति श्रीब्रह्मवैवर्ते महापुराणे तृतीये गणपतिखण्डे

श्रीविष्णुकृतं गणेशस्तोत्रं सम्पूर्णम् ॥

********************************

॥ श्रीगणेशस्तोत्र ॥

श्रीगणेशाय नमः । नारद उवाच ।

प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम् ।

भक्तावासं स्मरेन्नित्यमायुःकामार्थसिद्धये ॥ १॥

प्रथमं वक्रतुण्डं च एकदन्तं द्वितीयकम् ।

तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम् ॥ २॥

लम्बोदरं पञ्चमं च षष्ठं विकटमेव च ।

सप्तमं विघ्नराजेन्द्रं धूम्रवर्णं तथाष्टमम् ॥ ३॥

नवमं भालचन्द्रं च दशमं तु विनायकम् ।

एकादशं गणपतिं द्वादशं तु गजाननम् ॥ ४॥

द्वादशैतानि नामानि त्रिसन्ध्यं यः पठेन्नरः ।

न च विघ्नभयं तस्य सर्वसिद्धिकरः प्रभुः ॥ ५॥

विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ।

पुत्रार्थी लभते पुत्रान्मोक्षार्थी लभते गतिम् ॥ ६॥

जपेद्गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत् ।

संवत्सरेण सिद्धिं च लभते नात्र संशयः ॥ ७॥

अष्टभ्यो ब्राह्मणेभ्यश्च लिखित्वा यः समर्पयेत् ।

तस्य विद्या भवेत्सर्वा गणेशस्य प्रसादतः ॥ ८॥

॥ इति श्रीनारदपुराणे संकटनाशनं गणेशस्तोत्रं सम्पूर्णम् ॥

****************************************

॥ श्रीगणेशहृदयं स्तोत्रम् ॥

॥ श्रीगणेशाय नमः ॥

॥ श्रीउमामहेश्वराभ्यां नमः ॥

शौनक उवाच ।

प्रकृतं वद सूत त्वं संवादं शङ्करस्य च ।

सनकादेर्विशेषेण सर्वसिद्धिकरं परम् ॥ १॥

नानावतारसंयुक्तं धूम्रवर्णचरित्रकम् ।

श्रुत्वा सनकमुख्यास्तं किमूचुर्योगसिद्धये ॥ २॥

सूत उवाच ।

धूम्रवर्णावतारस्य श्रुत्वाऽहं वधसंश्रितम् ।

चरितं हृष्टरोमाणः पप्रच्छुः शङ्करं द्विजाः ॥ ३॥

सनकाद्या ऊचुः ।

नानावतारसंयुक्तं श्रुत्वामाहात्म्यमुत्तमम् ।

धूम्रवर्णावतारस्य सन्तुष्टाः स्म सदाशिव ॥ ४॥

अधुना शाधि सर्वेश योगप्राप्त्यर्थमुत्तमम् ।

विधिं सुखकरं शीघ्रं सुगमं योगिनायक ॥ ५॥

शिव उवाच ।

गणेशहृदयं वक्ष्ये सर्वसिद्धिप्रदायकम् ।

साधकाय महाभागाः शीघ्रेण शान्तिदं परम् ॥ ६॥ (शीघ्रं वै)

पुराऽहं गणनाथस्य ध्यानयुक्तोऽभवं द्विजाः ।

तत्र मां सरितां श्रेष्ठा जगाद वाक्यमुत्तमम् ॥ ७॥

गङ्गोवाच ।

वद शङ्कर कस्य त्वं ध्यानं करोषि नित्यदा ।

इच्छामि तमहं ज्ञातु त्वत्तः किं परमं मतम् ॥ ८॥

शिव उवाच ।

गणेशं देवदेवेशं ब्रह्मब्रह्मेशमादरात् ।

ध्यायामि सर्वभावज्ञे कुलदेवं सनातनम् ॥ ९॥

तस्य यद् हृदयं देवि गुप्तं सर्वप्रदायकम् ।

कथयिष्यामि सर्वज्ञे येन ज्ञास्यसि तं विभुम् ॥ १०॥

पुराऽज्ञानावृतोऽहं तु तपसि संस्थितोऽभवम् ।

तत्र तपः प्रभावेण हृद्यपश्यं गजाननम् ॥ ११॥

तस्य दर्शनमात्रेण स्फूर्तिः प्राप्ता मया प्रिये ।

तया गणेश्वरं ज्ञात्वा योगिवन्द्योऽभवं मुदा ॥ १२॥

तत्तेऽहं शृणु वक्ष्यामि गणेशहदयं परम् ।

येन गाणेशयोगे त्वं निपुणा सम्भविष्यसि ॥ १३॥

ॐ अस्य श्रीगणेशहृदयस्तोत्रमन्त्रस्य शम्भुरृषिः ।

नानाविधानि छन्दांसि । श्री गणेशो देवता । गमिति बीजम् ।

ज्ञानात्मिका शक्तिः । नादः कीलकम् ।

श्रीगणपतिप्रीत्यर्थमभीष्टसिद्ध्यर्थं जपे विनियोगः ।

अथ करन्यासः ।

ॐ गां अङ्गुष्ठाभ्यां नमः ।

ॐ गीं तर्जनीभ्यां नमः ।

ॐ गूं मध्यमाभ्यां नमः ।

ॐ गैं अनामिकाभ्यां नमः ।

ॐ गौं कनिष्ठिकाभ्यां नमः ।

ॐ गः करतलकरपृष्ठाभ्यां नमः ।

इति करन्यासः ॥

अथ हृदयाद्यङ्गन्यासः ।

ॐ गां हृदयाय नमः ।

ॐ गीं शिरसे स्वाहा ।

ॐ गूं शिखायै वषट् ।

ॐ गैं कवचाय हुम् ।

ॐ गौं नेत्रत्रयाय वौषट् ।

ॐ गः अस्त्राय फट् ।

इति हृदयाद्यङ्गन्यासः ॥

अथ ध्यानम् ।

सिन्दूराभं त्रिनेत्रं पृथुतरजठरं रक्तवस्त्रावृतं तं

पाशं चैवाङ्कुशं वै रदनमभयदं पाणिभिः सन्दधानम् ॥

सिद्ध्या बुद्ध्या प्रश्लिष्टं (प्रशिष्टं) गजवदनमहं चिन्तये ह्येकदन्तं

नानाभूषाभिरामं निजजनसुखदं नाभिशेषं गणेशम् ॥ १४॥

इति ध्यानम् ।

एवं ध्यात्वा मानसोपचारैः पूजयेत् ।

किञ्चिन्मूलमन्त्रं जप्त्वा हृदयं पठेत् ॥

ॐ गणेशमेकदन्तं च चिन्तामणिं विनायकम् ।

दुण्ढिराजं मयूरेशं लम्बोदरं गजाननम् ॥ १५॥

हेरम्बं वक्रतुण्डं च ज्येष्ठराजं निजस्थितम् ।

आशापूरं तु वरदं विकटं धरणीधरम् ॥ १६॥

सिद्धिबुद्धिपतिं वन्दे ब्रह्मणस्पतिसंज्ञितम् ।

माङ्गल्येशं सर्वपूज्यं विघ्नानां नायकं परम् ॥ १७॥

एकविंशति नामानि गणेशस्य महात्मनः ।

अर्थेन संयूतान्येव हृदयं परिकीर्तितम् ॥ १८॥

गङ्गो वाच ।

एकविंशतिनाम्नां त्वमर्थं ब्रूहि सदाशिव ।

गणेशहदयं येन जानामि करुणानिधे ॥ १९॥

शिव उवाच ।

गकाररूपं विविधं चराचरं णकारगं ब्रह्म तथा परात्परम् ।

तयोः स्थितास्तस्य गणाः प्रकीर्तिता गणेशमेकं प्रणमाम्यहं परम् ॥ २०॥

मायास्वरूपं तु सदैकवाचकं दन्तः परो मायिकरूपधारकः ।

योगे तयोरेकरदं सुमानिनि धीस्थं नतोऽहं जनभक्तिलालसम् ॥ २१॥

चित्तप्रकाशं विविधेषु संस्थं लिप्तं न लेपादि विवर्जितं तम् ।

भोगैर्विहीनं त्वथ भोगकारकं चिन्तामणिं तं प्रणमामि नित्यम् ॥ २२॥

विनायकं नायकवर्जितं प्रिये विशेषतो नायकमीश्वरात्मनाम् ।

निरङ्कुशं तं प्रणमामि सर्वदं सदात्मकं भावयुतेन चेतसा ॥ २३॥

वेदाः पुराणानि महेश्वरादिकाः शास्त्राणि योगेश्वरदेवमानवाः ।

नागासुरा ब्रह्मगणाश्च जन्तवो ढुण्ढन्ति वन्दे त्वथ दुण्ढिराजकम् ॥ २४॥

मायार्थवाच्यो हि मयुरभावो नानाभ्रमार्थं प्रकरोति (प्रकरोमि) तेन् ।

तस्मान् मयूरेशमथो वदन्ति नमामि मायापतिमासमन्तात् ॥ २५॥

यस्योदराद्विश्वमिदं प्रसूतं ब्रह्माणि तद्वज्जठरे स्थितानि ।

अनन्तरूपं जठरं हि यस्य लम्बोदरं तं प्रणतोऽस्मि नित्यम् ॥ २६॥

जगद्गलाधो गणनायकस्य गजात्मकं ब्रह्मशिरः परेशम् ।

तयोश्च योगे प्रवदन्ति सर्वे गजाननं तं प्रणमामि नित्यम् ॥ २७॥

दीनार्थवाच्यस्त्वथ हेर्जगच्च ब्रह्मार्थवाच्यो निगमेषु रम्बः ।

तत्पालकत्वाच्च तयोः प्रयोगे हेरम्बमेकं प्रणमामि नित्यम् ॥ २८॥

विश्वात्मकं यस्य शरीरमेकं तस्माच्च वक्त्रं परमात्मरूपम् ।

तुण्डं तदेवं हि तयोः प्रयोगे तं वक्रतुण्डं प्रणमामि नित्यम् ॥ २९॥

मातापिताऽयं जगतां परेषां तस्याऽपि माता जनकादिकं न ।

श्रेष्ठं वदन्ते निगमाः परेश तं ज्येष्ठराजं प्रणमामि नित्यम् ॥ ३०॥

नानाचतुःस्थं विविधात्मकेन संयोगरूपेण निजस्वरूपम् ।

पूर्यस्य सा पूर्णसमाधिरूपा स्वानन्दनाथं प्रणमामि चातः ॥ ३१॥

मनोरथान् पूरयतीह गङ्गे चराचराणां जगतां परेषाम् ।

अतो गणेशं प्रवदन्ति चाशाप्रपूरकं तं प्रणमामि नित्यम् ॥ ३२॥

वरैः समास्थापितमेव सर्वं विश्वं तथा ब्रह्मविहारिणा च ।

अतः परं विप्रमुखा वदन्ति वरप्रदं तं वरदं नतोऽस्मि ॥ ३३॥

मायामयं सर्वमिदं विभाति मिथ्यास्वरूपं भ्रमदायकं च ।

तस्मात्परं ब्रह्म वदन्ति सत्यमेनं परेशं विकटं नमामि ॥ ३४॥

चित्तस्य प्रोक्ता मुनिभिः पृथिव्यो नानाविधा योगिभिरेव गङ्गे ।

तासां सदा धारक एक एव वन्दे च धरणीधरमादिभूतम् ॥ ३५॥

विश्वात्मिका ब्रह्ममयी हि बुद्धिः तस्या विमोहप्रदिका च सिद्धिः ।

ताभ्यां सदा खेलति योगनाथः तं सिद्धिबुद्धीशमथो नमामि ॥ ३६॥

असत्यसत् साम्यतुरीयनैज्यगन्निवृत्ति रूपाणि (ब्रह्माणि) विरच्य खेलकः ।

सदा स्वयं योगमयेन भाति तं नमाम्यतोऽहं त्वथ ब्रह्मणस्पतिम् ॥ ३७॥

अमङ्गलं विश्वमिदं सहात्मभिः अयोगसंयोगयुतं प्रणश्वरम् ।

ततः परं मङ्गलरूपधधारकं नमामि माङ्गल्यपतिं सुशान्तिदम् ॥ ३८॥

सर्वत्रमान्यं सकलावभासकं सुज्ञैः शुभादावशुभादिपूजितम् ।

पूज्यं न तस्मान्निगमादिसम्मतं तं सर्वपूज्यं प्रणतोऽस्मि नित्यम् ॥ ३९॥

भुक्तिं च मुक्तिं प्रददाति तुष्टो भक्तिप्रियो निजविघ्नहा च ।

भक्त्या विहीनाय ददाति विघ्नान् तं विघ्नराजं प्रणमामि नित्यम् ॥ ४०॥

नामार्थयुक्तं कथितं प्रिये ते विघ्नेश्वरस्यैव परं रहस्यम् ।

सप्तत्रिनाम्नां हृदयं नरो यो ज्ञात्वा परं ब्रह्ममयो भवेदिह ॥ ४१॥

गङ्गोवाच ।

नाम्नां यथृदयं प्रोक्तं त्वया ब्रह्मपदं परम् ।

न तत्रानुभवो मे तु तदर्थं वद शङ्कर ॥ ४२॥

शिव उवाच ।

मन्त्रं गृह्य गणेशस्य पुरश्चरणमार्गतः ।

भज त्वं तेन तं ज्ञानं भविष्यति न संशयः ॥ ४३॥

हृदयं मन्त्रराजस्य कथयामि समासतः ।

मन्त्र एव गणेशानो न भिन्नस्तत्र वर्तते ॥ ४४॥

गकारो ब्रह्मदेवश्चाऽकारो विष्णुः प्रकीर्तितः ।

बिन्दुः शिवस्तथा भानुः सानुनासिक संज्ञितः ॥ ४५॥

तेषां सन्धिर्महाशक्तिरेभिः स मन्त्र उच्यते ।

देवता गणनाथस्तु तेषां संयोगकारकः ॥ ४६॥

तेभ्यस्तारमयं विश्वं समुत्पन्नं प्रिये पुरा ।

अतस्तारयुतो मन्त्रो गणेशैकाक्षराकृतिः ॥ ४७॥

तारः स षड् विधः प्रोक्तस्तन्निबोध सरिद्वरे ।

अकारोकारकौः प्रोक्तौः मकारो नादबिन्दुके ॥ ४८॥

शून्यं विद्धि महामाये तत्र भेदं वदाम्यहम् ।

शून्यं देहीस्वरूपं तु बिन्दुर्देह इति स्मृतः ॥ ४९॥

ताभ्यां चतुर्विधं विश्वं स्थूलादिभेदधारकम् ।

एतादृशं बिजानीहि मन्त्रराजं गजाननम् ॥ ५०॥

आगमोक्तविधानेन कृत्वा न्यासादिकं पुरा ।

ततो गणेश्वरं पूज्य जपं कुर्याद्विचक्षणः ॥ ५१॥

तद्दशांशेन होमं वै कुर्यादागममार्गतः ।

तद्दशांशमितं प्रोक्तं तर्पणं गणपस्य च ॥ ५२॥

तद्दशांशमितं देवि मार्जनं तद्दशांशतः ।

विप्राणां भोजनं प्रोक्तमेवं पञ्चाङ्गमुच्चते ॥ ५३॥

यथाविधिकृतं चैतत्सद्यो हि फलदं भवेत् ।

अतस्त्वं मन्त्रराजस्य पञ्चकं तत्समाचर ॥ ५४॥

एवमुक्त्वा ददे तस्यै मन्त्रं विधिसमन्वितम् ।

गणेशस्य प्रणम्यैव मां ययौ सा तपोऽर्थतः ॥ ५५॥

मयूरेशं समासाद्य चकार तप उत्तमम् ।

गङ्गा तत्रैव विप्रेशा मन्त्रध्यानपरायणा ॥ ५६॥

पुरश्चरणमेकं सा चकार सरितां वरा ।

ततः प्रसन्नता यातो गणेशो भक्तवत्सलः ॥ ५७॥

तस्यैव कृपया तस्या हृदि ज्ञानं बभूव ह ।

तेनैकविंशतेर्नाम्नामर्थज्ञा तत्क्षणादभूत् ॥ ५८॥

ततो हर्षयुता देवी तत्र वासं चकार सा ।

नित्यं भक्तिसमायुक्ताऽभजत्तं गणनायकम् ॥ ५९॥

सनकाद्या ऊचुः ।

ब्रह्मभूता सरित्श्रेष्ठा मयूरेशं कथं प्रभो ।

अभजत्तस्य मार्गं नो ब्रूहि नाथ नमोऽस्तु ते ॥ ६०॥

शिव उवाच ।

ब्रह्मभूतो नरो योगी गणेशमभजत्सदा ।

नवधा भक्तिभावेन तत्परश्च महर्षयः ॥ ६१॥

पुत्रः कलत्रं जनकौ सुहृदगणो द्रव्यं सखावृत्तिजविद्यया युतम् ।

स्वर्गस्तु मोक्षो विविधं त्वमेव मे स्वामी गुरुर्विघ्नपतिः परात्परः ॥ ६२॥

सांसर्गिकं कायिकवाचिकं परं कर्माचरन्मानसजं त्रिदेहतः ।

ज्ञानं हृदिस्थं च मया परात्परं विध्नेश्वरायेति समर्पितं किल ॥ ६३॥

योगाकारेण विघ्नेश एकानेकादिसंश्रितः ।

भुङ्क्ते स विविधान्भोगान् शुभाऽशुभसमाश्रितान् ॥ ६४॥

नाहं नरः स्वयं साक्षात् क्रीडति गणनायकः ।

स्वामिसेवकभावेन ब्रह्मणि शोभते रतः ॥ ६५॥

अनेन विधिना विप्रा भजन्ते गणनायकम् ।

योगिनः शुकमुख्याश्च मुद्गलाद्या महर्षयः ॥ ६६॥

एतत्सर्वं समाख्यातं गुह्यं गणपतेर्मया ।

हृदयं तेन विघ्नेशं तोषयध्वं महर्षयः ॥ ६७॥

यथा देहेन्द्रियाद्येषु मुख्यं स्वहृदयं स्मृतम् ।

यत्र जीवस्वरूपेण तिष्ठति गणनायकः ॥ ६८॥

तथा गणपतेरेतद् हृदयं परिकीर्तितम् ।

अत्र योगपतिः साक्षात्तिष्ठति ब्रह्मनायकः ॥ ६९॥

अनेन गणनाथं तु यस्तोष्यति नरोत्तमः ।

स भुक्त्वा सकलान्भोगानन्ते योगमयो भवेत् ॥ ७०॥

एवं मदीयवाक्यं ते श्रुत्वा ब्रह्मसुताः परम् ।

प्रणम्य मां ययुः सर्वे सनकाद्यास्तपोवनम् ॥ ७१॥

एकाक्षरमन्त्रस्य पञ्चकं सेव्य योगिनः ।

गणेशहृदयं ज्ञात्वा गाणपत्या बभूविरे ॥ ७२॥

ततो नित्यं गणेशस्य हृदयं ते महर्षयः ।

जपन्ति भक्तिसंयुक्ता भ्रमन्ति स्वेच्छयेरिताः ॥ ७३॥

अतस्त्वमपि भावेन गणेशहृदयं परम् ।

सेवस्व गाणपत्येषु मुख्यस्तथा भविष्यसि ॥ ७४॥

मुद्गल उवाच ।

एवमुक्त्वा महानागं शेषाय प्रददौ शिवः ।

मन्त्रमेकाक्षर साङ्गं स ययौ तं प्रणम्य च ॥ ७५॥

साधयित्वा यथान्यायं हृदयज्ञो बभूव ह ।

नित्यं हृदयकेनैव तुष्टाव द्विरदाननम् ॥ ७६॥

गणेशहृदयं पुण्यं शृणुयाच्छ्रावयेन्नरः ।

ईप्सितं प्राप्नुयाच्चान्ते ब्रह्मभूतो भवेदिह ॥ ७७॥

नित्यं पठेन्नरश्चेदं हृदयं गणपस्य यः ।

स गणेशो न सन्देहो दर्शनात्सिद्धिदो भवेत् ॥ ७८॥

पुत्रपौत्रकलत्रादि लभते पाठतो नरः ।

धनं सुविपुलं धान्यमारोग्यमचलां श्रियम् ॥ ७९॥

एकविंशतिवारं यो दिवसानेकविंशतिम् ।

पठेत् गणपतिं चिन्त्यं स लभेदीप्सितं फलम् ॥ ८०॥

असाध्यं साधयेन्मर्त्यौ गणेशहृदयेन यत् ।

राजबद्धं त्रिकालेषु मोचयेत्पाठ तो विधे ॥ ८१॥

मारणोच्चाटनादीनि वश्यमोहादिकानि तु ।

अनेन साधयेन्मर्त्यः परं कृत्यं विनाशयेत् (प्रणाशयेत्)॥ ८२॥

सङ्ग्रामे जयमाप्नोति वीरश्रीसंयुतो भवेत् ।

अस्य पाठेन भो दक्ष न किञ्चिद् दुर्लभं भवेत् ॥ ८३॥

विद्यामायुर्यशः प्रज्ञामङ्ग हीनोङ्गमाप्नुयात् ।

यं यं चिन्तयते मर्त्यस्तं तं प्राप्नोति निश्चितम् ॥ ८४॥

नानेन सदृशं किञ्चिद् शीघ्रसिद्धिकरं भवेत् ।

साक्षाद्गणपतेः प्रोक्तं हृदयं ते मया विधे ॥ ८५॥

गणेशभक्तिहीनाय दुर्विनीताय विद्विषे ।

न देयं गणराजस्य हृदयं वै कदाचन ॥ ८६॥

गणेशभक्तियुक्ताय साधवे च प्रयत्नतः ।

दातव्यं तेन विघ्नेशः सुप्रसन्नो भविष्यति ॥ ८७॥

महासिद्धिप्रदं तुभ्यं कथितं गणपस्य च ।

हृदयं कि पुनः श्रोतुमिच्छसि त्वं प्रजापते ॥ ८८॥

॥ इति श्रीमुद्गलपुराणोक्त गणेशहृदयं स्तोत्रं सम्पूर्णम् ॥

****************************************

॥ श्रीगणेशापराधक्षमापणस्तोत्रम् ॥

श्रीगणेशाय नमः ।

सुमुखो मखभुङ्मुखार्चितः सुखवृद्धौ निखिलार्तिशान्तये।

अखिलश्रुतिशीर्षवर्णितः सकलाद्यः स सदाऽस्तु मे हृदि ॥ १॥

प्रणवाकृतिमस्तके नयः प्रणवो वेदमुखावसानयोः।

अयमेव विभाति सुस्फुटं ह्यवतारः प्रथमः परस्य सः ॥ २॥

प्रथमं गुणनायको बभौ त्रिगुणानां सुनियन्त्रणाय यः।

जगदुद्भवपालनात्ययेष्वजविष्ण्वीशसुरप्रणोदकः ॥ ३॥

विधिविष्णुहरेन्द्रदेवतादिगणानां परिपालनाद्विभुः।

अपि चेन्द्रियपुञ्जचालनाद्गणनाथः प्रथितोऽर्थतः स्फुटम् ॥ ४॥

अणिमामुखसिद्धिनायका भजतः साधयतीष्टकामनाः।

अपवर्गमपि प्रभुर्धियो निजदासस्य तमो विहृत्य यः ॥ ५॥

जननीजनकः सुखप्रदो निखिलानिष्टहरोऽखिलेष्टदः।

गणनायक एव मामवेद्रदपाशाङ्कुशमोदकान् दधत् ॥ ६॥

शरणं करुणार्णवः स मे शरणं रक्ततनुश्चतुर्भुजः।

शरणं भजकान्तरायहा शरणं मङ्गलमूर्तिरस्तु मे ॥ ७॥

सततं गणनायकं भजे नवनीताधिककोमलान्तरम्।

भजनाद्भवभीतिभञ्जनं स्मरणाद्विघ्ननिवारणक्षमम् ॥ ८॥

अरुणारुणवर्णराजितं तरुणादित्यसमप्रभं प्रभुम्।

वरुणायुधमोदकावहं करुणामूर्तिमहं प्रणौमि तम् ॥ ९॥

क्व नु मूषकवाहनं प्रभुं मृगये त्वज्ञतमोऽवनीतले।

विबुधास्तु पितामहादयस्त्रिषु लोकेष्वपि यं न लेभिरे ॥ १०॥

शरणागतपालनोत्सुकं परमानन्दमजं गणेश्वरम्।

वरदानपटुं कृपानिधिं हृदयाब्जे निदधामि सर्वदा ॥ ११॥

सुमुखे विमुखे सति प्रभौ न महेन्द्रादपि रक्षणं कदा।

त्वयि हस्तिमुखे प्रसन्नताऽभिमुखेनापि यमाद्भयं भवेत् ॥ १२॥

सुतरां हि जडोऽपि पण्डितः खलु मूकोऽप्यतिवाक्पतिर्भवेत्।

गणराजदयार्द्रवीक्षणादपि चाज्ञः सकलज्ञातामियात् ॥ १३॥

अमृतं तु विषं विषं सुधा परमाणुस्तु नगो नगोऽप्यणुः।

कुलिशं तु तृणं तृणं पविर्गणनाथाशु तवेच्छया भवेत् ॥ १४॥

गतोऽसि विभो विहाय मां ननु सर्वज्ञ न वेत्सि मां कथम्।

किमु पश्यसि विश्वदृङ् न मां न दया किमपि ते दयानिधे ॥ १५॥

अयि दीनदयासरित्पते मयि नैष्ठुर्यमिदं कुतः कृतम्।

निजभक्तिसुधालवोऽपि यन्न हि दत्तो जनिमृत्युमोचकः ॥ १६॥

नितरां विषयोपभोगतः क्षपितं त्वायुरमूल्यमेनसा।

अहहाज्ञतमस्य साहसं सहनीयं कृपया त्वया विभो ॥ १७॥

भगवन्नहि तारकस्य ते वत मन्त्रस्य जपः कृतस्तथा।

न कदैकधियापि चिन्तनं तव मूर्तेस्तु मयातिपाप्मना ॥ १८॥

भजनं न कृतं समर्चनं तव नामस्मरणं न दर्शनम्।

हवनं प्रियमोदकार्पणं नवदूर्वा न समर्पिता मया ॥ १९॥

नच साधुसमागमः कृतस्तव भक्ताश्च मया न सत्कृताः।

द्विजभोजनमप्यकारि नो वत दौरात्म्यमिदं क्षमस्व मे ॥ २०॥

न विधिं तव सेवनस्य वा नच जाने स्तवनं मनुं तथा।

करयुग्मशिरःसुयोजनं तव भूयाद्गणनाथपूजनम् ॥ २१॥

अथ का गणनाथ मे गतिर्नहि जाने पतितस्य भाविनी।

इति तप्ततनुं सदाऽव मामनुकम्पार्द्रकटाक्षवीक्षणैः ॥ २२॥

इह दण्डधरस्य सङ्गमेऽखिलधैर्यच्यवने भयङ्करे।

अविता गणराज को नु मां तनुपातावसरे त्वया विना ॥ २३॥

वद कं भवतोऽन्यमिष्टदाच्छरणं यामि दयाधनादृते।

अवनाय भवाग्निभर्जितो गतिहीनः सुखलेशवर्जितः ॥ २४॥

श्रुतिमृग्यपथस्य चिन्तनं किमु वाचोऽविषयस्य संस्तुतिम्।

किमु पूजनमप्यनाकृतेरसमर्थो रचयामि देवते ॥ २५॥

किमु मद्विकलात्स्वसेवनं किमु रङ्कादुपचारवैभवम्।

जडवाङ्गतितो निजस्तुतिं गणनाथेच्छसि वा दयानिधे ॥ २६॥

अधुनापि च किं दया न ते मम पापातिशयादितीश चेत्।

हृदये नवनीतकोमले न हि काठिन्यनिवेशसम्भवः ॥ २७॥

व्यसनार्दितसेवकस्य मे प्रणतस्याशु गणेश पादयोः।

अभयप्रदहस्तपङ्कजं कृपया मूर्ध्नि कुरुष्व तावकम् ॥ २८॥

जननीतनयस्य दृक्पथं मुहुरेति प्रसभं दयार्द्रधीः।

मम दृग्विषयस्तथैव भो गणनाथाशु भवनुकम्पया ॥ २९॥

गजराजमुखाय ते नमो मृगराजोत्तमवाहनाय ते।

द्विजराजकलाभृते नमो गणराजाय सदा नमोऽस्तु ते ॥ ३०॥

गणनाथ गणेश विघ्नराट् शिवसूनो जगदेकसद्गुरो।

सुरमानुषगीतमद्यशः प्रणतं मामव संसृतेर्भयात् ॥ ३१॥

जय सिद्धिपते महामते जय बुद्धीश जडार्तसद्गते।

जय योगिसमूहसद्गुरो जय सेवारत कल्पनातरो ॥ ३२॥

तनुवाग् हृदयैरसच्च सद्यदनस्थात्रितये कृतं मया।

जगदीश करिष्यमाणमप्यखिलं कर्म गणेश तेऽर्पितम् ॥ ३३॥

इति कृष्णमुखोद्गतं स्तवं गणराजस्य पुरः पठेन्नरः।

सकलाधिविवर्जितो भवेत्सुतदारादिसुखी स मुक्तिभाक् ॥ ३४॥

इति मुद्गलपुराणन्तर्वर्ति श्रीगणेशापराधक्षमापणस्तोत्रं सम्पूर्णम् ।

***************************************

॥ श्रीगणेशावतारस्तोत्रम् ॥

श्री गणेशाय नमः ।

आङ्गिरस उवाच ।

अनन्ता अवताराश्च गणेशस्य महात्मनः ।

न शक्यते कथां वक्तुं मया वर्षशतैरपि ॥ १॥

संक्षेपेण प्रवक्ष्यामि मुख्यानां मुख्यतां गतान् ।

अवतारांश्च तस्याष्टौ विख्यातान् ब्रह्मधारकान् ॥ २॥

वक्रतुण्डावतारश्च देहिनां ब्रह्मधारकः ।

मत्सरासुरहन्ता स सिंहवाहनगः स्मृतः ॥ ३॥

एकदन्तावतारो वै देहिनां ब्रह्मधारकः ।

मदासुरस्य हन्ता स आखुवाहनगः स्मृतः ॥ ४॥

महोदर इति ख्यातो ज्ञानब्रह्मप्रकाशकः ।

मोहासुरस्य शत्रुर्वै आखुवाहनगः स्मृतः ॥ ५॥

गजाननः स विज्ञेयः सांख्येभ्यः सिद्धिदायकः ।

लोभासुरप्रहर्ता च मूषकगः प्रकीर्तितः ॥ ६॥

लम्बोदरावतारो वै क्रोधसुरनिबर्हणः ।

आखुगः शक्तिब्रह्मा सन् तस्य धारक उच्यते ॥ ७॥

विकटो नाम विख्यातः कामासुरप्रदाहकः ।

मयूरवाहनश्चायं सौरमात्मधरः स्मृतः ॥ ८॥

विघ्नराजावतारश्च शेषवाहन उच्यते ।

ममासुरप्रहन्ता स विष्णुब्रह्मेति वाचकः ॥ ९॥

धूम्रवर्णावतारश्चाभिमानासुरनाशकः ।

आखुवाहनतां प्राप्तः शिवात्मकः स उच्यते ॥ १०॥

एतेऽष्टौ ते मया प्रोक्ता गणेशांशा विनायकाः ।

एषां भजनमात्रेण स्वस्वब्रह्मप्रधारकाः ॥ ११॥

स्वानन्दवासकारी स गणेशानः प्रकथ्यते ।

स्वानन्दे योगिभिर्दृष्टो ब्रह्मणि नात्र संशयः ॥ १२॥

तस्यावताररूपाश्चाष्टौ विघ्नहरणाः स्मृताः ।

स्वानन्दभजनेनैव लीलास्तत्र भवन्ति हि ॥ १३॥

माया तत्र स्वयं लीना भविष्यति सुपुत्रक ।

संयोगे मौनभावश्च समाधिः प्राप्यते जनैः ॥ १४॥

अयोगे गणराजस्य भजने नैव सिद्ध्यति ।

मायाभेदमयं ब्रह्म निवृत्तिः प्राप्यते परा ॥ १५॥

योगात्मकगणेशानो ब्रह्मणस्पतिवाचकः ।

तत्र शान्तिः समाख्याता योगरूपा जनैः कृता ॥ १६॥

नानाशान्तिप्रभेदश्च स्थाने स्थाने प्रकथ्यते ।

शान्तीनां शान्तिरूपा सा योगशान्तिः प्रकीर्तिता ॥ १७॥

योगस्य योगता दृष्टा सर्वब्रह्म सुपुत्रक ।

न योगात्परमं ब्रह्म ब्रह्मभूतेन लभ्यते ॥ १८॥

एतदेव परं गुह्यं कथितं वत्स तेऽलिखम् ।

भज त्वं सर्वभावेन गणेशं ब्रह्मनायकम् ॥ १९॥

पुत्रपौत्रादिप्रदं स्तोत्रमिदं शोकविनाशनम् ।

धनधान्यसमृद्ध्यादिप्रदं भावि न संशयः ॥ २०॥

धर्मार्थकाममोक्षाणां साधनं ब्रह्मदायकम् ।

भक्तिदृढकरं चैव भविष्यति न संशयः ॥ २१॥

इति मुद्गलपुराणान्तर्गतं गणेशावतारस्तोत्रं सम्पूर्णम् ॥

**********************************

॥ सङ्कष्टहरणं गणेशाष्टकम् ॥

श्रीगणेशाय नमः ।

ॐ अस्य श्रीसङ्कष्टहरणस्तोत्रमन्त्रस्य श्रीमहागणपतिर्देवता,

संकष्टहरणार्थ जपे विनियोगः ।

ॐ ॐ ॐकाररूपं त्र्यहमिति च परं यत्स्वरूपं तुरीयं

त्रैगुण्यातीतनीलं कलयति मनसस्तेज-सिन्दूर-मूर्तिम् ।

योगीन्द्रैर्ब्रह्मरन्ध्रैः सकल-गुणमयं श्रीहरेन्द्रेण सङ्गं

गं गं गं गं गणेशं गजमुखमभितो व्यापकं चिन्तयन्ति ॥ १॥

वं वं वं विघ्नराजं भजति निजभुजे दक्षिणे न्यस्तशुण्डं

क्रं क्रं क्रं क्रोधमुद्रा-दलित-रिपुबलं कल्पवृक्षस्य मूले ।

दं दं दं दन्तमेकं दधति मुनिमुखं कामधेन्वा निषेव्यं

धं धं धं धारयन्तं धनदमतिघियं सिद्धि-बुद्धि-द्वितीयम् ॥ २॥

तुं तुं तुं तुङ्गरूपं गगनपथि गतं व्याप्नुवन्तं दिगन्तान्

क्लीं क्लीं क्लीं कारनाथं गलितमदमिलल्लोल-मत्तालिमालम् ।

ह्लीं ह्लीं ह्लीं कारपिङ्गं सकलमुनिवर-ध्येयमुण्डं च शुण्डं

श्रीं श्रीं श्रीं श्रीं श्रयन्तं निखिल-निधिकुलं नौमि हेरम्बबिम्बम् ॥ ३॥

लौं लौं लौं कारमाद्यं प्रणवमिव पदं मन्त्रमुक्तावलीनां

शुद्धं विघ्नेशबीजं शशिकरसदृशं योगिनां ध्यानगम्यम् ।

डं डं डं डामरूपं दलितभवभयं सूर्यकोटिप्रकाशं

यं यं यं यज्ञनाथं जपति मुनिवरो बाह्यमभ्यन्तरं च ॥ ४॥

हुं हुं हुं हेमवर्णं श्रुति-गणित-गुणं शूर्पकर्णं कृपालुं

ध्येयं सूर्यस्य बिम्बं ह्युरसि च विलसत् सर्पयज्ञोपवीतम् ।

स्वाहा हुं फट् नमोऽन्तैष्ठ-ठठठ-सहितैः पल्लवैः सेव्यमानं

मन्त्राणां सप्तकोटि-प्रगुणित-महिमाधारमीशं प्रपद्ये ॥ ५॥

पूर्वं पीठं त्रिकोणं तदुपरि-रुचिरं षट्कपत्रं पवित्रं

यस्योर्ध्वं शुद्धरेखा वसुदल कमलं वा स्वतेजश्चतुस्रम् ।

मध्ये हुङ्कार बीजं तदनु भगवतः स्वाङ्गषट्कं षडस्रे

अष्टौ शक्तीश्च सिद्धीर्बहुलगणपतिर्विष्टरश्चाऽष्टकं च ॥ ६॥

धर्माद्यष्टौ प्रसिद्धा दशदिशि विदिता वा ध्वजाल्यः कपालं

तस्य क्षेत्रादिनाथं मुनिकुलमखिलं मन्त्रमुद्रामहेशम् ।

एवं यो भक्तियुक्तो जपति गणपतिं पुष्प-धूपा-ऽक्षताद्यै-

र्नैवेद्यैर्मोदकानां स्तुतियुत-विलसद्-गीतवादित्र-नादैः ॥ ७॥

राजानस्तस्य भृत्या इव युवतिकुलं दासवत् सर्वदास्ते

लक्ष्मीः सर्वाङ्गयुक्ता श्रयति च सदनं किङ्कराः सर्वलोकाः ।

पुत्राः पुत्र्यः पवित्रा रणभुवि विजयी द्यूतवादेऽपि वीरो

यस्येशो विघ्नराजो निवसति हृदये भक्तिभाग्यस्य रूद्रः ॥ ८॥

॥ इति सङ्कष्टहरणं गणेशाष्टकं सम्पूर्णम् ॥

************************************

॥ श्रीविष्णुकृतं श्रीगणेशाष्टकम् ॥

गणेशनामाष्टकम्

नामाष्टकस्तोत्रम् च श्रीविष्णुरुवाच ।

गणेशमेकदन्तञ्च हेरम्बं विघ्ननायकम् ।

लम्बोदरं शूर्पकर्णं गजवक्त्रं गुहाग्रजम् ॥

नामाष्टकार्थं पुत्रस्य शृणु मतो हरप्रिये ।

स्तोत्राणां सारभूतञ्च सर्वविघ्नहरं परम् ॥

ज्ञानार्थवाचको गश्च णश्च निर्वाणवाचकः ।

तयोरीशं परं ब्रह्म गणेशं प्रणमाम्यहम् ॥ १॥

एकः शब्दः प्रधानार्थो दन्तश्च बलवाचकः ।

बलं प्रधानं सर्वस्मादेकदन्तं नमाम्यहम् ॥ २॥

दीनार्थवाचको हेश्च रम्बः पालकवाचकः ।

पालकं दीनलोकानां हेरम्बं प्रणमाम्यहम् ॥ ३॥ परिपालकं तं दीनानां

विपत्तिवाचको विघ्नो नायकः खण्डनार्थकः ।

विपत्खण्डनकारन्तं प्रणमे विघ्ननायकम् ॥ ४॥ नमामि

विष्णुदत्तैश्च नैवेद्यैर्यस्य लम्बं पुरोदरम् । लम्बोदरं पुरा

पित्रा दत्तैश्च विविधैर्वन्दे लम्बोदरञ्च तम् ॥ ५॥

शूर्पाकारौ च यत्कर्णौ विघ्नवारणकारकौ । विघ्नवारणकारणौ

सम्पदौ ज्ञानरूपौ च शूर्पकर्णं नमाम्यहम् ॥ ६॥ सम्पदास्फालरूपौ

विष्णुप्रसादपुष्पञ्च यन्मूर्ध्नि मुनिदत्तकम् ।

तद्गजेन्द्रमुखं कान्तं गजवक्त्रं नमाम्यहम् ॥ ७॥ तद्गजेन्द्रवक्त्रयुक्तं

गुहस्याग्रे च जातोऽयमाविर्भूतो हरालये । हरगृहे

वन्दे गुहाग्रजं देवं सर्वदेवाग्रपूजितम् ॥ ८॥

एतन्नामाष्टकं दुर्गे नानाशक्तियुतं परम् ।

पुत्रस्य पश्य वेदे च तदा कोपं वृथा कुरु ॥

एतन्नामाष्टकं स्तोत्रं नामार्थसंयुतं शुभम् ।

त्रिसन्ध्यं यः पठेन्नित्यं स सुखी सर्वतो जयी ॥

ततो विघ्नाः पलायन्ते वैनतेयाद्यथोरगाः ।

गणेश्वरप्रसादेन महाज्ञानी भवेद्ध्रुवम् ॥

पुत्रार्थी लभते पुत्रं भार्यार्थी विपुलां स्त्रियाम् ।

महाजडः कवीन्द्रश्च विद्यावांश्च भवेद्ध्रुवम् ॥

इति ब्रह्मवैवर्ते विष्णुपदिष्टं गणेशनामाष्टकं

स्तोत्रं सम्पूर्णम् ॥

*******************************

॥ गणेशाष्टकम् ॥

यतोऽनन्तशक्तेरनन्ताश्च जीवा

यतो निर्गुणादप्रमेया गुणास्ते ।

यतो भाति सर्वं त्रिधा भेदभिन्नं

सदा तं गणेशं नमामो भजामः ॥ १॥

यतश्चाविरासीज्जगत्सर्वमेत-

त्तथाब्जासनो विश्वगो विश्वगोप्ता ।

तथेन्द्रादयो देवसङ्घा मनुष्याः

सदा तं गणेशं नमामो भजामः ॥ २॥

यतो वह्निभानू भवो भूर्जलं च

यतः सागराश्चन्द्रमा व्योम वायुः ।

यतः स्थावरा जङ्गमा वृक्षसङ्घा-

स्सदा तं गणेशं नमामो भजामः ॥ ३॥

यतो दानवा किन्नरा यक्षसङ्घा

यतश्चारणा वारणा श्वापदाश्च ।

यतः पक्षिकीटा यतो वीरुधश्च

सदा तं गणेशं नमामो भजामः ॥ ४॥

यतो बुद्धिरज्ञाननाशो मुमुक्षोः

यतः सम्पदो भक्तसन्तोषिकाः स्युः ।

यतो विघ्ननाशो यतः कार्यसिद्धिः

सदा तं गणेशं नमामो भजामः ॥ ५॥

यतः पुत्रसम्पद्यतो वाञ्छितार्थो

यतोऽभक्तविघ्नास्तथानेकरूपाः ।

यतः शोकमोहौ यतः काम एव

सदा तं गणेशं नमामो भजामः ॥ ६॥

यतोऽनन्तशक्तिः स शेषो बभूव

धराधारणेऽनेकरूपे च शक्तः ।

यतोऽनेकधा स्वर्गलोका हि नाना

सदा तं गणेशं नमामो भजामः ॥ ७॥

यतो वेदवाचो विकुण्ठा मनोभिः

सदा नेति नेतीति यत्ता गृणन्ति ।

परब्रह्मरूपं चिदानन्दभूतं

सदा तं गणेशं नमामो भजामः ॥ ८॥

फलश्रुतिः ।

पुनरूचे गणाधीशः स्तोत्रमेतत्पठेन्नरः ।

त्रिसन्ध्यं त्रिदिनं तस्य सर्वकार्यं भविष्यति ॥ ९॥

यो जपेदष्टदिवसं श्लोकाष्टकमिदं शुभम् ।

अष्टवारं चतुर्थ्यां तु सोऽष्टसिद्धीरवाप्नुयात् ॥ १०॥

यः पठेन्मासमात्रं तु दशवारं दिने दिने ।

स मोचयेद्बन्धगतं राजवध्यं न संशयः ॥ ११॥

विद्याकामो लभेद्विद्यां पुत्रार्थी पुत्रमाप्नुयात् ।

वाञ्छितान् लभते सर्वानेकविंशतिवारतः ॥ १२॥

यो जपेत्परया भक्त्या गजाननपदो नरः ।

एवमुक्त्वा ततो देवश्चान्तर्धानं गतः प्रभुः ॥ १३॥

*********************************

॥ श्रीगणेशाष्टकम् ॥

श्रीगणेशाय नमः ।

गणपति-परिवारं चारुकेयूरहारं

गिरिधरवरसारं योगिनीचक्रचारम् ।

भव-भय-परिहारं दुःख-दारिद्रय-दूरं

गणपतिमभिवन्दे वक्रतुण्डावतारम् ॥ १॥

अखिलमलविनाशं पाणिना ध्वस्तपाशं var हस्तपाशं कनकगिरिनिकाशं सूर्यकोटिप्रकाशम् ।

भवभवगिरिनाशं मालतीतीरवासं

गणपतिमभिवन्दे मानसे राजहंसम् ॥ २॥

विविध-मणि-मयूखैः शोभमानं विदूरैः

कनक-रचित-चित्रं कण्ठदेशेविचित्रं ।

दधति विमलहारं सर्वदा यत्नसारं

गणपतिमभिवन्दे वक्रतुण्डावतारम् ॥ ३॥

दुरितगजममन्दं वारणीं चैव वेदं

विदितमखिलनादं नृत्यमानन्दकन्दम् ।

दधति शशिसुवक्त्रं चाऽङ्कुशं यो विशेषं

गणपतिमभिवन्दे सर्वदाऽऽनन्दकन्दम् ॥ ४॥

त्रिनयनयुतभाले शोभमाने विशाले

मुकुट-मणि-सुढाले मौक्तिकानां च जाले ।

धवलकुसुममाले यस्य शीर्ष्णः सताले

गणपतिमभिवन्दे सर्वदा चक्रपाणिम् ॥ ५॥

वपुषि महति रूपं पीठमादौ सुदीपं

तदुपरि रसकोणं यस्य चोर्ध्वं त्रिकोणम् ।

गजमितदलपद्मं संस्थितं चारुछद्मं

गणपतिमभिवन्दे कल्पवृक्षस्य वृन्दे ॥ ६॥

वरदविशदशस्तं दक्षिणं यस्य हस्तं

सदयमभयदं तं चिन्तये चित्तसंस्थम् ।

शबलकुटिलशुण्डं चैकतुण्डं द्वितुण्डं

गणपतिमभिवन्दे सर्वदा वक्रतुण्डम् ॥ ७॥

कल्पद्रुमाधःस्थित-कामधेनुं

चिन्तामणिं दक्षिणपाणिशुण्डम् ।

बिभ्राणमत्यद्भुतचित्तरूपं यः

पूजयेत् तस्य समस्तसिद्धिः ॥ ८॥

व्यासाष्टकमिदं पुण्यं गणेशस्तवनं नृणाम् ।

पठतां दुःखनाशाय विद्यां संश्रियमश्नुते ॥ ९॥

॥ इति श्रीपद्मपुराणे उत्तरखण्डे व्यासविरचितं गणेशाष्टकं सम्पूर्णम् ॥

************************************

॥ श्रीगणेशाष्टोत्तरशतनामस्तोत्रम् ॥

श्री गणेशाय नमः ।

यम उवाच ।

गणेश हेरंब गजाननेति महोदर स्वानुभवप्रकाशिन् ।

वरिष्ठ सिद्धिप्रिय बुद्धिनाथ वदंतमेवं त्यजत प्रभीताः ॥ १॥

अनेकविघ्नांतक वक्रतुंड स्वसंज्ञवासिंश्च चतुर्भुजेति ।

कवीश देवांतकनाशकारिन् वदंतमेवं त्यजत प्रतीभाः ॥ २॥

महेशसूनो गजदैत्यशत्रो वरेण्यसूनो विकट त्रिनेत्र ।

परेश पृथ्वीधर एकदंत वदंतमेवं त्यजत प्रतीभाः ॥ ३॥

प्रमोद मोदेति नरांतकारे षडूर्मिहंतर्गजकर्ण ढुण्ढे ।

द्वन्द्वारिसिन्धो स्थिर भावकारिन् वदंतमेवं त्यजत प्रतीभाः ॥ ४॥

विनायक ज्ञानविघातशत्रो पराशरस्यात्मज विष्णुपुत्र ।

अनादिपूज्याऽऽखुग सर्वपूज्य वदंतमेवं त्यजत प्रतीभाः ॥ ५॥

वैरिच्य लंबोदर धूम्रवर्ण मयूरपालेति मयूरवाहिन् ।

सुरासुरैः सेवितपादपद्म वदंतमेवं त्यजत प्रतीभाः ॥ ६॥

वरिन्महाखुध्वजशूर्पकर्ण शिवाज सिंहस्थ अनंतवाह ।

दितौज विघ्नेश्वर शेषनाभे वदंतमेवं त्यजत प्रतीभाः ॥ ७॥

अणोरणीयो महतो महीयो रवेर्ज योगेशज ज्येष्ठराज ।

निधीश मंत्रेश च शेषपुत्र वदंतमेवं त्यजत प्रतीभाः ॥ ८॥

वरप्रदातरदितेश्च सूनो परात्पर ज्ञानद तारवक्त्र ।

गुहाग्रज ब्रह्मप पार्श्वपुत्र वदंतमेवं त्यजत प्रतीभाः ॥ ९॥

सिधोश्च शत्रो परशुप्रयाणे शमीशपुष्पप्रिय विघ्नहारिन् ।

दूर्वाभरैरचित देवदेव वदंतमेवं त्यजत प्रतीभाः ॥ १०॥

धियः प्रदातश्च शमीप्रियेति सुसिद्धिदातश्च सुशांतिदातः ।

अमेयमायामितविक्रमेति वदंतमेवं त्यजत प्रतीभाः ॥ ११॥

द्विधा चतुर्थिप्रिय कश्यपाश्च धनप्रद ज्ञानप्रदप्रकाशिन् ।

चिंतामणे चित्तविहारकारिन् वदंतमेवं त्यजत प्रतीभाः ॥ १२॥

यमस्य शत्रो अभिमानशत्रो विधेर्जहंतः कपिलस्य सूनो ।

विदेह स्वानंदजयोगयोग वदंतमेवं त्यजत प्रतीभाः ॥ १३॥

गणस्य शत्रो कमलस्य शत्रो समस्तभावज्ञ च भालचंद्र ।

अनादिमध्यांतमय प्रचारिन् वदंतमेवं त्यजत प्रतीभाः ॥ १४॥

विभो जगद्रूप गणेश भूमन् पुष्टेःपते आखुगतेति बोधः ।

कर्तुश्च पातुश्च तु संहरेति वदंतमेवं त्यजत प्रतीभाः ॥ १५॥

इदमष्टोत्तरशतं नाम्नां तस्य पठंति ये ।

शृणवंति तेषु वै भीताः कुरूध्वं मा प्रवेशनम् ॥ १६॥

भुक्तिमुक्तिप्रदं ढुण्ढेर्धनधान्यप्रवर्धनम् ।

ब्रह्मभूतकरं स्तोत्रं जपन्तं नित्यमादरात् ॥ १७॥

यत्र कुत्र गणेशस्य चिह्नयुक्तानि वै भटाः ।

धामानि तत्र संभीताः कुरूध्वं मा प्रवेशनम् ॥ १८॥

इति श्रीमदांतये मुद्गलपुराणे यमदूतसंवादे

गणेशाष्टोत्तरशतनामस्तोत्रम् समाप्तम् ॥

***********************************

॥ श्रीगणेशाष्टोत्तरशतनामार्चनस्तोत्रम् ॥

श्री गणेशाय नमः ।

काश्यां तु बहवो विघ्नाः काशीवासवियोजकाः।

तच्छान्त्यर्थं ढुण्ढिराजः पूजनीयः प्रयत्नतः ॥ १॥

अष्टोत्तरशतैर्दिव्यैर्गणेशस्यैव नामभिः।

कर्तव्यमतियत्नेन नवदूर्वाङ्कुरार्पणम् ॥ २॥

हिरण्मयतनुं शुद्धं सर्वार्तिहरमव्ययम्।

वरदं गणपं ध्यात्वा पूजा कार्या प्रयत्नतः ॥ ३॥

ऋषिर्विघ्नेशः इत्यादिनाम्नां सर्वेश्वरः शिवः ।

देवता विघ्नराजोऽत्र छन्दोऽनुष्टुप् शुभप्रदम् ॥ ४॥

सर्वप्रत्यूहशमनं फलं शक्तिः सुधात्मिका ।

कीलकं गणनाथस्य पूजा कार्येति कामदा ॥ ५॥

विघ्नेशो विश्ववदनो विश्वचक्षुर्जगत्पतिः।

हिरण्यरूपः सर्वात्मा ज्ञानरूपो जगन्मयः ॥ ६॥

ऊर्ध्वरेता महाबाहुरमेयोऽमितविक्रमः ।

वेदोवेद्यो महाकायो विद्यानिधिरनामयः ॥ ७॥

सर्वज्ञः सर्वगः शान्तो गजास्यो विगतज्वरः ।

विश्वमूर्तिरमेयात्मा विश्वाधारः सनातनः ॥ ८॥

सामगानप्रियो मन्त्री सत्वाधारः सुराधिपः ।

समस्तसाक्षिनिर्द्वन्द्वो निर्लिप्तोऽमोघविक्रमः ॥ ९॥

नियतो निर्मलः पुण्यः कामदः कान्तिदः कविः ।

कामरूपी कामवेषो कमलाक्षः कलाधरः ॥ १०॥

सुमुखः शर्मदः शुद्धो मूषकाधिषवाहनः ।

दीर्घतुण्डधरः श्रीमाननन्तो मोहवर्जितः ॥ ११॥

वक्रतुण्डः शूर्पकर्णः पवनः पावनो वरः ।

योगीशो योगिवंद्यांघ्रिरुमासूनुरघापहः ॥ १२॥

एकदन्तो महाग्रीवः शरण्यः सिद्धिसेवितः ।

सिद्धिदः करुणासिन्धुर्भगवान् भव्यविग्रहः ॥ १३॥

विकटः कपिलो ढुण्ढिरुग्रो भीमो हरः शुभः ।

गणाध्यक्षो गणाराध्यो गणेशो गणनायकः ॥ १४॥

ज्योतिःस्वरूपो भूतात्मा धूम्रकेतुरनाकुलः ।

कुमारगुरुरानन्दो हेरम्बो वेदसंस्तुतः ॥ १५॥

नागोपवीती दुर्धर्षो बालदूर्वाङ्कुरप्रियः ।

भालचन्द्रो विश्वधामा शिवपुत्रो विनायकः ॥ १६॥

लीलावलम्बितवपुः पूर्णः परमसुन्दरः ।

विद्यान्धकारमार्तण्डो विघ्नारण्यदवानलः ॥ १७॥

सिन्दूरवदनो नित्यो विष्णुः प्रमथपूजितः ।

शरण्यदिव्यपादाब्जो भक्तमन्दारभूरुहः ॥ १८॥

रत्नसिंहासनासीनो मणिकुण्डलमण्डितः ।

भक्तकल्याणदोऽमेयकल्याणगुणसंश्रयः ॥ १९॥

एतानि दिव्यनामानि गणेशस्य महात्मनः ।

पठनीयानि यत्नेन सर्वदा सर्वदेहिभिः ॥ २०॥

नाम्नामेकैकमेतेषां सर्वसिद्धिप्रदायकम् ।

सर्वविघ्नेशनाम्नां तु फलं वक्तुं न शक्यते ॥ २१॥

एकैकमेव तन्नाम दिव्यं जप्त्वा मुनीश्वराः ।

प्रत्यूहमात्ररहितास्तिष्ठन्ति शिवपूजकाः ॥ २२॥

दूर्वायुग्मानि सङ्गृह्य नूतनान्यतियत्नतः ।

पूजनीयो गणाध्यक्षो नाम्नामेकैकसंख्यया ॥ २३॥

नभस्यशुक्लपक्षस्य चतुर्थ्यां विधिपूर्वकम् ।

वक्रतुण्डेशकुण्डे तु स्नानं कृत्वा प्रयत्नतः ॥ २४॥

वक्रतुण्डेशमाराध्यं सर्वाभीष्टप्रदायकम् ।

ध्यायेदधहरं शुद्धं काञ्चनाभमनामयम् ॥ २५॥

ततः पूजा यथाशास्त्रं कृत्वा दूर्वाङ्कुरैर्नवैः ।

पूजा कार्या विशेषेण नामोच्चारणपूर्वकम् ॥ २६॥

ततश्च मोदकैर्दिव्यैः सुगन्धैघृतपाचितैः ।

नैवेद्यं कल्पयेदिष्टं गणेशाय शुभावहम् ॥ २७॥

अन्यैश्च परमान्नाद्यैर्भक्ष्यैर्भोज्यैर्मनोहरैः ।

तोषणीयः प्रयत्नेन वक्रतुण्डो विनायकः ॥ २८॥

प्रदक्षिणनमस्कारा दिव्यतन्नामसंख्यया ।

कर्तव्या नियतं शुद्धैर्मौनव्रतपरायणैः ॥ २९॥

ततः संतर्प्य विधिवच्चैवान् ब्राह्मणसत्तमान् ।

पुनरभ्यर्च्य विघ्नेशमिमं मन्त्रमुदीरयेत् ॥ ३०॥

वक्रतुण्ड सुराराध्य सूर्यकोटिसमप्रभ ।

निर्विघ्नेनैव सततं काशीवासं प्रयच्छ मे ॥ ३१॥

इति सम्प्रार्थ्य विधिवत् पूजां कृत्वा पुनर्मुदा ।

नमस्कृत्वा प्रसाद्यैनं गच्छेत् ढुण्ढिविनायकम् ॥ ३२॥

ढुण्ढिराजार्चनं सम्यक् कर्तव्यं विधिपूर्वकम् ।

तत्रैव च विशेषेण पूजां कृत्वा ततः परम् ॥ ३३॥

पूजनीयाः प्रयत्नेन सर्वदा मोदकप्रियाः ।

शिवप्रीतिकरा नित्यं शुद्धाः पञ्च विनायकाः ॥ ३४॥

क्षिप्रसिद्धिप्रदं क्षिप्रगणेशं सुरवन्दितम् ।

सम्पूज्य पूर्ववत्सम्यक् गच्छेदाशाविनायकम् ॥ ३५॥

आशाविनायकं सम्यक् पूजयित्वा ततः परम् ।

अर्कविघ्नेश्वरः सम्यक् पूजनीयः प्रयत्नतः ॥ ३६॥

पूर्ववत्पूजनीयः स्यात्ततः सिद्धिविनायकः ।

पूजनीयस्ततः सम्यक् चिन्तामणिविनायकः ॥ ३७॥

सेवाविनायकोऽप्येवं सम्पूज्यस्तदनन्तरम् ।

दुर्गाविनायकस्यापि पूजा कार्या ततः परम् ॥ ३८॥

एवं सम्पूज्य विधिवद्भक्तिश्रद्धासमन्वितैः ।

शैवाः शङ्करतत्त्वज्ञा भोजनीयाः प्रयत्नतः ॥ ३९॥

एवं सम्पूजिताः सम्यक् प्रीतास्ते गणनायकाः ।

काशीवासं प्रयच्छन्ति निर्विघ्नेनैव सादरम् ॥ ४०॥

आज्येन कापिलेनैव सार्धलक्षत्रयाहुतीः ।

हुत्वैतन्नामभीः सम्यक् सर्वविद्याधिषो भवेत् ॥ ४१॥

एतानि दिव्यनामानि प्रतिवासरमादरात् ।

पठित्वा गणनाथस्थ पूजा कार्या प्रयत्नतः ॥ ४२॥

यस्यकस्यापि सन्तुष्टो गणपः सर्वसिद्धिदः ।

अत एव सदा पूज्यो गणनाथो विचक्षणैः ॥ ४३॥

गणेशादपरो लोके विघ्नहर्ता न विद्यते ।

तस्मादन्वहमाराध्यो गणेशः सर्वसिद्धिदः ॥ ४४॥

काशीनिवाससिद्ध्यर्थं विष्णुना पूजितः पुरा ।

पुरा विघ्नेश्वरः सम्यक्पूजितो दण्डपाणिना ॥ ४५॥

कर्कोटकेन नागेन गणेशः पूजितः पुरा ।

शेषेण पूजितः पूर्वं गणेशः सिद्धिदायकः ॥ ४६॥

काशीयात्रार्थमुद्युक्तो विधिर्विघ्नकुलाकुलः ।

पूजयामास विघ्नेशं विधिवद्भक्तिपूर्वकम् ॥ ४७॥

सूर्येणाभ्यर्चितः पूर्वं चन्द्रेणेन्द्रेण च प्रिये ।

देवैरन्यैश्च विधिवत्पूजितो गणनायकः ॥ ४८॥

मर्त्यानाममराणां च मुनिनां वा वरानने ।

न सिद्ध्यन्त्येव कार्याणि गणेशाभ्यर्चनं विना ॥ ४९॥

इति श्री शिवरहस्यान्तर्गतकाशीमाहात्म्ये

हरगौरीसंवादे गणेशाष्टोत्तरशतनामार्चनस्तोत्रं सम्पूर्णम् ।

****************************************

॥ श्रीगणेशाष्टोत्तरशतनामावली ॥

ॐ अकल्मषाय नमः ।

ॐ अग्निगर्भच्चिदे नमः ।

ॐ अग्रण्ये नमः ।

ॐ अजाय नमः ।

ॐ अद्भुतमूर्तिमते नमः ।

ॐ अध्यक्षाय नमः ।

ॐ अनेकाचिताय नमः ।

ॐ अव्यक्तमूर्तये नमः ।

ॐ अव्ययाय नमः ।

ॐ अव्ययाय नमः ।

ॐ आश्रिताय नमः ।

ॐ इन्द्रश्रीप्रदाय नमः ।

ॐ इक्षुचापधृते नमः ।

ॐ उत्पलकराय नमः ।

ॐ एकदन्ताय नमः ।

ॐ कलिकल्मषनाशनाय नमः ।

ॐ कान्ताय नमः ।

ॐ कामिने नमः ।

ॐ कालाय नमः ।

ॐ कुलाद्रिभेत्त्रे नमः ।

ॐ कृतिने नमः ।

ॐ कैवल्यशुखदाय नमः ।

ॐ गजाननाय नमः ।

ॐ गणेश्वराय नमः ।

ॐ गतिने नमः ।

ॐ गुणातीताय नमः ।

ॐ गौरीपुत्राय नमः ।

ॐ ग्रहपतये नमः ।

ॐ चक्रिणे नमः ।

ॐ चण्डाय नमः ।

ॐ चतुराय नमः ।

ॐ चतुर्बाहवे नमः ।

ॐ चतुर्मूर्तिने नमः ।

ॐ चन्द्रचूडामण्ये नमः ।

ॐ जटिलाय नमः ।

ॐ तुष्टाय नमः ।

ॐ दयायुताय नमः ।

ॐ दक्षाय नमः ।

ॐ दान्ताय नमः ।

ॐ दूर्वाबिल्वप्रियाय नमः ।

ॐ देवाय नमः ।

ॐ द्विजप्रियाय नमः ।

ॐ द्वैमात्रीयाय नमः ।

ॐ धीराय नमः ।

ॐ नागराजयज्ञोपवीतवते नमः ।

ॐ निरङ्जनाय नमः ।

ॐ परस्मै नमः ।

ॐ पापहारिणे नमः ।

ॐ पाशांकुशधराय नमः ।

ॐ पूताय नमः ।

ॐ प्रमत्तादैत्यभयताय नमः ।

ॐ प्रसन्नात्मने  नमः ।

ॐ बीजापूरफलासक्ताय नमः ।

ॐ बुद्धिप्रियाय नमः ।

ॐ ब्रह्मचारिणे नमः ।

ॐ ब्रह्मद्वेषविवर्जिताय नमः ।

ॐ ब्रह्मविदुत्तमाय नमः ।

ॐ भक्तवाञ्छितदायकाय नमः ।

ॐ भक्तविघ्नविनाशनाय नमः ।

ॐ भक्तिप्रियाय नमः ।

ॐ मायिने नमः ।

ॐ मुनिस्तुत्याय नमः ।

ॐ मूषिकवाहनाय नमः ।

ॐ रमार्चिताय नमः ।

ॐ लंबोदराय नमः ।

ॐ वरदाय नमः ।

ॐ वागीशाय नमः ।

ॐ वाणीप्रदाय नमः ।

ॐ विघ्नराजाय नमः ।

ॐ विधये नमः ।

ॐ विनायकाय नमः ।

ॐ विभुदेश्वराय नमः ।

ॐ वीतभयाय नमः ।

ॐ शक्तिसम्युताय नमः ।

ॐ शान्ताय नमः ।

ॐ शाश्वताय नमः ।

ॐ शिवाय नमः ।

ॐ शुद्धाय नमः ।

ॐ शूर्पकर्णाय नमः ।

ॐ शैलेन्द्रतनुजोत्सङ्गकेलनोत्सुकमानसाय नमः ।

ॐ श्रीकण्ठाय नमः ।

ॐ श्रीकराय नमः ।

ॐ श्रीदाय नमः ।

ॐ श्रीप्रतये नमः ।

ॐ सच्चिदानन्दविग्रहाय नमः ।

ॐ समस्तजगदाधाराय नमः ।

ॐ समाहिताय नमः ।

ॐ सर्वतनयाय नमः ।

ॐ सर्वरीप्रियाय नमः ।

ॐ सर्वसिद्धिप्रदाय नमः ।

ॐ सर्वसिद्धिप्रदायकाय नमः ।

ॐ सर्वात्मकाय नमः ।

ॐ सामघोषप्रियाय नमः ।

ॐ सिद्धार्चितपदांबुजाय नमः ।

ॐ सिद्धिदायकाय नमः ।

ॐ सृष्टिकर्त्रे नमः ।

ॐ सोमसूर्याग्निलोचनाय नमः ।

ॐ सौम्याय नमः ।

ॐ स्कन्दाग्रजाय नमः ।

ॐ स्तुतिहर्षिताय नमः ।

ॐ स्थुलकण्ठाय नमः ।

ॐ स्थुलतुण्डाय नमः ।

ॐ स्वयंकर्त्रे नमः ।

ॐ स्वयंसिद्धाय नमः ।

ॐ स्वलावण्यसुतासारजितमन्मथविग्रहाय नमः ।

ॐ हरये नमः ।

ॐ हृष्टाय नमः ।

ॐ ज्ञानिने  नमः ।

॥ इति श्री विनायक अष्टोत्तरशत नामावली सम्पूर्णम् ॥

************************************

॥ गोकर्ण गणधिपस्तुती ॥

श्रीमत्परमहंसेत्यादि समस्तबिरुदालङ्कृत श्रीजगद्गुरु

सार्वभौम श्रीश्री शिवाभिनव नृसिंह भारती महास्वामिरनुग्रहीता

कुक्षिस्फुरन्नागभीत्या मूषिकः प्रपलायते ।

इति मत्वा मयूरं किमारूढोऽसि गनाधिप ॥ १॥

मत्कुक्षिसुस्थमखिलजगदिति सर्वान् प्रबोधयितुम् ।

बृहदुदरतां कृपाब्धे धत्से किम् करिवरास्य त्वम् ॥ २॥

त्वद्दर्शनकृतहासं चन्द्रमसं हन्तुमुद्युक्तम् ।

त्वामनुनेतुं ताराः कुसुमव्याजेन सेवन्ते ॥ ३॥

यज्जातुर्येण हि लोकानुद्धर्तुमम्बिकानाथः ।

गोकर्णे स्थितिमकरोल्लोकहितं तं प्रणौमि विघ्नेशम् ॥ ४॥

॥ इति श्रीगणाधिपस्तुतिः सम्पूर्णा ॥

**********************************

॥ चिन्तामणिषट्पदी ॥

चिन्तामणिषट्पदी ।

श्रीगणेशाय नमः ।

द्विरदवदन विषमरद वरद जयेशान शान्तवरसदन ।

सदनवसादन सादनमन्तरायस्य रायस्य ॥ १॥

इन्दुकल कलितालिक सालिकशुम्भत्कपोलपालियुग ।

विकटस्फुटकटधाराधारोऽस्य प्रपञ्चस्य ॥ २॥

परपरशुपाणिपाणे पणितपणायेः पणायितोऽसि यतः ।

आरूह्य वज्रदन्तं विदधासि विपदन्तम् ॥ ३॥

लम्बोदर दूर्वासन शयधृतसामोदमोदकाशनक ।

शनकैरवलोकय मां यमान्तरायापहारिदृशा ॥ ४॥

आनन्दतुन्दिलाखिलवृन्दारकवृन्दवन्दिताङ्घ्रियुग ।

सराप्रदण्डरसालो नागजभालोऽतिभासि विभो ॥ ५॥

अगणेयगुणेशात्मज चिन्तकचिन्तामणे गणेशान ।

स्वचरणशरणं करुणावरुणालय पाहि मां दीनम् ॥ ६॥

कचिरवचोऽमृतरावोन्नीता नीता दिवस्तुतिः स्फीता ।

इति षट्पदी मदीया गणपतिपादाम्भुजे विशतु ॥ ७॥

इति चिन्तामणिषट्पदी समाप्ता ॥

***********************************

॥ ढुण्ढिराजभुजंगप्रयातस्तोत्रम् ॥

उमाङ्गोद्भवं दन्तिवक्त्रं गणेशं भजे कङ्कणैः शोभितं धूम्रकेतुम् ।

गले हारमुक्तावलीशोभितं तं नमो ज्ञानरूपं गणेशं नमस्ते ॥ १॥

गणेशैकदन्तं शुभं सर्वकार्ये स्मरन् मन्मुखं ज्ञानदं सर्वसिद्धिम् ।

मनश्चिन्तितं कार्यसिद्धिर्भवेत्तं नमो बुद्धिकल्पं गणेशं नमस्ते ॥ २॥

कुठारं धरन्तं कृतं विघ्नराजं चतुर्भिर्मखैरेकदन्तैकवर्णम् ।

इदं देवरूपं गणं सिद्धिनाथं नमो भालचन्द्रं गणेशं नमस्ते ॥ ३॥

शिरःसिन्दुरं कुङ्कुमं देहवर्णं शुभैभादिकं प्रीयते विघ्नराजम् ।

महासङ्कटच्छेदने धूम्रकेतुं नमो गौरिपुत्रं गणेशं नमस्ते ॥ ४॥

तथा पातकं छेदितुं विष्णुनामं तथा ध्यायतां शंकरं पापनाशम् ।

यथा पूजितं षण्मुखं शोकनाशं नमो विघ्ननाशं गणेशं नमस्ते ॥ ५॥

सदा सर्वदा ध्यायतामेकदन्तं सदा पूजितं सिन्दुरारक्तपुष्पैः ।

सदा चर्चितं चन्दनैः कुङ्कुमाक्तं नमो ज्ञानरूपं गणेशं नमस्ते ॥ ६॥

नमो गौरिदेह-मलोत्पन्न तुभ्यं नमो ज्ञानरूपं नमः सिद्धिपं तम् ।

नमो ध्यायतामर्चतां बुद्धिदं तं नमो गौर्यपत्यं गणेशं नमस्ते ॥ ७॥

भुजङ्गप्रयातं पठेद् यस्तु भक्त्या प्रभाते नरस्तन्मयैकाग्रचित्तः ।

क्षयं यान्ति विघ्ना दिशः शोभयन्तं नमो ज्ञानरूपं गणेशं नमस्ते ॥ ८॥

॥ इति श्रीढुण्ढिराजभुजङ्गप्रयातस्तोत्रं सम्पूर्णम् ॥

************************************

॥ ढुण्ढिस्वरूपवर्णनस्तोत्रम् ॥

श्रीगणेशाय नमः ।

जैमिनिरुवाच ।

न वक्तुं शक्त्ये राजन् केनापि तत्स्वरूपकम् ।

नोपाधिना युतं ढुण्ढिं वदामि श्रृणु तत्वतः ॥ १॥

अहं पुरा सुशान्त्यर्थं व्यासस्य शरणं गतः ।

मह्यं सङ्कथितं तेन साक्षान्नारायणेन च ॥ २॥

तदेव त्वां वदिष्यामि स्वशिष्यं च निबोध मे ।

यदि तं भजसि ह्यद्य सर्वसिद्धिप्रदायकम् ॥ ३॥

देहदेहिमयं सर्वं गकाराक्षरवाचकम् ।

संयोगायोगरूपं यद् ब्रह्म णकारवाचकम् ॥ ४॥

तयोः स्वामी गणेशश्च पश्य वेदे महामते ।

चित्ते निवासकत्वाद्वे चिन्तामणिः स कथ्यते ॥ ५॥

चित्तरूपा स्वयं बुद्धिर्भ्रान्तिरूपा महीपते ।

सिद्धिस्तत्र तयोर्योगे प्रलभ्येत् तयोः पतिः ॥ ६॥

द्विज उवाच ।

श्रृणु राजन् गणेशस्य स्वरूपं योगदं परम् ।

भुक्तिमुक्तिप्रदं पूर्णं धारितं चेन्नरेण वै ॥ ७॥

चित्ते चिन्तामणिः साक्षात्पञ्चचित्तप्रचालकः ।

पञ्चवृत्तिनिरोधेन प्राप्यते योगसेवया ॥ ८॥

असम्प्रज्ञातसंस्थश्च गजशब्दो महामते ।

तदेव मस्तकं यस्य देहः सर्वात्मकोऽभवत् ॥ ९॥

भ्रान्तिरूपा महामाया सिद्धिर्वामाङ्गसंश्रिता ।

भ्रान्तिधारकरूपा सा बुद्धिश्च दक्षिणाङ्गके ॥ १०॥

तयोः स्वामि गणेशश्च मायाभ्यां खेलते सदा ।

संभजस्व विधानेन तदा संलभसे नृप ॥ ११॥

इति ढुण्ढिस्वरूपवर्णनस्तोत्रं समाप्तम् ।

********************************

॥ दशाक्षरमन्त्रस्तोत्रम् ॥

श्रीगणेशाय नमः ।

मुद्गल उवाच ।

असच्छक्तिश्च सत्सूर्यः समो विष्णुर्महामुने ।

अव्यक्तः शङ्करस्तेषां संयोगे गणपो भवेत् ॥ १॥

संयोगे मायया युक्तो गणेशो ब्रह्मनायकः ।

अयोगे मायया हीनो भवति मुनिसत्तमा ॥ २॥

संयोगायोगयोर्योगे योगो गणेशसंज्ञितः ।

शान्तिभ्यः शान्तिदः प्रोक्तो भजने भक्तिसंयुतः ॥ ३॥

एवमुक्त्वा गणेशस्य ददौ मन्त्रं स मुद्गलः ।

एकाक्षरं विधियुतं ततः सोऽन्तर्हितोऽभवत् ॥ ४॥

ततोऽहं गणराजं तमभजं सर्वभावतः ।

तेन शान्ति समायुक्तश्चरामि त्वकुतोभयः ॥ ५॥

न गणेशात्परं ब्रह्म न गणेशात्परं तपः ।

न गणेशात्परं कर्म ज्ञानं न गणपात्परम् ॥ ६॥

न गणेशात्परो योगो भक्तिर्न गणपात्परा ।

तस्मात्स सर्वपूज्योऽयं सर्वादौ सिद्धिदायकः ॥ ७॥

गणेशानं परित्यज्य कर्मज्ञानादिकं चरेत् ।

तत्सर्वं निष्फलं याति भस्मनि प्रहुतं यथा ॥ ८॥

सर्वांस्त्यज्य गणेशं यो भजतेऽनन्यचेतसा ।

सर्वसिद्धिं लभेत्सद्यो ब्रह्मभूतः स कथ्यते ॥ ९॥

एवमुक्त्वाऽत्रितस्तस्मै ददौ मन्त्रं दशाक्षरम् ।

विधियुक्तं ततः साक्षादन्तर्धानं चकार ह ॥ १०॥

इति दशाक्षरमन्त्रस्तोत्रं समाप्तम् ।

********************************

॥ पंचश्लोकिगणेशपुराणम् ॥

श्रीविघ्नेशपुराणसारमुदितं व्यासाय धात्रा पुरा

तत्खण्डं प्रथमं महागणपतेश्चोपासनाख्यं यथा ।

संहर्तुं त्रिपुरं शिवेन गणपस्यादौ कृतं पूजनं

कर्तुं सृष्टिमिमां स्तुतः स विधिना व्यासेन बुद्ध्याप्तये ॥

सङ्कष्ट्याश्च विनायकस्य च मनोः स्थानस्य तीर्थस्य वै

दूर्वाणां महिमेति भक्तिचरितं तत्पार्थिवस्यार्चनम् ।

तेभ्यो यैर्यदभीप्सितं गणपतिस्तत्तत्प्रतुष्टो ददौ

ताः सर्वा न समर्थ एव कथितुं ब्रह्मा कुतो मानवः ॥

क्रीडाकाण्डमथो वदे कृतयुगे श्वेतच्छविः काश्यपः ।

सिंहाङ्कः स विनायको दशभुजो भूत्वाथ काशीं ययौ ।

हत्वा तत्र नरान्तकं तदनुजं देवान्तकं दानवं

त्रेतायां शिवनन्दनो रसभुजो जातो मयूरध्वजः ॥

हत्वा तं कमलासुरं च सगणं सिन्धुं महादैत्यपं

पश्चात् सिद्धिमती सुते कमलजस्तस्मै च ज्ञानं ददौ ।

द्वापारे तु गजाननो युगभुजो गौरीसुतः सिन्दुरं

सम्मर्द्य स्वकरेण तं निजमुखे चाखुध्वजो लिप्तवान् ॥

गीताया उपदेश एव हि कृतो राज्ञे वरेण्याय वै

तुष्टायाथ च धूम्रकेतुरभिधो विप्रः सधर्मर्धिकः ।

अश्वाङ्को द्विभुजो सितो गणपतिर्म्लेच्छान्तकः स्वर्णदः

क्रीडाकाण्डमिदं गणस्य हरिणा प्रोक्तं विधात्रे पुरा ॥

एतच्छ्लोकसुपञ्चकं प्रतिदिनं भक्त्या पठेद्यः पुमान्

निर्वाणं परमं व्रजेत् स सकलान् भुक्त्वा सुभोगानपि ।

॥ इति श्रीपंचश्लोकिगणेशपुराणम् ॥

*********************************

॥ सर्वसिद्धिप्रदं पुष्टिपतिस्तोत्रम् ॥

श्री गणेशायनमः ।

राधाकृष्णावूचतुः ।

पुष्टिपते नमस्तुभ्यं नमः शङ्करसूनवे ।

ब्रह्मभूताय देवाय सर्वसिद्धिप्रदाय ते ॥ १॥

स्वानन्दवासिने तुभ्यं ब्रह्मपुत्राय ते नमः ।

सिद्धिबुद्धिपते ते वै गणेशाय नमो नमः ॥ २॥

हेरम्बाय नमस्तुभ्यं नमो योगमयाय च ।

सर्वादये च सर्वेश सर्वज्ञाय नमो नमः ॥ ३॥

निर्गुणाय नमस्तुभ्यं सगुणाय नमो नमः ।

गजाननाय वै तुभ्यमभेदाय नमो नमः ॥ ४॥

शान्तिरूपाय शान्ताय शान्तिदाय महोदर ।

मूषकवाहनायैव गाणपत्यप्रियाय ते ॥ ५॥

अनन्तानन्तरूपाय भक्तसंरक्षणाय च ।

भक्तिप्रियाय देवाय भक्त्यधीनाय ते नमः ॥ ६॥

चतुर्बाहुधरायैव नागयज्ञोपवीतिने ।

शूर्पकर्णाय शूराय परशुधर ते नमः ॥ ७॥

विष्णुपुत्राय सर्वेषां पित्रे मात्रे नमो नमः ।

विनायकाय विप्राणां पुत्राय ते नमो नमः ॥ ८॥

सर्वेषां गर्वहन्त्रे च सर्वेभ्यः सुखदाय ते ।

लम्बोदराय विघ्नेश ब्रह्मनायक ते नमः ॥ ९॥

किम् स्तुवस्त्वां गणाधीश यत्र वेदादयः प्रभो ।

शुकशम्भ्वादयश्चैव बभूवुः कुण्ठिताः परम् ॥ १०॥

आवां गर्वयुतौ जातौ ब्रह्माकारौ वृथा प्रभो ।

तत्र त्वया च विघ्नेन कृतं गर्वस्य खण्डनम् ॥ ११॥

साधूनां विघ्नहर्ता त्वं शान्तियोगार्थमञ्जसा ।

असाधूनां विनाशाय ह्यतस्त्वां प्रणमामहे ॥ १२॥

विघ्नयुक्ततया ढुण्ढे आवाभ्यां योगसेवया ।

साक्षात्कारः कृतस्त्वं वै समीचीनमिदं कृतम् ॥ १३॥

हृदि चिन्तामणिं त्वां च पश्यावः सततं प्रभो ।

अतः सुशुभदो विघ्नः सञ्जातो नो गजानन ॥ १४॥

अधुना देहि विघ्नेश भक्तिं ते चरणाम्बुजे ।

दृढां यया च गर्वेण न भवावः समायुतौ ॥ १५॥

इत्युक्त्वा तं प्रणम्यैव ननृततुर्मुदान्वितौ ।

धन्यौ प्रब्रुवतौ धन्यौ दर्शनाद्गणपस्य तौ ॥ १६॥

ब्रह्मोवाच ।

ततस्तौ गणनाथो वै जगाद भक्तिभावतः ।

दृष्ट्वा प्रेमरसाह्लादयुक्तौ राधाजनार्दनौ ॥ १७॥

श्रीपुष्टिपतिरुवाच ।

भो राधे कृष्ण मे वाक्यं शृणुतं जगदीश्वरौ ।

मदीयां भक्तिमत्यन्तं करिष्येथे न संशयः ॥ १८॥

सङ्कटे स्मरणेनैव प्रकटः सम्भवाम्यहम् ।

यं यमिच्छथ आनन्दं सफलं तं भविष्यति ॥ १९॥

भवत्कृतमिदं स्तोत्रं पठनाच्छ्रवणान्नृणाम् ।

सर्वसिद्धिप्रदं पूर्णं भविष्यति सुरैश्वरौ ॥ २०॥

मत्प्रीतिवर्धनं नित्यं वाञ्छितार्थकरं भवेत् ।

अन्ते स्वानन्ददं कृष्ण भविष्यति न संशयः ॥ २१॥

इति मौद्गले पुष्टिपतिस्तोत्रं सम्पूर्णम् ।

**********************************

॥ मङ्गलाचरणम् ॥

श्री गणेशाय नमः ॥

श्रीगुरुभ्यो नमः ॥

स जयति सिन्धुरवदनो देवो यत्पादपङ्कजस्मरणम् ।

वासरमणिरिव तमसां राशिं नाशयति विऽघ्नाअनाम् ॥ १॥

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।

लंबोदरश्च विकटो विघ्ननाशो गणाधिपः ॥ २॥

धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।

द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥ ३॥

विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा ।

सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥ ४॥

शुक्लांबरधरं देवं शशिवर्णं चतुर्भुजम् ।

प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥ ५॥

व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् ।

पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥ ६॥

व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे ।

नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः ॥ ७॥

अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ।

अभाललोचनः शंभुर्भगवान् बादरायणः ॥ ८॥

इति मङ्गलाचरणं सम्पूर्णम् ॥

********************************

॥ मयूरेश्वरस्तोत्रम् ॥

श्री गणेशाय नमः ।

सर्वे उचुः ।

परब्रह्मरूपं चिदानन्दरूपं परेशं सुरेशं गुणाब्धिं गुणेशम् ।

गुणातीतमीशं मयूरेशवंद्यं गणेशं नताः स्मो नताः स्मो नताः स्मः ॥ १॥

जगद्वन्द्यमेकं पराकारमेकं गुणानां परं कारणं निर्विकल्पम् ।

जगत्पालकं हारकं तारकं तं मयूरेशवंद्यं नताः स्मो नताः स्मः ॥ २॥

महादेवसूनुं महादैत्यनाशं महापूरुषं सर्वदा विघ्ननाशम् ।

सदा भक्तपोषं परं ज्ञानकोशं मयूरेशवंद्यं नताः स्मो नताः स्मः ॥ ३॥

अनादिं गुणादिं सुरादिं शिवाया महातोषदं सर्वदा सर्ववंद्यम् ।

सुरार्यंतकं भुक्तिमुक्तिप्रदं तं मयूरेशवंद्यं नताः स्मो नताः स्मः ॥ ४॥

परं मायिनं मायिनामप्यगम्यं मुनिध्येयमाकाशकल्पं जनेशम् ।

असंख्यावतारं निजाज्ञाननाशं मयूरेशवंद्यं नताः स्मो नताः स्मः ॥ ५॥

अनेकक्रियाकारकं श्रुत्यगम्यं त्रयीबोधितानेककर्मादिबीजम् ।

क्रियासिद्धिहेतुं सुरेन्द्रादिसेव्यं मयूरेशवंद्यं नताः स्मो नताः स्मः ॥ ६॥

महाकालरूपं निमेषादिरूपं कलाकल्परूपं सदागम्यरूपम् ।

जनज्ञानहेतुं नृणां सिद्धिदं तं मयूरेशवंद्यं नताः स्मो नताः स्मः ॥ ७॥

महेशादिदेवैः सदा ध्येयपादं सदा रक्षकं तत्पदानां हतारिम् ।

मुदा कामरूपं कृपावारिधिं तं मयूरेशवंद्यं नताः स्मो नताः स्मः ॥ ८॥

सदा भक्तिं नाथे प्रणयपरमानंदसुखदो

यतस्त्वं लोकानां परमकरुणामाशु तनुषे ।

षडूर्मीनां वेगं सुरवर विनाशं नय विभो

ततो भक्तिः श्लाघ्या तव भजनतोऽनन्यसुखदात् ॥ ९॥

किमस्माभिः स्तोत्रं सकलसुरतापालक विभो

विधेयं विश्वात्मन्नगणितगुणानामधिपते ।

न संख्याता भूमिस्तव गुणगणानां त्रिभुवने

न रूपाणां देव प्रकटय कृपां नोऽसुरहते ॥ १०॥

मयूरेशं नमस्कृत्य ततो देवोऽब्रवीच्च तान् ।

य इदं पठते स्तोत्रं स कामान् लभतेऽखिलान् ॥ ११॥

सर्वत्र जयमाप्नोति मानमायुः श्रियं पराम् ।

पुत्रवान् धनसम्पन्नो वश्यतामखिलं नयेत् ॥ १२॥

सहस्रावर्तनात्कारागृहस्थं मोचयेज्जनम् ।

नियुतावर्तनान्मर्त्यो साध्यं यत्साधयेत्क्षणात् ॥ १३॥

इति श्रीगणेशपुराणे उत्तरखण्डे बालचरित्रे मयूरेश्वरस्तोत्रं सम्पूर्णम् ।

******************************

॥ श्रीमहागणपति नवार्ण वेदपादस्तवः ॥

श्रीकण्ठतनय श्रीश श्रीकर श्रीदलार्चित ।

श्रीविनायक सर्वेश श्रियं वासय मे कुले ॥ १॥

गजानन गणाधीश द्विजराज-विभूषित ।

भजे त्वां सच्चिदानन्द ब्रह्मणां ब्रह्मणास्पते ॥ २॥

णषाष्ठ-वाच्य-नाशाय रोगाट-विकुठारिणे ।

घृणा-पालित-लोकाय वनानां पतये नमः ॥ ३॥

धियं प्रयच्छते तुभ्यमीप्सितार्थ-प्रदायिने ।

दीप्त-भूषण-भूषाय दिशां च पतये नमः ॥ ४॥

पञ्च-ब्रह्म-स्वरूपाय पञ्च-पातक-हारिणे ।

पञ्च-तत्त्वात्मने तुभ्यं पशूनां पतये नमः ॥ ५॥

तटित्कोटि-प्रतीकाश-तनवे विश्व-साक्षिणे ।

तपस्वि-ध्यायिने तुभ्यं सेनानिभ्यश्च वो नमः ॥ ६॥

ये भजन्त्यक्षरं त्वां ते प्राप्नुवन्त्यक्षरात्मताम्।

नैकरूपाय महते मुष्णतां पतये नमः ॥ ७॥

नगजा-वर-पुत्राय सुर-राजार्चिताय च ।

सुगुणाय नमस्तुभ्यं सुमृडीकाय मीढुषे ॥ ८॥

महा-पातक-सङ्घात-तम-हारण-भयापह ।

त्वदीय-कृपया देव सर्वानव यजामहे ॥ ९॥

नवार्ण-रत्न-निगम-पाद-संपुटितां स्तुतिम् ।

भक्त्या पठन्ति ये तेषां तुष्टो भव गणाधिप ॥ १०॥

॥ इति श्रीमहागणपति-नवार्ण-वेदपाद-स्तवः समप्तः॥

******************************

॥ श्रीमहागणपतिमूलमन्त्रपदमालास्तोत्रम् ॥

॥ मूलमन्त्रम्॥

॥ ॐ ह्रीं श्रीं क्लीं ग्लौं गं गणपतये वरवरद

सर्वजनं मे वशमानय स्वाहा ॥

॥ अथ स्तोत्रम्॥

ॐइत्येतदजस्य कण्ठविवरं भित्वा बहिर्निर्गतं

ह्योमित्येव समस्तकर्म ऋषिभिः प्रारभ्यते मानुषैः ।

ओमित्येव सदा जपन्ति यतयः स्वातमैकनिष्ठाः परं

ह्योङ्काराकृतिवक्त्रमिन्दुनिटिलं विघ्नेश्वरं भवाये ॥ १॥

श्रीम्बीजं श्रमदुःखजन्ममरणव्याध्याधिभीनाशकं

मृत्युक्रोधनशान्तिबिन्दुविलसद्वर्णाकृतिश्रीप्रदम् ।

स्वान्तःस्वात्मशरस्य लक्ष्यमजरस्वात्मावबोधप्रदं

श्रीश्रीनायकसेविते भवदनप्रेमास्पदं भावये ॥ २॥

ह्रीम्बीजं हृदयत्रिकोणविलसन्मध्यासनस्थं सदा

चाकाशानलवामलोचननिशानाथार्धवर्णात्मकम् ।

मायाकार्यजगत्प्रकाशकमुमारूपं स्वशक्तिप्रदं

मायातीतपदप्रदं हृदि भजे लोकेश्वराराधितम् ॥ ३॥

क्लीम्बीजं कलिधातुवत्कलयतां सर्वेष्टदं देहिनां

धातृक्ष्मायुतशान्तिबिन्दुविलसद्वर्णात्मकं कामदम् ।

श्रीकृष्णप्रियमिन्दिरासुतमनःप्रीत्येकहेतुं परं

हृत्पद्मे कलये सदा कलिहरं कालारिपुत्रप्रियम् ॥ ४॥

ग्लौम्बीजं गुणरूपनिर्गुणपरब्रह्मादिशक्तेर्महा-

हङ्काराकृतिदण्डिनीप्रियमजश्रीनाथरुद्रेष्टदम् ।

सर्वाकर्षिणिदेवराजभुवनार्णेन्द्वात्मकं श्रीकरं

चित्ते विघ्ननिवारणाय गिरिजजातप्रियं भावये ॥ ५॥

गङ्गासुतं गन्धमुखोपचारप्रियं खगारोहणभागिनेयम् ।

गङ्गासुताद्यं वरगन्धतत्त्वमूलाम्बुजस्थं हृदि भावयेऽहम् ॥ ६॥

गणपतये वरगुणनिधये सुरगणपतये नतजनततये ।

मणिगणभूषितचरणयुगाश्रितमलहरणे चण ते नमः ॥ ७॥

वराभये मोदकमेकदन्तं कराम्बुजातैः सततं धरन्तम् ।

वराङ्गचन्द्रं परभक्तिसान्द्रैर्जनैर्भजन्तं कलये सदाऽन्तः ॥ ८॥

वरद नतजनानां सन्ततं वक्रतुण्ड

स्वरमयनिजगात्र स्वात्मबोधैकहेतो ।

करलसदमृताम्भोपूर्णपत्राद्य मह्यं

गरगलसुत शीघ्रं देहि मद्बोधमीड्यम् ॥ ९॥

सर्वजनं परिपालय शर्वज

पर्वसुधाकरगर्वहर ।

पर्वतनाथसुतासुत पालय

खर्वं मा कुरु दीनमिमम् ॥ १० ॥

मेदोऽस्थिमांसरुधिरान्त्रमये शरीरे

मेदिन्यबग्निमरुदम्बरलास्यमाने ।

मे दारुणं मदमुखाघमुमाज हृत्वा

मेधाह्वयासनवरे वस दन्तिवक्त्र ॥ ११॥

वशं कुरु त्वं शिवजात मां ते वशीकृताशेषसमस्तलोक ।

वसार्णसंशोभितमूलपद्मलसच्छ्रियाऽलिङ्तवारणास्य ॥ १२॥

आनयाशुपदवारिजान्तिकं मां नयादिगुणवर्जितं तव ।

हानिहीनपदजामृतस्य ते पानयोग्यमिभवक्त्र मां कुरु ॥ १३॥

स्वाहास्वरूपेण विराजसे त्वं सुधाशनानां प्रियकर्मणीड्यम् ।

स्वधास्वरूपेण तु पित्र्यकर्मण्युमासुतेज्यामयविश्वमूर्ते ॥ १४॥

अष्टाविंशतिवर्णपत्रलसितं हारं गणेशप्रियं

कष्टाऽनिष्टहरं चतुर्दशपदैः पुष्पैर्मनोहारकम् ।

तुष्ट्यादिप्रदसद्गुरुत्तमपदाम्भोजे चिदानन्ददं

शिष्टेष्टोऽहमनन्तसूत्रहृदयाऽऽबद्धं सुभक्त्याऽर्पये ॥ १५॥

॥ इति श्रीअनन्तानन्दकृतं श्रीगुरुचिदानन्दनाथसमर्पितं

श्रीमहागणपतिमूलमन्त्रमालास्तोत्रम् ॥

**************************************

॥ श्रीमहागणपतिवज्रपञ्जरकवचम् ॥

॥ पूर्वपीठिका ॥

महादेवि गणेशस्य वरदस्य महात्मनः ।

कवचं ते प्रवक्ष्यामि वज्रपञ्जरकाभिधम् ॥

॥ विनियोगः ॥

ॐ अस्य श्रीमहागणपतिवज्रपञ्जरकवचस्य श्रीभैरव ऋषिः,

गायत्रं छन्दः, श्रीमहागणपति देवता, गं बीजं, ह्रीं शक्तिः,

कुरु कुरु कीलकं, वज्रविद्यादिसिद्ध्यर्थे

महागणपतिवज्रपञ्जरकवचपाठे विनियोगः ॥

॥ ऋष्यादिन्यासः ॥

श्रीभैरवर्षये नमः शिरसि । गायत्रछन्दसे नमो मुखे ।

श्रीमहागणपतिदेवतायै नमो हृदि । गं बीजाय नमो गुह्ये ।

ह्रींशक्तये नमो नाभौ । कुरु कुरु कीलकाय नमः पादयोः ।

वज्रविद्यादिसिद्ध्यर्थे महागणपतिवज्रपञ्जरकवचपाठे

विनियोगाय नमः सर्वाङ्गे ॥

॥ करन्यासः ॥

गां अङ्गुष्ठाभ्यां नमः । गीं तर्जनीभ्यां नमः ।

गूं मध्यमाभ्यां नमः । गैं अनामिकाभ्यां नमः ।

गौं कनिष्ठिकाभ्यां नमः । गः करतलकरपृष्ठाभ्यां नमः ॥

॥ अङ्गन्यासः ॥

गां हृदयाय नमः । गीं शिरसे स्वाहा । गूं शिखायै वषट् ।

गैं कवचाय हुम् । गौं नेत्रत्रयाय वौषट् । गः अस्त्राय फट् ॥

॥ ध्यानम् ॥

विघ्नेशं विश्ववन्द्यं सुविपुलयशसं लोकरक्षाप्रदक्षं

साक्षात्सर्वापदासु प्रशमनसुमतिं पार्वतीप्राणसूनुम् ।

प्रायः सर्वासुरेन्द्रैः ससुरमुनिगणैः साधकैः पूज्यमानं

कारुण्येनान्तरायामितभयशमनं विघ्नराजं नमामि ॥

॥ कवचपाठः ॥

ॐ श्रीं ह्रीं गं शिरः पातु महागणपतिः प्रभुः ।

विनायको ललाटं मे विघ्नराजो भ्रुवौ मम ॥ १॥

पातु नेत्रे गणाध्यक्षो नासिकां मे गजाननः ।

श्रुती मेऽवतु हेरम्बो गण्डौ मे मोदकाशनः ॥ २॥

द्वैमातुरो मुखं पातु चाधरौ पात्वरिन्दमः ।

दन्तान्ममैकदन्तोऽव्याद्वक्रतुण्डोऽवताद्रसाम् ॥ ३॥

गाङ्गेयो मे गलं पातु स्कन्धौ सिंहासनोऽवतु ।

विघ्नान्तको भुजौ पातु हस्तौ मूषकवाहनः ॥ ४॥

ऊरू ममावतान्नित्यं देवस्त्रिपुरघातनः ।

हृदयं मे कुमारोऽव्याज्जयन्तः पार्श्वयुग्मकम् ॥ ५॥

प्रद्युम्नो मेऽवतात्पृष्ठं नाभिं शङ्करनन्दनः ।

कटिं नन्दिगणः पातु शिश्नं विश्वेश्वरोऽवतु ॥ ६॥

मेढ्रे मेऽवतु सौभाग्यो भृङ्गिरीटी च गुह्यकम् ।

विराटकोऽवतादूरू जानू मे पुष्पदन्तकः ॥ ७॥

जङ्घे मम विकर्तोऽव्याद्गुल्फावन्त्यगणोऽवतु ।

पादौ चित्तगणः पातु पादाधो लोहितोऽवतु ॥ ८॥

पादपृष्ठं सुन्दरोऽव्यान्नूपुराढ्यो वपुर्मम ।

विचारो जठरं पातु भूतानि चोग्ररूपकः ॥ ९॥

शिरसः पादपर्यन्तं वपुः सप्तगणोऽवतु ।

पादादिमूर्धपर्यन्तं वपुः पातु विनर्तकः ॥ १०॥

विस्मारितं तु यत्स्थानं गणेशस्तत्सदाऽवतु ।

पूर्वे मां ह्रीं करालोऽव्यादाग्नेये विकरालकः ॥ ११॥

दक्षिणे पातु संहारो नैरृते रुरुभैरवः ।

पश्चिमे मां महाकालो वायौ कालाग्निभैरवः ॥ १२॥

उत्तरे मां सितास्योऽव्यादैशान्यामसितात्मकः ।

प्रभाते शतपत्रोऽव्यात्सहस्रारस्तु मध्यमे ॥ १३॥

दन्तमाला दिनान्तेऽव्यान्निशि पात्रं सदाऽवतु ।

कलशो मां निशीथेऽव्यान्निशान्ते परशुस्तथा ।

सर्वत्र सर्वदा पातु शङ्खयुग्मं च मद्वपुः ॥ १४॥

ॐ ॐ राजकुले हौं हौं रणभये ह्रीं ह्रीं कुद्यूतेऽवतात्

श्रीं श्रीं शत्रुगृहे शौं शौं जलभये क्लीं क्लीं वनान्तेऽवतु ।

ग्लौं ग्लूं ग्लैं ग्लं गुं सत्त्वभीतिषु महाव्याध्यार्तिषु ग्लौं गं गौं

नित्यं यक्षपिशाचभूतफणिषु ग्लौं गं गणेशोऽवतु ॥ १५॥

॥ फलश्रुतिः ॥

इतीदं कवचं गुह्यं सर्वतन्त्रेषु गोपितम् ।

वज्रपञ्जरनामानं गणेशस्य महात्मनः ॥ १॥

अङ्गभूतं मनुमयं सर्वाचारैकसाधनम् ।

विनानेन न सिद्धिः स्यात्पूजनस्य जपस्य च ॥ २॥

तस्मात्तु कवचं पुण्यं पठेद्वा धारयेत्सदा ।

तस्य सिद्धिर्महादेवि करस्था पारलौकिकी ॥ ३॥

यं यं कामयते कामं तं तं प्राप्नोति पाठतः ।

अर्धरात्रे पठेन्नित्यं सर्वाभीष्टफलं लभेत् ॥ ४॥

इति गुह्यं सुकवचं महागणपतेः प्रियम् ।

सर्वसिद्धिमयं दिव्यं गोपयेत्परमेश्वरि ॥

॥ श्रीरुद्रयामले तन्त्रे श्रीमहागणपतिवज्रपञ्जरकवचम् सम्पूर्णम् ॥

****************************************

॥ महागणपतिसहस्रनामस्तोत्रम् १ ॥

। मुनिरुवाच ।

कथं नाम्नां सहस्रं तं गणेश उपदिष्टवान् ।

शिवदं तन्ममाचक्ष्व लोकानुग्रहतत्पर ॥ १॥

। ब्रह्मोवाच ।

देवः पूर्वं पुरारातिः पुरत्रयजयोद्यमे ।

अनर्चनाद्गणेशस्य जातो विघ्नाकुलः किल ॥ २॥

मनसा स विनिर्धार्य ददृशे विघ्नकारणम् ।

महागणपतिं भक्त्या समभ्यर्च्य यथाविधि ॥ ३॥

विघ्नप्रशमनोपायमपृच्छदपरिश्रमम् ।

सन्तुष्टः पूजया शम्भोर्महागणपतिः स्वयम् ॥ ४॥

सर्वविघ्नप्रशमनं सर्वकामफलप्रदम् ।

ततस्तस्मै स्वयं नाम्नां सहस्रमिदमब्रवीत् ॥ ५॥

अस्य श्रीमहागणपतिसहस्रनामस्तोत्रमालामन्त्रस्य ।

गणेश ऋषिः ।

महागणपतिर्देवता ।

नानाविधानिच्छन्दांसि ।

हुमिति बीजम् ।

तुङ्गमिति शक्तिः ।

स्वाहाशक्तिरिति कीलकम् ।

। अथ करन्यासः ।

गणेश्वरो गणक्रीड इत्यङ्गुष्ठाभ्यां नमः ।

कुमारगुरुरीशान इति तर्जनीभ्यां नमः ॥ १॥

ब्रह्माण्डकुम्भश्चिद्व्योमेति मध्यमाभ्यां नमः ।

रक्तो रक्ताम्बरधर इत्यनामिकाभ्यां नमः ॥ २॥

सर्वसद्गुरुसंसेव्य इति कनिष्ठिकाभ्यां नमः ।

लुप्तविघ्नः स्वभक्तानामिति करतलकरपृष्ठाभ्यां नमः ॥

३॥

। अथ हृदयादिन्यासः ।

छन्दश्छन्दोद्भव इति हृदयाय नमः ।

निष्कलो निर्मल इति शिरसे स्वाहा ।

सृष्टिस्थितिलयक्रीड इति शिखायै वषट् ।

ज्ञानं विज्ञानमानन्द इति कवचाय हुम् ।

अष्टाङ्गयोगफलभृदिति नेत्रत्रयाय वौषट् ।

अनन्तशक्तिसहित इत्यस्त्राय फट् ।

भूर्भुवः स्वरोम् इति दिग्बन्धः ।

। अथ ध्यानम् ।

गजवदनमचिन्त्यं तीक्ष्णदंष्ट्रं त्रिनेत्रं

बृहदुदरमशेषं भूतिराजं पुराणम् ।

अमरवरसुपूज्यं रक्तवर्णं सुरेशं पशुपतिसुतमीशं

विघ्नराजं नमामि सकलविघ्नविनाशनद्वारा ॥ १॥

श्रीमहागणपतिप्रसादसिद्ध्यर्थे जपे विनियोगः ।

। श्रीगणपतिरुवाच ।

ॐ गणेश्वरो गणक्रीडो गणनाथो गणाधिपः ।

एकदन्तो वक्रतुण्डो गजवक्त्रो महोदरः ॥ १॥

लम्बोदरो धूम्रवर्णो विकटो विघ्ननाशनः ।

सुमुखो दुर्मुखो बुद्धो विघ्नराजो गजाननः ॥ २॥

भीमः प्रमोद आमोदः सुरानन्दो मदोत्कटः ।

हेरम्बः शम्बरः शम्भुर्लम्बकर्णो महाबलः ॥ ३॥

नन्दनो लम्पटो भीमो मेघनादो गणञ्जयः ।

विनायको विरूपाक्षो वीरः शूरवरप्रदः ॥ ४॥

महागणपतिर्बुद्धिप्रियः क्षिप्रप्रसादनः ।

रुद्रप्रियो गणाध्यक्ष उमापुत्रोऽघनाशनः ॥ ५॥

कुमारगुरुरीशानपुत्रो मूषकवाहनः ।

सिद्धिप्रियः सिद्धिपतिः सिद्धः सिद्धिविनायकः ॥ ६॥

अविघ्नस्तुम्बुरुः सिंहवाहनो मोहिनीप्रियः ।

कटङ्कटो राजपुत्रः शाकलः संमितोऽमितः ॥ ७॥

कूष्माण्डसामसम्भूतिर्दुर्जयो धूर्जयो जयः ।

भूपतिर्भुवनपतिर्भूतानां पतिरव्ययः ॥ ८॥

विश्वकर्ता विश्वमुखो विश्वरूपो निधिर्गुणः ।

कविः कवीनामृषभो ब्रह्मण्यो ब्रह्मवित्प्रियः ॥ ९॥

ज्येष्ठराजो निधिपतिर्निधिप्रियपतिप्रियः ।

हिरण्मयपुरान्तःस्थः सूर्यमण्डलमध्यगः ॥ १०॥

कराहतिध्वस्तसिन्धुसलिलः पूषदन्तभित् ।

उमाङ्ककेलिकुतुकी मुक्तिदः कुलपावनः ॥ ११॥

किरीटी कुण्डली हारी वनमाली मनोमयः ।

वैमुख्यहतदैत्यश्रीः पादाहतिजितक्षितिः ॥ १२॥

सद्योजातः स्वर्णमुञ्जमेखली दुर्निमित्तहृत् ।

दुःस्वप्नहृत्प्रसहनो गुणी नादप्रतिष्ठितः ॥ १३॥

सुरूपः सर्वनेत्राधिवासो वीरासनाश्रयः ।

पीताम्बरः खण्डरदः खण्डवैशाखसंस्थितः ॥ १४॥

चित्राङ्गः श्यामदशनो भालचन्द्रो हविर्भुजः ।

योगाधिपस्तारकस्थः पुरुषो गजकर्णकः ॥ १५॥

गणाधिराजो विजयः स्थिरो गजपतिर्ध्वजी ।

देवदेवः स्मरः प्राणदीपको वायुकीलकः ॥ १६॥

विपश्चिद्वरदो नादो नादभिन्नमहाचलः ।

वराहरदनो मृत्युञ्जयो व्याघ्राजिनाम्बरः ॥ १७॥

इच्छाशक्तिभवो देवत्राता दैत्यविमर्दनः ।

शम्भुवक्त्रोद्भवः शम्भुकोपहा शम्भुहास्यभूः ॥ १८॥

शम्भुतेजाः शिवाशोकहारी गौरीसुखावहः ।

उमाङ्गमलजो गौरीतेजोभूः स्वर्धुनीभवः ॥ १९॥

यज्ञकायो महानादो गिरिवर्ष्मा शुभाननः ।

सर्वात्मा सर्वदेवात्मा ब्रह्ममूर्धा ककुप्श्रुतिः ॥ २०॥

ब्रह्माण्डकुम्भश्चिद्व्योमभालःसत्यशिरोरुहः ।

जगज्जन्मलयोन्मेषनिमेषोऽग्न्यर्कसोमदृक् ॥ २१॥

गिरीन्द्रैकरदो धर्माधर्मोष्ठः सामबृंहितः ।

ग्रहर्क्षदशनो वाणीजिह्वो वासवनासिकः ॥ २२॥

भ्रूमध्यसंस्थितकरो ब्रह्मविद्यामदोदकः ।

कुलाचलांसः सोमार्कघण्टो रुद्रशिरोधरः ॥ २३॥

नदीनदभुजः सर्पाङ्गुलीकस्तारकानखः ।

व्योमनाभिः श्रीहृदयो मेरुपृष्ठोऽर्णवोदरः ॥ २४॥

कुक्षिस्थयक्षगन्धर्वरक्षःकिन्नरमानुषः ।

पृथ्वीकटिः सृष्टिलिङ्गः शैलोरुर्दस्रजानुकः ॥ २५॥

पातालजङ्घो मुनिपात्कालाङ्गुष्ठस्त्रयीतनुः ।

ज्योतिर्मण्डललाङ्गूलो हृदयालाननिश्चलः ॥ २६॥

हृत्पद्मकर्णिकाशाली वियत्केलिसरोवरः ।

सद्भक्तध्याननिगडः पूजावारिनिवारितः ॥ २७॥

प्रतापी काश्यपो मन्ता गणको विष्टपी बली ।

यशस्वी धार्मिको जेता प्रथमः प्रमथेश्वरः ॥ २८॥

चिन्तामणिर्द्वीपपतिः कल्पद्रुमवनालयः ।

रत्नमण्डपमध्यस्थो रत्नसिंहासनाश्रयः ॥ २९॥

तीव्राशिरोद्धृतपदो ज्वालिनीमौलिलालितः ।

नन्दानन्दितपीठश्रीर्भोगदो भूषितासनः ॥ ३०॥

सकामदायिनीपीठः स्फुरदुग्रासनाश्रयः ।

तेजोवतीशिरोरत्नं सत्यानित्यावतंसितः ॥ ३१॥

सविघ्ननाशिनीपीठः सर्वशक्त्यम्बुजालयः ।

लिपिपद्मासनाधारो वह्निधामत्रयालयः ॥ ३२॥

उन्नतप्रपदो गूढगुल्फः संवृतपार्ष्णिकः ।

पीनजङ्घः श्लिष्टजानुः स्थूलोरुः प्रोन्नमत्कटिः ॥ ३३॥

निम्ननाभिः स्थूलकुक्षिः पीनवक्षा बृहद्भुजः ।

पीनस्कन्धः कम्बुकण्ठो लम्बोष्ठो लम्बनासिकः ॥ ३४॥

भग्नवामरदस्तुङ्गसव्यदन्तो महाहनुः ।

ह्रस्वनेत्रत्रयः शूर्पकर्णो निबिडमस्तकः ॥ ३५॥

स्तबकाकारकुम्भाग्रो रत्नमौलिर्निरङ्कुशः ।

सर्पहारकटीसूत्रः सर्पयज्ञोपवीतवान् ॥ ३६॥

सर्पकोटीरकटकः सर्पग्रैवेयकाङ्गदः ।

सर्पकक्षोदराबन्धः सर्पराजोत्तरच्छदः ॥ ३७॥

रक्तो रक्ताम्बरधरो रक्तमालाविभूषणः ।

रक्तेक्षणो रक्तकरो रक्तताल्वोष्ठपल्लवः ॥ ३८॥

श्वेतः श्वेताम्बरधरः श्वेतमालाविभूषणः ।

श्वेतातपत्ररुचिरः श्वेतचामरवीजितः ॥ ३९॥

सर्वावयवसम्पूर्णः सर्वलक्षणलक्षितः ।

सर्वाभरणशोभाढ्यः सर्वशोभासमन्वितः ॥ ४०॥

सर्वमङ्गलमाङ्गल्यः सर्वकारणकारणम् ।

सर्वदेववरः शार्ङ्गी बीजपूरी गदाधरः ॥ ४१॥

शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः ।

किरीटी कुण्डली हारी वनमाली शुभाङ्गदः ॥ ४२॥

इक्षुचापधरः शूली चक्रपाणिः सरोजभृत् ।

पाशी धृतोत्पलः शालिमञ्जरीभृत्स्वदन्तभृत् ॥ ४३॥

कल्पवल्लीधरो विश्वाभयदैककरो वशी ।

अक्षमालाधरो ज्ञानमुद्रावान् मुद्गरायुधः ॥ ४४॥

पूर्णपात्री कम्बुधरो विधृताङ्कुशमूलकः ।

करस्थाम्रफलश्चूतकलिकाभृत्कुठारवान् ॥ ४५॥

पुष्करस्थस्वर्णघटीपूर्णरत्नाभिवर्षकः ।

भारतीसुन्दरीनाथो विनायकरतिप्रियः ॥ ४६॥

महालक्ष्मीप्रियतमः सिद्धलक्ष्मीमनोरमः ।

रमारमेशपूर्वाङ्गो दक्षिणोमामहेश्वरः ॥ ४७॥

महीवराहवामाङ्गो रतिकन्दर्पपश्चिमः ।

आमोदमोदजननः सम्प्रमोदप्रमोदनः ॥ ४८॥

संवर्धितमहावृद्धिरृद्धिसिद्धिप्रवर्धनः ।

दन्तसौमुख्यसुमुखः कान्तिकन्दलिताश्रयः ॥ ४९॥

मदनावत्याश्रिताङ्घ्रिः कृतवैमुख्यदुर्मुखः ।

विघ्नसंपल्लवः पद्मः सर्वोन्नतमदद्रवः ॥ ५०॥

विघ्नकृन्निम्नचरणो द्राविणीशक्तिसत्कृतः ।

तीव्राप्रसन्ननयनो ज्वालिनीपालितैकदृक् ॥ ५१॥

मोहिनीमोहनो भोगदायिनीकान्तिमण्डनः ।

कामिनीकान्तवक्त्रश्रीरधिष्ठितवसुन्धरः ॥ ५२॥

वसुधारामदोन्नादो महाशङ्खनिधिप्रियः ।

नमद्वसुमतीमाली महापद्मनिधिः प्रभुः ॥ ५३॥

सर्वसद्गुरुसंसेव्यः शोचिष्केशहृदाश्रयः ।

ईशानमूर्धा देवेन्द्रशिखः पवननन्दनः ॥ ५४॥

प्रत्युग्रनयनो दिव्यो दिव्यास्त्रशतपर्वधृक् ।

ऐरावतादिसर्वाशावारणो वारणप्रियः ॥ ५५॥

वज्राद्यस्त्रपरीवारो गणचण्डसमाश्रयः ।

जयाजयपरिकरो विजयाविजयावहः ॥ ५६॥

अजयार्चितपादाब्जो नित्यानन्दवनस्थितः ।

विलासिनीकृतोल्लासः शौण्डी सौन्दर्यमण्डितः ॥ ५७॥

अनन्तानन्तसुखदः सुमङ्गलसुमङ्गलः ।

ज्ञानाश्रयः क्रियाधार इच्छाशक्तिनिषेवितः ॥ ५८॥

सुभगासंश्रितपदो ललिताललिताश्रयः ।

कामिनीपालनः कामकामिनीकेलिलालितः ॥ ५९॥

सरस्वत्याश्रयो गौरीनन्दनः श्रीनिकेतनः ।

गुरुगुप्तपदो वाचासिद्धो वागीश्वरीपतिः ॥ ६०॥

नलिनीकामुको वामारामो ज्येष्ठामनोरमः ।

रौद्रीमुद्रितपादाब्जो हुम्बीजस्तुङ्गशक्तिकः ॥ ६१॥

विश्वादिजननत्राणः स्वाहाशक्तिः सकीलकः ।

अमृताब्धिकृतावासो मदघूर्णितलोचनः ॥ ६२॥

उच्छिष्टोच्छिष्टगणको गणेशो गणनायकः ।

सार्वकालिकसंसिद्धिर्नित्यसेव्यो दिगम्बरः ॥ ६३॥

अनपायोऽनन्तदृष्टिरप्रमेयोऽजरामरः ।

अनाविलोऽप्रतिहतिरच्युतोऽमृतमक्षरः ॥ ६४॥

अप्रतर्क्योऽक्षयोऽजय्योऽनाधारोऽनामयोऽमलः ।

अमेयसिद्धिरद्वैतमघोरोऽग्निसमाननः ॥ ६५॥

अनाकारोऽब्धिभूम्यग्निबलघ्नोऽव्यक्तलक्षणः ।

आधारपीठमाधार आधाराधेयवर्जितः ॥ ६६॥

आखुकेतन आशापूरक आखुमहारथः ।

इक्षुसागरमध्यस्थ इक्षुभक्षणलालसः ॥ ६७॥

इक्षुचापातिरेकश्रीरिक्षुचापनिषेवितः ।

इन्द्रगोपसमानश्रीरिन्द्रनीलसमद्युतिः ॥ ६८॥

इन्दीवरदलश्याम इन्दुमण्डलमण्डितः ।

इध्मप्रिय इडाभाग इडावानिन्दिराप्रियः ॥ ६९॥

इक्ष्वाकुविघ्नविध्वंसी इतिकर्तव्यतेप्सितः ।

ईशानमौलिरीशान ईशानप्रिय ईतिहा ॥ ७०॥

ईषणात्रयकल्पान्त ईहामात्रविवर्जितः ।

उपेन्द्र उडुभृन्मौलिरुडुनाथकरप्रियः ॥ ७१॥

उन्नतानन उत्तुङ्ग उदारस्त्रिदशाग्रणीः ।

ऊर्जस्वानूष्मलमद ऊहापोहदुरासदः ॥ ७२॥

ऋग्यजुःसामनयन ऋद्धिसिद्धिसमर्पकः ।

ऋजुचित्तैकसुलभो ऋणत्रयविमोचनः ॥ ७३॥

लुप्तविघ्नः स्वभक्तानां लुप्तशक्तिः सुरद्विषाम् ।

लुप्तश्रीर्विमुखार्चानां लूताविस्फोटनाशनः ॥ ७४॥

एकारपीठमध्यस्थ एकपादकृतासनः ।

एजिताखिलदैत्यश्रीरेधिताखिलसंश्रयः ॥ ७५॥

ऐश्वर्यनिधिरैश्वर्यमैहिकामुष्मिकप्रदः ।

ऐरंमदसमोन्मेष ऐरावतसमाननः ॥ ७६॥

ओंकारवाच्य ओंकार ओजस्वानोषधीपतिः ।

औदार्यनिधिरौद्धत्यधैर्य औन्नत्यनिःसमः ॥ ७७॥

अङ्कुशः सुरनागानामङ्कुशाकारसंस्थितः ।

अः समस्तविसर्गान्तपदेषु परिकीर्तितः ॥ ७८॥

कमण्डलुधरः कल्पः कपर्दी कलभाननः ।

कर्मसाक्षी कर्मकर्ता कर्माकर्मफलप्रदः ॥ ७९॥

कदम्बगोलकाकारः कूष्माण्डगणनायकः ।

कारुण्यदेहः कपिलः कथकः कटिसूत्रभृत् ॥ ८०॥

खर्वः खड्गप्रियः खड्गः खान्तान्तःस्थः खनिर्मलः ।

खल्वाटशृङ्गनिलयः खट्वाङ्गी खदुरासदः ॥ ८१॥

गुणाढ्यो गहनो गद्यो गद्यपद्यसुधार्णवः ।

गद्यगानप्रियो गर्जो गीतगीर्वाणपूर्वजः ॥ ८२॥

गुह्याचाररतो गुह्यो गुह्यागमनिरूपितः ।

गुहाशयो गुडाब्धिस्थो गुरुगम्यो गुरुर्गुरुः ॥ ८३॥

घण्टाघर्घरिकामाली घटकुम्भो घटोदरः ।

ङकारवाच्यो ङाकारो ङकाराकारशुण्डभृत् ॥ ८४॥

चण्डश्चण्डेश्वरश्चण्डी चण्डेशश्चण्डविक्रमः ।

चराचरपिता चिन्तामणिश्चर्वणलालसः ॥ ८५॥

छन्दश्छन्दोद्भवश्छन्दो दुर्लक्ष्यश्छन्दविग्रहः ।

जगद्योनिर्जगत्साक्षी जगदीशो जगन्मयः ॥ ८६॥

जप्यो जपपरो जाप्यो जिह्वासिंहासनप्रभुः ।

स्रवद्गण्डोल्लसद्धानझङ्कारिभ्रमराकुलः ॥ ८७॥

टङ्कारस्फारसंरावष्टङ्कारमणिनूपुरः ।

ठद्वयीपल्लवान्तस्थसर्वमन्त्रेषु सिद्धिदः ॥ ८८॥

डिण्डिमुण्डो डाकिनीशो डामरो डिण्डिमप्रियः ।

ढक्कानिनादमुदितो ढौङ्को ढुण्ढिविनायकः ॥ ८९॥

तत्त्वानां प्रकृतिस्तत्त्वं तत्त्वंपदनिरूपितः ।

तारकान्तरसंस्थानस्तारकस्तारकान्तकः ॥ ९०॥

स्थाणुः स्थाणुप्रियः स्थाता स्थावरं जङ्गमं जगत् ।

दक्षयज्ञप्रमथनो दाता दानं दमो दया ॥ ९१॥

दयावान्दिव्यविभवो दण्डभृद्दण्डनायकः ।

दन्तप्रभिन्नाभ्रमालो दैत्यवारणदारणः ॥ ९२॥

दंष्ट्रालग्नद्वीपघटो देवार्थनृगजाकृतिः ।

धनं धनपतेर्बन्धुर्धनदो धरणीधरः ॥ ९३॥

ध्यानैकप्रकटो ध्येयो ध्यानं ध्यानपरायणः ।

ध्वनिप्रकृतिचीत्कारो ब्रह्माण्डावलिमेखलः ॥ ९४॥

नन्द्यो नन्दिप्रियो नादो नादमध्यप्रतिष्ठितः ।

निष्कलो निर्मलो नित्यो नित्यानित्यो निरामयः ॥ ९५॥

परं व्योम परं धाम परमात्मा परं पदम् ॥ ९६॥

परात्परः पशुपतिः पशुपाशविमोचनः ।

पूर्णानन्दः परानन्दः पुराणपुरुषोत्तमः ॥ ९७॥

पद्मप्रसन्नवदनः प्रणताज्ञाननाशनः ।

प्रमाणप्रत्ययातीतः प्रणतार्तिनिवारणः ॥ ९८॥

फणिहस्तः फणिपतिः फूत्कारः फणितप्रियः ।

बाणार्चिताङ्घ्रियुगलो बालकेलिकुतूहली ।

ब्रह्म ब्रह्मार्चितपदो ब्रह्मचारी बृहस्पतिः ॥ ९९॥

बृहत्तमो ब्रह्मपरो ब्रह्मण्यो ब्रह्मवित्प्रियः ।

बृहन्नादाग्र्यचीत्कारो ब्रह्माण्डावलिमेखलः ॥ १००॥

भ्रूक्षेपदत्तलक्ष्मीको भर्गो भद्रो भयापहः ।

भगवान् भक्तिसुलभो भूतिदो भूतिभूषणः ॥ १०१॥

भव्यो भूतालयो भोगदाता भ्रूमध्यगोचरः ।

मन्त्रो मन्त्रपतिर्मन्त्री मदमत्तो मनो मयः ॥ १०२॥

मेखलाहीश्वरो मन्दगतिर्मन्दनिभेक्षणः ।

महाबलो महावीर्यो महाप्राणो महामनाः ॥ १०३॥

यज्ञो यज्ञपतिर्यज्ञगोप्ता यज्ञफलप्रदः ।

यशस्करो योगगम्यो याज्ञिको याजकप्रियः ॥ १०४॥

रसो रसप्रियो रस्यो रञ्जको रावणार्चितः ।

राज्यरक्षाकरो रत्नगर्भो राज्यसुखप्रदः ॥ १०५॥

लक्षो लक्षपतिर्लक्ष्यो लयस्थो लड्डुकप्रियः ।

लासप्रियो लास्यपरो लाभकृल्लोकविश्रुतः ॥ १०६॥

वरेण्यो वह्निवदनो वन्द्यो वेदान्तगोचरः ।

विकर्ता विश्वतश्चक्षुर्विधाता विश्वतोमुखः ॥ १०७॥

वामदेवो विश्वनेता वज्रिवज्रनिवारणः ।

विवस्वद्बन्धनो विश्वाधारो विश्वेश्वरो विभुः ॥ १०८॥

शब्दब्रह्म शमप्राप्यः शम्भुशक्तिगणेश्वरः ।

शास्ता शिखाग्रनिलयः शरण्यः शम्बरेश्वरः ॥ १०९॥

षड्ऋतुकुसुमस्रग्वी षडाधारः षडक्षरः ।

संसारवैद्यः सर्वज्ञः सर्वभेषजभेषजम् ॥ ११०॥

सृष्टिस्थितिलयक्रीडः सुरकुञ्जरभेदकः ।

सिन्दूरितमहाकुम्भः सदसद्भक्तिदायकः ॥ १११॥

साक्षी समुद्रमथनः स्वयंवेद्यः स्वदक्षिणः ।

स्वतन्त्रः सत्यसंकल्पः सामगानरतः सुखी ॥ ११२॥

हंसो हस्तिपिशाचीशो हवनं हव्यकव्यभुक् ।

हव्यं हुतप्रियो हृष्टो हृल्लेखामन्त्रमध्यगः ॥ ११३॥

क्षेत्राधिपः क्षमाभर्ता क्षमाक्षमपरायणः ।

क्षिप्रक्षेमकरः क्षेमानन्दः क्षोणीसुरद्रुमः ॥ ११४॥

धर्मप्रदोऽर्थदः कामदाता सौभाग्यवर्धनः ।

विद्याप्रदो विभवदो भुक्तिमुक्तिफलप्रदः ॥ ११५॥

आभिरूप्यकरो वीरश्रीप्रदो विजयप्रदः ।

सर्ववश्यकरो गर्भदोषहा पुत्रपौत्रदः ॥ ११६॥

मेधादः कीर्तिदः शोकहारी दौर्भाग्यनाशनः ।

प्रतिवादिमुखस्तम्भो रुष्टचित्तप्रसादनः ॥ ११७॥

पराभिचारशमनो दुःखहा बन्धमोक्षदः ।

लवस्त्रुटिः कला काष्ठा निमेषस्तत्परक्षणः ॥ ११८॥

घटी मुहूर्तः प्रहरो दिवा नक्तमहर्निशम् ।

पक्षो मासर्त्वयनाब्दयुगं कल्पो महालयः ॥ ११९॥

राशिस्तारा तिथिर्योगो वारः करणमंशकम् ।

लग्नं होरा कालचक्रं मेरुः सप्तर्षयो ध्रुवः ॥ १२०॥

राहुर्मन्दः कविर्जीवो बुधो भौमः शशी रविः ।

कालः सृष्टिः स्थितिर्विश्वं स्थावरं जङ्गमं जगत् ॥ १२१॥

भूरापोऽग्निर्मरुद्व्योमाहंकृतिः प्रकृतिः पुमान् ।

ब्रह्मा विष्णुः शिवो रुद्र ईशः शक्तिः सदाशिवः ॥ १२२॥

त्रिदशाः पितरः सिद्धा यक्षा रक्षांसि किन्नराः ।

सिद्धविद्याधरा भूता मनुष्याः पशवः खगाः ॥ १२३॥

समुद्राः सरितः शैला भूतं भव्यं भवोद्भवः ।

सांख्यं पातञ्जलं योगं पुराणानि श्रुतिः स्मृतिः ॥ १२४॥

वेदाङ्गानि सदाचारो मीमांसा न्यायविस्तरः ।

आयुर्वेदो धनुर्वेदो गान्धर्वं काव्यनाटकम् ॥ १२५॥

वैखानसं भागवतं मानुषं पाञ्चरात्रकम् ।

शैवं पाशुपतं कालामुखंभैरवशासनम् ॥ १२६॥

शाक्तं वैनायकं सौरं जैनमार्हतसंहिता ।

सदसद्व्यक्तमव्यक्तं सचेतनमचेतनम् ॥ १२७॥

बन्धो मोक्षः सुखं भोगो योगः सत्यमणुर्महान् ।

स्वस्ति हुंफट् स्वधा स्वाहा श्रौषट् वौषट् वषण् नमः ॥

१२८॥

ज्ञानं विज्ञानमानन्दो बोधः संवित्समोऽसमः ।

एक एकाक्षराधार एकाक्षरपरायणः ॥ १२९॥

एकाग्रधीरेकवीर एकोऽनेकस्वरूपधृक् ।

द्विरूपो द्विभुजो द्व्यक्षो द्विरदो द्वीपरक्षकः ॥ १३०॥

द्वैमातुरो द्विवदनो द्वन्द्वहीनो द्वयातिगः ।

त्रिधामा त्रिकरस्त्रेता त्रिवर्गफलदायकः ॥ १३१॥

त्रिगुणात्मा त्रिलोकादिस्त्रिशक्तीशस्त्रिलोचनः ।

चतुर्विधवचोवृत्तिपरिवृत्तिप्रवर्तकः ॥ १३२॥

चतुर्बाहुश्चतुर्दन्तश्चतुरात्मा चतुर्भुजः ।

चतुर्विधोपायमयश्चतुर्वर्णाश्रमाश्रयः ।

चतुर्थीपूजनप्रीतश्चतुर्थीतिथिसम्भवः ॥ १३३॥

पञ्चाक्षरात्मा पञ्चात्मा पञ्चास्यः पञ्चकृत्तमः ॥ १३४॥

पञ्चाधारः पञ्चवर्णः पञ्चाक्षरपरायणः ।

पञ्चतालः पञ्चकरः पञ्चप्रणवमातृकः ॥ १३५॥

पञ्चब्रह्ममयस्फूर्तिः पञ्चावरणवारितः ।

पञ्चभक्षप्रियः पञ्चबाणः पञ्चशिखात्मकः ॥ १३६॥

षट्कोणपीठः षट्चक्रधामा षड्ग्रन्थिभेदकः ।

षडङ्गध्वान्तविध्वंसी षडङ्गुलमहाह्रदः ॥ १३७॥

षण्मुखः षण्मुखभ्राता षट्शक्तिपरिवारितः ।

षड्वैरिवर्गविध्वंसी षडूर्मिभयभञ्जनः ॥ १३८॥

षट्तर्कदूरः षट्कर्मा षड्गुणः षड्रसाश्रयः ।

सप्तपातालचरणः सप्तद्वीपोरुमण्डलः ॥ १३९॥

सप्तस्वर्लोकमुकुटः सप्तसप्तिवरप्रदः ।

सप्ताङ्गराज्यसुखदः सप्तर्षिगणवन्दितः ॥ १४०॥

सप्तच्छन्दोनिधिः सप्तहोत्रः सप्तस्वराश्रयः ।

सप्ताब्धिकेलिकासारः सप्तमातृनिषेवितः ॥ १४१॥

सप्तच्छन्दो मोदमदः सप्तच्छन्दो मखप्रभुः ।

अष्टमूर्तिर्ध्येयमूर्तिरष्टप्रकृतिकारणम् ॥ १४२॥

अष्टाङ्गयोगफलभृदष्टपत्राम्बुजासनः ।

अष्टशक्तिसमानश्रीरष्टैश्वर्यप्रवर्धनः ॥ १४३॥

अष्टपीठोपपीठश्रीरष्टमातृसमावृतः ।

अष्टभैरवसेव्योऽष्टवसुवन्द्योऽष्टमूर्तिभृत् ॥ १४४॥

अष्टचक्रस्फुरन्मूर्तिरष्टद्रव्यहविःप्रियः ।

अष्टश्रीरष्टसामश्रीरष्टैश्वर्यप्रदायकः ।

नवनागासनाध्यासी नवनिध्यनुशासितः ॥ १४५॥

नवद्वारपुरावृत्तो नवद्वारनिकेतनः ।

नवनाथमहानाथो नवनागविभूषितः ॥ १४६॥

नवनारायणस्तुल्यो नवदुर्गानिषेवितः ।

नवरत्नविचित्राङ्गो नवशक्तिशिरोद्धृतः ॥ १४७॥

दशात्मको दशभुजो दशदिक्पतिवन्दितः ।

दशाध्यायो दशप्राणो दशेन्द्रियनियामकः ॥ १४८॥

दशाक्षरमहामन्त्रो दशाशाव्यापिविग्रहः ।

एकादशमहारुद्रैःस्तुतश्चैकादशाक्षरः ॥ १४९॥

द्वादशद्विदशाष्टादिदोर्दण्डास्त्रनिकेतनः ।

त्रयोदशभिदाभिन्नो विश्वेदेवाधिदैवतम् ॥ १५०॥

चतुर्दशेन्द्रवरदश्चतुर्दशमनुप्रभुः ।

चतुर्दशाद्यविद्याढ्यश्चतुर्दशजगत्पतिः ॥ १५१॥

सामपञ्चदशः पञ्चदशीशीतांशुनिर्मलः ।

तिथिपञ्चदशाकारस्तिथ्या पञ्चदशार्चितः ॥ १५२॥

षोडशाधारनिलयः षोडशस्वरमातृकः ।

षोडशान्तपदावासः षोडशेन्दुकलात्मकः ॥ १५३॥

कलासप्तदशी सप्तदशसप्तदशाक्षरः ।

अष्टादशद्वीपपतिरष्टादशपुराणकृत् ॥ १५४॥

अष्टादशौषधीसृष्टिरष्टादशविधिः स्मृतः ।

अष्टादशलिपिव्यष्टिसमष्टिज्ञानकोविदः ॥ १५५॥

अष्टादशान्नसम्पत्तिरष्टादशविजातिकृत् ।

एकविंशः पुमानेकविंशत्यङ्गुलिपल्लवः ॥ १५६॥

चतुर्विंशतितत्त्वात्मा पञ्चविंशाख्यपूरुषः ।

सप्तविंशतितारेशः सप्तविंशतियोगकृत् ॥ १५७॥

द्वात्रिंशद्भैरवाधीशश्चतुस्त्रिंशन्महाह्रदः ।

षट्त्रिंशत्तत्त्वसंभूतिरष्टत्रिंशत्कलात्मकः ॥ १५८॥

पञ्चाशद्विष्णुशक्तीशः पञ्चाशन्मातृकालयः ।

द्विपञ्चाशद्वपुःश्रेणीत्रिषष्ट्यक्षरसंश्रयः ।

पञ्चाशदक्षरश्रेणीपञ्चाशद्रुद्रविग्रहः ॥ १५९॥

चतुःषष्टिमहासिद्धियोगिनीवृन्दवन्दितः ।

नमदेकोनपञ्चाशन्मरुद्वर्गनिरर्गलः ॥ १६०॥

चतुःषष्ट्यर्थनिर्णेता चतुःषष्टिकलानिधिः ।

अष्टषष्टिमहातीर्थक्षेत्रभैरववन्दितः ॥ १६१॥

चतुर्नवतिमन्त्रात्मा षण्णवत्यधिकप्रभुः ।

शतानन्दः शतधृतिः शतपत्रायतेक्षणः ॥ १६२॥

शतानीकः शतमखः शतधारावरायुधः ।

सहस्रपत्रनिलयः सहस्रफणिभूषणः ॥ १६३॥

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।

सहस्रनामसंस्तुत्यः सहस्राक्षबलापहः ॥ १६४॥

दशसाहस्रफणिभृत्फणिराजकृतासनः ।

अष्टाशीतिसहस्राद्यमहर्षिस्तोत्रपाठितः ॥ १६५॥

लक्षाधारः प्रियाधारो लक्षाधारमनोमयः ।

चतुर्लक्षजपप्रीतश्चतुर्लक्षप्रकाशकः ॥ १६६॥

चतुरशीतिलक्षाणां जीवानां देहसंस्थितः ।

कोटिसूर्यप्रतीकाशः कोटिचन्द्रांशुनिर्मलः ॥ १६७॥

शिवोद्भवाद्यष्टकोटिवैनायकधुरन्धरः ।

सप्तकोटिमहामन्त्रमन्त्रितावयवद्युतिः ॥ १६८॥

त्रयस्त्रिंशत्कोटिसुरश्रेणीप्रणतपादुकः ।

अनन्तदेवतासेव्यो ह्यनन्तशुभदायकः ॥ १६९॥

अनन्तनामानन्तश्रीरनन्तोऽनन्तसौख्यदः ।

अनन्तशक्तिसहितो ह्यनन्तमुनिसंस्तुतः ॥ १७०॥

इति वैनायकं नाम्नां सहस्रमिदमीरितम् ।

इदं ब्राह्मे मुहूर्ते यः पठति प्रत्यहं नरः ॥ १७१॥

करस्थं तस्य सकलमैहिकामुष्मिकं सुखम् ।

आयुरारोग्यमैश्वर्यं धैर्यं शौर्यं बलं यशः ॥ १७२॥

मेधा प्रज्ञा धृतिः कान्तिः सौभाग्यमभिरूपता ।

सत्यं दया क्षमा शान्तिर्दाक्षिण्यं धर्मशीलता ॥ १७३॥

जगत्संवननं विश्वसंवादो वेदपाटवम् ।

सभापाण्डित्यमौदार्यं गाम्भीर्यं ब्रह्मवर्चसम् ॥ १७४॥

ओजस्तेजः कुलं शीलं प्रतापो वीर्यमार्यता ।

ज्ञानं विज्ञानमास्तिक्यं स्थैर्यं विश्वासता तथा ॥ १७५॥

धनधान्यादिवृद्धिश्च सकृदस्य जपाद्भवेत् ।

वश्यं चतुर्विधं विश्वं जपादस्य प्रजायते ॥ १७६॥

राज्ञो राजकलत्रस्य राजपुत्रस्य मन्त्रिणः ।

जप्यते यस्य वश्यार्थे स दासस्तस्य जायते ॥ १७७॥

धर्मार्थकाममोक्षाणामनायासेन साधनम् ।

शाकिनीडाकिनीरक्षोयक्षग्रहभयापहम् ॥ १७८॥

साम्राज्यसुखदं सर्वसपत्नमदमर्दनम् ।

समस्तकलहध्वंसि दग्धबीजप्ररोहणम् ॥ १७९॥

दुःस्वप्नशमनं क्रुद्धस्वामिचित्तप्रसादनम् ।

षड्वर्गाष्टमहासिद्धित्रिकालज्ञानकारणम् ॥ १८०॥

परकृत्यप्रशमनं परचक्रप्रमर्दनम् ।

संग्राममार्गे सर्वेषामिदमेकं जयावहम् ॥ १८१॥

सर्ववन्ध्यत्वदोषघ्नं गर्भरक्षैककारणम् ।

पठ्यते प्रत्यहं यत्र स्तोत्रं गणपतेरिदम् ॥ १८२॥

देशे तत्र न दुर्भिक्षमीतयो दुरितानि च ।

न तद्गेहं जहाति श्रीर्यत्रायं जप्यते स्तवः ॥ १८३॥

क्षयकुष्ठप्रमेहार्शभगन्दरविषूचिकाः ।

गुल्मं प्लीहानमशमानमतिसारं महोदरम् ॥ १८४॥

कासं श्वासमुदावर्तं शूलं शोफामयोदरम् ।

शिरोरोगं वमिं हिक्कां गण्डमालामरोचकम् ॥ १८५॥

वातपित्तकफद्वन्द्वत्रिदोषजनितज्वरम् ।

आगन्तुविषमं शीतमुष्णं चैकाहिकादिकम् ॥ १८६॥

इत्याद्युक्तमनुक्तं वा रोगदोषादिसम्भवम् ।

सर्वं प्रशमयत्याशु स्तोत्रस्यास्य सकृज्जपः ॥ १८७॥

प्राप्यतेऽस्य जपात्सिद्धिः स्त्रीशूद्रैः पतितैरपि ।

सहस्रनाममन्त्रोऽयं जपितव्यः शुभाप्तये ॥ १८८॥

महागणपतेः स्तोत्रं सकामः प्रजपन्निदम् ।

इच्छया सकलान् भोगानुपभुज्येह पार्थिवान् ॥ १८९॥

मनोरथफलैर्दिव्यैर्व्योमयानैर्मनोरमैः ।

चन्द्रेन्द्रभास्करोपेन्द्रब्रह्मशर्वादिसद्मसु ॥ १९०॥

कामरूपः कामगतिः कामदः कामदेश्वरः ।

भुक्त्वा यथेप्सितान्भोगानभीष्टैः सह बन्धुभिः ॥ १९१॥

गणेशानुचरो भूत्वा गणो गणपतिप्रियः ।

नन्दीश्वरादिसानन्दैर्नन्दितः सकलैर्गणैः ॥ १९२॥

शिवाभ्यां कृपया पुत्रनिर्विशेषं च लालितः ।

शिवभक्तः पूर्णकामो गणेश्वरवरात्पुनः ॥ १९३॥

जातिस्मरो धर्मपरः सार्वभौमोऽभिजायते ।

निष्कामस्तु जपन्नित्यं भक्त्या विघ्नेशतत्परः ॥ १९४॥

योगसिद्धिं परां प्राप्य ज्ञानवैराग्यसंयुतः ।

निरन्तरे निराबाधे परमानन्दसंज्ञिते ॥ १९५॥

विश्वोत्तीर्णे परे पूर्णे पुनरावृत्तिवर्जिते ।

लीनो वैनायके धाम्नि रमते नित्यनिर्वृते ॥ १९६॥

यो नामभिर्हुतैर्दत्तैः पूजयेदर्चयीन्नरः ।

राजानो वश्यतां यान्ति रिपवो यान्ति दासताम् ॥ १९७॥

तस्य सिध्यन्ति मन्त्राणां दुर्लभाश्चेष्टसिद्धयः ।

मूलमन्त्रादपि स्तोत्रमिदं प्रियतमं मम ॥ १९८॥

नभस्ये मासि शुक्लायां चतुर्थ्यां मम जन्मनि ।

दूर्वाभिर्नामभिः पूजां तर्पणं विधिवच्चरेत् ॥ १९९॥

अष्टद्रव्यैर्विशेषेण कुर्याद्भक्तिसुसंयुतः ।

तस्येप्सितं धनं धान्यमैश्वर्यं विजयो यशः ॥ २००॥

भविष्यति न सन्देहः पुत्रपौत्रादिकं सुखम् ।

इदं प्रजपितं स्तोत्रं पठितं श्रावितं श्रुतम् ॥ २०१॥

व्याकृतं चर्चितं ध्यातं विमृष्टमभिवन्दितम् ।

इहामुत्र च विश्वेषां विश्वैश्वर्यप्रदायकम् ॥ २०२॥

स्वच्छन्दचारिणाप्येष येन सन्धार्यते स्तवः ।

स रक्ष्यते शिवोद्भूतैर्गणैरध्यष्टकोटिभिः ॥ २०३॥

लिखितं पुस्तकस्तोत्रं मन्त्रभूतं प्रपूजयेत् ।

तत्र सर्वोत्तमा लक्ष्मीः सन्निधत्ते निरन्तरम् ॥ २०४॥

दानैरशेषैरखिलैर्व्रतैश्च

तीर्थैरशेषैरखिलैर्मखैश्च ।

न तत्फलं विन्दति

यद्गणेशसहस्रनामस्मरणेन सद्यः ॥ २०५॥

एतन्नाम्नां सहस्रं पठति दिनमणौ प्रत्यहं

प्रोज्जिहाने सायं मध्यन्दिने वा

त्रिषवणमथवा सन्ततं वा जनो यः ।

स स्यादैश्वर्यधुर्यः प्रभवति वचसां

कीर्तिमुच्चैस्तनोति दारिद्र्यं हन्ति विश्वं

वशयति सुचिरं वर्धते पुत्रपौत्रैः ॥ २०६॥

अकिञ्चनोऽप्येकचित्तो नियतो नियतासनः ।

प्रजपंश्चतुरो मासान् गणेशार्चनतत्परः ॥ २०७॥

दरिद्रतां समुन्मूल्य सप्तजन्मानुगामपि ।

लभते महतीं लक्ष्मीमित्याज्ञा पारमेश्वरी ॥ २०८॥

आयुष्यं वीतरोगं कुलमतिविमलं

सम्पदश्चार्तिनाशः कीर्तिर्नित्यावदाता भवति

खलु नवा कान्तिरव्याजभव्या ।

पुत्राः सन्तः कलत्रं गुणवदभिमतं

यद्यदन्यच्च तत्तन् नित्यं यः स्तोत्रमेतत्

पठति गणपतेस्तस्य हस्ते समस्तम् ॥ २०९॥

गणञ्जयो गणपतिर्हेरम्बो धरणीधरः ।

महागणपतिर्बुद्धिप्रियः क्षिप्रप्रसादनः ॥ २१०॥

अमोघसिद्धिरमृतमन्त्रश्चिन्तामणिर्निधिः ।

सुमङ्गलो बीजमाशापूरको वरदः कलः ॥ २११॥

काश्यपो नन्दनो वाचासिद्धो ढुण्ढिर्विनायकः ।

मोदकैरेभिरत्रैकविंशत्या नामभिः पुमान् ॥ २१२॥

उपायनं ददेद्भक्त्या मत्प्रसादं चिकीर्षति ।

वत्सरं विघ्नराजोऽस्य तथ्यमिष्टार्थसिद्धये ॥ २१३॥

यः स्तौति मद्गतमना ममाराधनतत्परः ।

स्तुतो नाम्ना सहस्रेण तेनाहं नात्र संशयः ॥ २१४॥

नमो नमः सुरवरपूजिताङ्घ्रये नमो नमो

निरुपममङ्गलात्मने ।

नमो नमो विपुलदयैकसिद्धये नमो नमः

करिकलभाननाय ते ॥ २१५॥

किङ्किणीगणरचितचरणः

प्रकटितगुरुमितचारुकरणः ।

मदजललहरीकलितकपोलः

शमयतु दुरितं गणपतिनाम्ना ॥ २१६॥

॥ इति श्रीगणेशपुराणे उपासनाखण्डे

ईश्वरगणेशसंवादे गणेशसहस्रनामस्तोत्रं

नाम षट्चत्वारिंशोऽध्यायः ॥

***********************************

॥ महागणपतिसहस्रनामस्तोत्रं २ अथवा वरदगणशसहस्रनामस्तोत्रम् ॥

श्रीगणेशाय नमः ।

श्रीभैरव उवाच -

शृणु देवि रहस्यं मे यत्पुरा सूचितं मया ।

तव भक्त्या गणेशस्य वक्ष्ये नामसहस्रकम् ॥ १॥

श्रीदेव्युवाच -

भगवन् गणनाथस्य वरदस्य महात्मनः ।

श्रोतुं नामसहस्रं मे हृदयं प्रोत्सुकायते ॥ २॥

श्रीभैरव उवाच -

प्राङ् मे त्रिपुरनाशे तु जाता विघ्नकुलाः शिवे ।

मोहेन मुह्यते चेतस्ते सर्वे बलदर्पिताः ॥ ३॥

तदा प्रभुं गणाध्यक्षं स्तुत्वा नामसहस्रकैः ।

विघ्ना दूरात् पलायन्त कालरुद्रादिव प्रजाः ॥ ४॥

तस्यानुग्रहतो देवि जातोऽहं त्रिपुरान्तकः ।

तमद्यापि गणेशानं स्तौमि नामसहस्रकैः ॥ ५॥

तमद्य तव भक्त्याहं साधकानां हिताय च ।

महागणपतेर्वक्ष्ये दिव्यं नामसहस्रकम् ॥ ६॥

(पाठकानां च दातॄणां सुखसम्पत्प्रदायकम् ।

दुःखापहं च श्रोतॄणां मन्त्रनामसहस्रकम्) ॥ ७॥

अस्य श्रीवरदगणेशसहस्रनामस्तोत्रमन्त्रस्य श्रीभैरव ऋषिः ।

गायत्री छन्दः । श्रीमहागणपतिर्देवता । गं बीजं । ह्रीं शक्तिः ।

कुरु कुरु कीलकं ।

धर्मार्थकाममोक्षार्थे सहस्रनामस्तवपाठे विनियोगः ।

ध्यानम्-

ॐह्रींश्रींक्लीं-गणाध्यक्षो ग्लौंगं-गणपतिर्गुणी ।

गुणाद्यो निर्गुणो गोप्ता गजवक्त्रो विभावसुः ॥ ८॥

विश्वेश्वरो विभादीप्तो दीपनो धीवरो धनी ।

सदाशान्तो जगत्तातो विष्वक्सेनो विभाकरः ॥ ९॥

विस्रम्भी विजयी वैद्यो वारान्निधिरनुत्तमः ।

अणीयान् विभवी श्रेष्ठो ज्येष्ठो गाथाप्रियो गुरुः ॥ १०॥

सृष्टिकर्ता जगद्धर्ता विश्वभर्ता जगन्निधिः ।

पतिः पीतविभूषाङ्गो रक्ताक्षो लोहिताम्बरः ॥ ११॥

विरूपाक्षो विमानस्थो विनयः सनयः सुखी ।

सुरूपः सात्त्विकः सत्यः शुद्धः शङ्करनन्दनः ॥ १२॥

नन्दीश्वरो सदानन्दी वन्दिस्तुत्यो विचक्षणः ।

दैत्यमर्दी मदाक्षीबो मदिरारुणलोचनः ॥ ११॥

सारात्मा विश्वसारश्च विश्वचारी विलेपनः ।

परं ब्रह्म परं ज्योतिः साक्षी त्र्यक्षो विकत्थनः ॥ १४॥

वीरेश्वरो वीरहर्ता सौभाग्यो भाग्यवर्धनः ।

भृङ्गिरीटी भृङ्गमाली भृङ्गकूजितनादितः ॥ १५॥

विनर्तको विनेतापि विनतानन्दनोऽर्चितः ।

वैनतेयो विनम्राङ्गो विश्वनेता विनायकः ॥ १६॥

विराटको विराटश्च विदग्धो विधिरात्मभूः ।

पुष्पदन्तः पुष्पहारी पुष्पमालाविभूषणः ॥ १७॥

पुष्पेषुर्मथनः पुष्टो विकर्ता कर्तरीकरः ।

अन्त्योऽन्तकश्चित्तगणश्चित्तचिन्तापहारकः ॥ १८॥

अचिन्त्योऽचिन्त्यरूपश्च चन्दनाकुलमुण्डकः ।

लिपितो लोहितो लुप्तो (१००) लोहिताक्षो विलोभकः ॥ १९॥

लुब्धाशयो लोभरतो लाभदोऽलङ्घ्यगात्रकः ।

सुन्दरः सुन्दरीपुत्रः समस्तासुरघातनः ॥ २०॥

नूपुराढ्यो विभवदो नरो नारायणो रविः ।

विचारी वान्तदो वाग्मी वितर्की विजयेश्वरः ॥ २१॥

सुप्तो बुद्धः सदारूपः सुखदः सुखसेवितः ।

विकर्तनो वियच्चारी विनटो नर्तको नटः ॥ २२॥

नाट्यो नाट्यप्रियो नादोऽनन्तोऽनन्तगुणात्मकः ।

विश्वमूर्विश्वघाती च विनतास्यो विनर्तकः ॥ २३॥

करालः कामदः कान्तः कमनीयः कलाधरः ।

कारुण्यरूपः कुटिलः कुलाचारी कुलेश्वरः ॥ २४॥

विकरालो गणश्रेष्ठः संहारो हारभूषणः ।

रुरू रम्यमुखो रक्तो रेवतीदयितो रसः ॥ २५॥

महाकालो महादंष्ट्रो महोरगभयापहः ।

उन्मत्तरूपः कालाग्निरग्निसूर्येन्दुलोचनः ॥ २६॥

सितास्यः सितमाल्यश्च सितदन्तः सितांशुमान् ।

असितात्मा भैरवेशो भाग्यवान् भगवान् भगः ॥

भर्गात्मजो भगावासो भगदो भगवर्धनः ।

शुभङ्करः शुचिः शान्तः श्रेष्यः श्रव्यः शचीपतिः ॥ २८॥

वेदाद्यो वेदकर्ता च वेदवेद्यः सनातनः ।

विद्याप्रदो वेदसारो वैदिको वेदपारगः ॥ २९॥

वेदध्वनिरतो वीरो वरो वेदागमार्थवित् ।

तत्त्वज्ञः सवर्गः साधुः सदयः सद् (२००) असन्मयः ॥ ३०॥

निरामयो निराकारो निर्भयो नित्यरूपभृत् । ।

निर्वैरो वैरिविध्वंसी मत्तवारणसन्निभः ॥ ३१॥

शिवङ्करः शिवसुतः शिवः सुखविवर्धनः ।

श्वैत्यः श्वेतः शतमुखो मुग्धो मोदकभोजनः ॥ ३२॥

देवदेवो दिनकरो धृतिमान् द्युतिमान् धवः ।

शुद्धात्मा शुद्धमतिमाञ्छुद्धदीप्तिः शुचिव्रतः ॥ ३३॥

शरण्यः शौनकः शूरः शरदम्भोजधारकः ।

दारकः शिखिवाहेष्टः शीतः शङ्करवल्लभः ॥ ३४॥

शङ्करो निर्भवो नित्यो लयकृल्लास्यतत्परः । निर्भयो

लूतो लीलारसोल्लासी विलासी विभ्रमो भ्रमः ॥ ३५॥

भ्रमणः शशभृत् सूर्यः शनिर्धरणिनन्दनः ।

बुद्धो विबुधसेव्यश्च बुधराजो बलन्धरः ॥ ३६॥

जीवो जीवप्रदो जैत्रः स्तुत्यो नुत्यो नतिप्रियः ।

जनको जिनमार्गज्ञो जैनमार्गनिवर्तकः ॥ ३७॥

गौरीसुतो गुरुरवो गौराङ्गो गजपूजितः ।

परं पदं परं धाम परमात्मा कविः कुजः ॥ ३८॥

राहुर्दैत्यशिरश्छेदी केतुः कनककुण्डलः ।

ग्रहेन्द्रो ग्राहितो ग्राह्योऽग्रणीर्घुर्घुरनादितः ॥ ३९॥

पर्जन्यः पीवरो पोत्री पीनवक्षाः परार्जितः ।

वनेचरो वनपतिर्वनवासः स्मरोपमः ॥ ४०॥

पुण्यं पूतः पवित्रं च परात्मा पूर्णविग्रहः ।

पूर्णेन्दुशकलाकारो मन्युः पूर्णमनोरथः ॥ ४१॥

युगात्मा युगभृद् यज्वा (३००) याज्ञिको यज्ञवत्सलः । योगभृद्

यशस्वी यजमानेष्टो व्रजभृद् वज्रपञ्जरः ॥ ४२॥

मणिभद्रो मणिमयो मान्यो मीनध्वजाश्रितः ।

मीनध्वजो मनोहारी योगिनां योगवर्धनः ॥ ४३॥

द्रष्टा स्रष्टा तपस्वी च विग्रही तापसप्रियः ।

तपोमयस्तपोमूर्तिस्तपनश्च तपोधनः ॥ ४४॥

रुचको मोचको रुष्टस्तुष्टस्तोमरधारकः ।

दण्डी चण्डांशुरव्यक्तः कमण्डलुधरोऽनघः ॥ ४५॥

कामी कर्मरतः कालः कोलः क्रन्दितदिक्तटः ।

भ्रामको जातिपूज्यश्च जाड्यहा जडसूदनः ॥ ४६॥

जालन्धरो जगद्वासी हासकृद् हवनो हविः ।

हविष्मान् हव्यवाहाक्षो हाटको हाटकाङ्गदः ॥ ४७॥

सुमेरुर्हिमवान् होता हरपुत्रो हलङ्कषः ।

हालप्रियो हृदाशान्तः कान्ताहृदयपोषणः ॥ ४८॥

शोषणः क्लेशहा क्रूरः कठोरः कठिनाकृतिः ।

कूवरो धीमयो ध्याता ध्येयो धीमान् दयानिधिः ॥

दविष्ठो दमनो द्युस्थो दाता त्राता सितः समः ।

निर्गतो नैगमी गम्यो निर्जेयो जटिलोऽजरः ॥ ५०॥

जनजीवो जितारातिर्जगद्व्यापी जगन्मयः ।

चामीकरनिभोऽनाद्यो नलिनायतलोचनः ॥ ५१॥

रोचनो मोचनो मन्त्री मन्त्रकोटिसमाश्रितः ।

पञ्चभूतात्मकः पञ्चसायकः पञ्चवक्त्रकः ॥ ५२॥

पञ्चमः पश्चिमः पूर्वः ( ४००) पूर्णः कीर्णालकः कुणिः ।

कठोरहृदयो ग्रीवालङ्कृतो ललिताशयः ॥ ५३॥

लोलचित्तो बृहन्नासो मासपक्षर्तुरूपवान् ।

ध्रुवो द्रुतगतिर्धर्म्यो धर्मी नाकिप्रियोऽनलः ॥ ५४॥

अगस्त्यो ग्रस्तभुवनो भुवनैकमलापहः ।

सागरः स्वर्गतिः स्वक्षः सानन्दः साधुपूजितः ॥ ५५॥

सतीपतिः समरसः सनकः सरलः सुरः ।

सुराप्रियो वसुपतिर्वासवो वसुपूजितः ॥ ५६॥

वित्तदो वित्तनाथश्च धनिनां धनदायकः ।

राजी राजीवनयनः स्मृतिदः कृत्तिकाम्बरः ॥ ५७॥

आश्विनोऽश्वमुखः शुभ्रो भरणो भरणीप्रियः ।

कृत्तिकासनगः कोलो रोही रोहणपादुकः ॥ ५८॥

ऋभुवेष्टोऽरिमर्दी च रोहिणीमोहनोऽमृतम् ।

मृगराजो मृगशिरा माधवो मधुरध्वनिः ॥ ५९॥

आर्द्राननो महाबुद्धिर्महोरगविभूषणः ।

भ्रूक्षेपदत्तविभवो भ्रूकरालः पुनर्मयः ॥ ६०॥

पुनर्देवः पुनर्जेता पुनर्जीवः पुनर्वसुः ।

तित्तिरिस्तिमिकेतुश्च तिमिचारकघातनः ॥ ६१॥

तिष्यस्तुलाधरो जम्भ्यो विश्लेषोऽश्लेष एणराट् ।

मानदो माधवो माघो वाचालो मघवोपमः ॥ ६२॥

मेध्यो मघाप्रियो मेघो महामुण्डो महाभुजः ।

पूर्वफाल्गुनिकः स्फीतः फल्गुरुत्तरफाल्गुनः ॥ ६३॥

फेनिलो ब्रह्मदो ब्रह्मा सप्ततन्तुसमाश्रयः ।

घोणाहस्तश्चतुर्हस्तो हस्तिवक्त्रो हलायुधः ॥ ६४॥

चित्राम्बरो(५००)ऽर्चितपदः स्वादितः स्वातिविग्रहः ।

विशाखः शिखिसेव्यश्च शिखिध्वजसहोदरः ॥ ६५॥

अणू रेणुः कलास्फारोऽनूरू रेणुसुतो नरः ।

अनुराधाप्रियो राध्यः श्रीमाञ्छुक्लः शुचिस्मितः ॥ ६६॥

ज्येष्ठः श्रेष्ठार्चितपदो मूलं त्रिजगतो गुरुः ।

शुचिः पूर्वस्तथाषाढश्चोत्तराषाढ ईश्वरः ॥ ६७॥

श्रव्योऽभिजिदनन्तात्मा श्रवो वेपितदानवः ।

श्रावणः श्रवणः श्रोता धनी धन्यो धनिष्ठकः ॥ ६८॥

शातातपः शातकुम्भः शतंज्योतिः शतम्भिषक् ।

पूर्वाभाद्रपदो भद्रश्चोत्तराभाद्रपादितः ॥ ६९॥

रेणुकातनयो रामो रेवतीरमणो रमी ।

अश्वियुक् कार्तिकेयेष्टो मार्गशीर्षो मृगोत्तमः ॥ ७०॥

पुष्यशौर्यः फाल्गुनात्मा वसन्तश्चित्रको मधुः ।

राज्यदोऽभिजिदात्मीयस्तारेशस्तारकद्युतिः ॥ ७१॥

प्रतीतः प्रोज्झितः प्रीतः परमः पारमो हितः ।

परहा पञ्चभूः पञ्चवायुः पूज्यः परं महः ॥ ७२॥

पुराणागमविद् योग्यो महिषो रासभोऽग्रगः ।

ग्राहो मेषो वृषो मन्दो मन्मथो मिथुनार्चितः ॥ ७३॥

कल्कभृत् कटको दीनो मर्कटः कर्कटो घृणी ।

कुक्कुटो वनजो हंसः परहंसः शृगालकः ॥ ७४॥

सिंहः सिंहासनो मूषो मोह्यो मूषकवाहनः (६००) ।

पुत्रदो नरकत्राता कन्याप्रीतः कुलोद्वहः ॥ ७५॥

अतुल्यरूपो बलदस्तुलाभृत् तुल्यसाक्षिकः ।

अलिचापधरो धन्वी कच्छपो मकरो मणिः ॥ ७६॥

स्थिरः प्रभुर्महाकर्मी महाभोगी महायशाः ।

वसुमूर्तिधरो व्यग्रोऽसुरहारी यमान्तकः ॥ ७७॥

देवाग्रणीर्गणाध्यक्षो ह्यम्बुजालो महामतिः ।

अङ्गदी कुण्डली भक्तिप्रियो भक्तविवर्धनः ॥ ७८॥

गाणपत्यप्रदो मायी वेदवेदान्तपारगः ।

कात्यायनीसुतो ब्रह्मपूजितो विघ्ननाशनः ॥ ७९॥

संसारभयविध्वंसी महोरस्को महीधरः ।

विघ्नान्तको महाग्रीवो भृशं मोदकमोदितः ॥ ८०॥

वाराणसीप्रियो मानी गहन आखुवाहनः ।

गुहाश्रयो विष्णुपदीतनयः स्थानदो ध्रुवः ॥ ८१॥

परर्द्धिस्तुष्टो विमलो मौलिमान् वल्लभाप्रियः ।

चतुर्दशीप्रियो मान्यो व्यवसायो मदान्वितः ॥ ८२॥

अचिन्त्यः सिंहयुगलनिविष्टो बालरूपधृत् ।

धीरः शक्तिमतां श्रेष्ठो महाबलसमन्वितः ॥ ८३॥

सर्वात्मा हितकृद् वैद्यो महाकुक्षिर्महामतिः ।

करणं मृत्युहारी च पापसङ्घनिवर्तकः ॥ ८४॥

उद्भिद् वज्री महादैत्यसूदनो दीनरक्षकः ।

भूतचारी प्रेतचारी बुद्धिरूपो मनोमयः ॥ ८५॥

अहङ्कारवपुः साङ्ख्यपुरुषस्त्रिगुणात्मकः ।

तन्मात्ररूपो भूतात्मा इन्द्रियात्मा वशीकरः ॥ ८६॥

मलत्रयबहिर्भूतो ह्यवस्थात्रयवर्जितः ।

नीरूपो बहुरूपश्च किन्नरो नागविक्रमः ॥ ८७॥

एकदन्तो महावेगः सेनानी स्त्रिदशाधिपः ।

विश्वकर्ता विश्वबीजं (७००) श्रीः सम्पदह्रीर्धृतिर्मतिः ॥ ८८॥

सर्वशोषकरो वायुः सूक्ष्मरूपः सुनिश्चलः ।

संहर्ता सृष्टिकर्ता च स्थितिकर्ता लयाश्रितः ॥ ८९॥

सामान्यरूपः सामास्योऽथर्वशीर्षा यजुर्भुजः ।

ऋगीक्षणः काव्यकर्ता शिक्षाकारी निरुक्तवित् ॥ ९०॥

शेषरूपधरो मुख्यः शब्दब्रह्मस्वरूपभाक् ।

विचारवाञ्शङ्खधारी सत्यव्रतपरायणः ॥ ९१॥

महातपा घोरतपाः सर्वदो भीमविक्रमः ।

सर्वसम्पत्करो व्यापी मेघगम्भीरनादभृत् ॥ ९२॥

समृद्धो भूतिदो भोगी वेशी शङ्करवत्सलः ।

शम्भुभक्तिरतो मोक्षदाता भवदवानलः ॥ ९३॥

सत्यस्तपा ध्येयमूर्तिः कर्ममूर्तिर्महांस्तथा ।

समष्टिव्यष्टिरूपश्च पञ्चकोशपराङ्मुखः ॥ ९४॥

तेजोनिधिर्जगन्मूर्तिश्चराचरवपुर्धरः ।

प्राणदो ज्ञानमूर्तिश्च नादमूर्तियुतोऽक्षरः ॥ ९५॥

भूताद्यस्तैजसो भावो निष्कलश्चैव निर्मलः ।

कूटस्थश्चेतनो रुद्रः क्षेत्रवित् पुरुषो बुधः ॥ ९६॥

अनाधारोऽप्यनाकारो धाता च विश्वतोमुखः ।

अप्रतर्क्यवपुः स्कन्दानुजो भानुर्महाप्रभः ॥ ९७॥

यज्ञहर्ता यज्ञकर्ता यज्ञानां फलदायकः ।

यज्ञगोप्ता यज्ञमयो दक्षयज्ञविनाशकृत् ॥ ९८॥

वक्रतुण्डो महाकायः कोटिसूर्यसमप्रभः ।

एकदंष्ट्रः कृष्णपिङ्गो विकटो धूम्रवर्णकः ॥ ९९॥

टङ्कधारी जम्बुकश्च नायकः शूर्पकर्णकः ।

सुवर्णगर्भः सुमुखः श्रीकरः सर्वसिद्धिदः ॥ १००॥

सुवर्णवर्णो हेमाङ्गो महात्मा चन्दनच्छविः ।

स्वङ्गः स्वक्षः (८००) शतानन्दो लोकविल्लोकविग्रहः ॥ १०१॥

इन्द्रो जिष्णुर्धूमकेतुर्वह्निः पूज्यो दवान्तकः ।

पूर्णानन्दः परानन्दः पुराणपुरुषोत्तमः ॥ १०२॥

कुम्भभृत् कलशी कुब्जो मीनमांससुतर्पितः ।

राशिताराग्रहमयस्तिथिरूपो जगद्विभुः ॥ १०३॥

प्रतापी प्रतिपतप्रेयान् द्वितीयोऽद्वैतनिश्चितः ।

त्रिरूपश्च तृतीयाग्निस्त्रयीरूपस्त्रयीतनुः ॥ १०४॥

चतुर्थीवल्लभो देवो पारगः पञ्चमीरवः ।

षड्रसास्वादकोऽजातः षष्ठी षष्टिकवत्सरः ॥ १०५॥

सप्तार्णवगतिः सारः सप्तमीश्वर ईहितः ।

अष्टमीनन्दनोऽनार्तो नवमीभक्तिभावितः ॥ १०६॥

दशदिक्पतिपूज्यश्च दशमी द्रुहिणो द्रुतः ।

एकादशात्मा गणपो द्वादशीयुगचर्चितः ॥ १०७॥

त्रयोदशमनुस्तुत्यश्चतुर्दशसुरप्रियः ।

चतुर्दशेन्द्रसंस्तुत्यः पूर्णिमानन्दविग्रहः ॥ १०८॥

दर्शादर्शो दर्शनश्च वानप्रस्थो मुनीश्वरः ।

मौनी मधुरवाङ्मूलं मूर्तिमान् मेघवाहनः ॥ १०९॥

महागजो जितक्रोधो जितशत्रुर्जयाश्रयः ।

रौद्रो रुद्रप्रियो रुक्मो रुद्रपुत्रोऽघतापनः ॥ ११०॥

भवप्रियो भवानीष्टो भारभृद् भूतभावनः ।

गान्धर्वकुशलोऽकुण्ठो वैकुण्ठो विष्णुसेवितः ॥ १११॥

वृत्रहा विघ्नहा सीरः समस्तदुरितापहः ।

मञ्जुलो मार्जनो मत्तो दुर्गापुत्रो दुरालसः ॥ ११२॥

अनन्तचित्सुधाधारो वीरो वीर्यैकसाधकः ।

भास्वन्मुकुटमाणिक्यः कूजत्किङ्किणिजालकः ॥ ११३॥

शुण्डाधारी तुण्डचलः कुण्डली मुण्डमालकः ।

पद्माक्षः पद्महस्तश्च (९००) पद्मनाभसमर्चितः ॥ ११४॥

उद्गीथो नरदन्ताढ्यमालाभूषणभूषितः ।

नारदो वारणो लोलश्रवणः शूर्पकश्रवाः ॥ ११५॥

बृहदुल्लासनासाढ्यव्याप्तत्रैलोक्यमण्डलः ।

इलामण्डलसम्भ्रान्तकृतानुग्रहजीवकः ॥ ११६॥

बृहत्कर्णाञ्चलोद्धूतवायुवीजितदिक्तटः ।

बृहदास्यरवाक्रान्तभीमब्रह्माण्डभाण्डकः ॥ ११७॥

बृहत्पादसमाक्रान्तसप्तपातालवेपितः ।

बृहद्दन्तकृतात्युग्ररणानन्दरसालसः ॥ ११८॥

बृहद्धस्तधृताशेषायुधनिर्जितदानवः ।

स्फुरत्सिन्दूरवदनः स्फुरत्तेजोऽग्निलोचनः ॥ ११९॥

उद्दीपितमणिस्फूर्जन्नूपुरध्वनिनादितः ।

चलत्तोयप्रवाहाढ्यनदीजलकणाकुलः ॥ १२०॥

भ्रमत्कुञ्जरसङ्घातवन्दिताङ्घ्रिसरोरुहः ।

ब्रह्माच्युतमहारुद्रपुरःसरसुरार्चितः ॥ १२१॥

अशेषशेषप्रभृतिव्यालजालोपसेवितः ।

गूर्जत्पञ्चाननारावप्राप्ताकाशधरातलः ॥ १२२॥

हाहाहूहूकृतात्युग्रसुरविभ्रान्तमानसः ।

पञ्चाशद्वर्णबीजाढ्यमन्त्रमन्त्रितविग्रहः ॥ १२३॥

वेदान्तशास्त्रपीयूषधाराप्लावितभूतलः ।

शङ्खध्वनिसमाक्रान्तपातालादिनभस्तलः ॥ १२४॥

चिन्तामणिर्महामल्लो भल्लहस्तो बलिः कलिः ।

कृतत्रेतायुगोल्लासभासमानजगत्त्रयः ॥ १२५॥

द्वापरः परलोकैककर्मध्वान्तसुधाकरः ।

सुधासिक्तवपुर्व्याप्तब्रह्माण्डादिकटाहकः ॥ १२६॥

अकारादिक्षकारान्तवर्णपङ्क्तिसमुज्ज्वलः ।

अकाराकारप्रोद्गीततारनादनिनादितः ॥ १२७॥

इकारेकारमन्त्राढ्यमालाभ्रमणलालसः ।

उकारोकारप्रोद्गारिघोरनागोपवीतकः ॥ १२८॥

ऋवर्णाङ्कितॠकारपद्मद्वयसमुज्ज्वलः ।

लृकारयुतलॄकारशङ्खपूर्णदिगन्तरः ॥ १२९॥

एकारैकारगिरिजास्तनपानविचक्षणः ।

ओकारौकारविश्वादिकृतसृष्टिक्रमालसः ॥ १३०॥

अंअःवर्णावलीव्याप्तपादादिशीर्षमण्डलः ।

कर्णतालकृतात्युच्चैर्वायुवीजितनिर्जरः ॥ १३१॥

खगेशध्वजरत्नाङ्ककिरीटारुणपादकः ।

गर्विताशेषगन्धर्वगीततत्परश्रोत्रकः ॥ १३२॥

घनवाहनवागीशपुरःसरसुरार्चितः ।

ङवर्णामृतधाराढ्यशोभमानैकदन्तकः ॥ १३३॥

चन्द्रकुङ्कुमजम्बाललिप्तसुन्दरविग्रहः ।

छत्रचामररत्नाढ्यमुकुटालङ्कृताननः ॥ १३४॥

जटाबद्धमहानर्घमणिपङ्क्तिविराजितः ।

झाङ्कारिमधुपव्रातगाननादनिनादितः ॥ १३५॥

ञवर्णकृतसंहारदैत्यासृक्पूर्णमुद्गरः ।

टङ्कारुकफलास्वादवेपिताशेषमूर्धजः ॥ १३६॥

ठकाराढ्यडकाराङ्कढकारानन्दतोषितः ।

णवर्णामृतपीयूषधाराधरसुधाधरः ॥ १३७॥

ताम्रसिन्दूरपुञ्जाढ्यललाटफलकच्छविः ।

थकारधनपङ्क्त्याढ्यसन्तोषितद्विजव्रजः ॥ १८॥

दयामयहृदम्भोजधृतत्रैलोक्यमण्डलः ।

धनदादिमहायक्षसंसेवितपदाम्बुजः ॥ १३९॥

नमिताशेषदेवौघकिरीटमणिरञ्जितः ।

परवर्गापवर्गादिमार्गच्छेदनदक्षकः ॥ १४०॥

फणिचक्रसमाक्रान्तगलमण्डलमण्डितः ।

बद्धभ्रूयुगभीमोग्रसन्तर्जितसुरासुरः ॥ १४१॥

भवानीहृदयानन्दवर्धनैकनिशाकरः ।

मदिराकलशस्फीतकरालैककराम्बुजः ॥ १४२॥

यज्ञान्तरायसङ्घातघातसज्जीकृतायुधः ।

रत्नाकरसुताकान्तकान्तिकीर्तिविवर्धनः ॥ १४३॥

लम्बोदरमहाभीमवपुर्दीनीकृतासुरः ।

वरुणादिदिगीशानरचितार्चनचर्चितः ॥ १४४॥

शङ्करैकप्रियप्रेमनयनानन्दवर्धनः ।

षोडशस्वरितालापगीतगानविचक्षणः ॥ १४५॥

समस्तदुर्गतिसरिन्नाथोत्तारणकोडुपः ।

हरादिब्रह्मवैकुण्ठब्रह्मगीतादिपाठकः ॥ १४६॥

क्षमापूरितहृत्पद्मसंरक्षितचराचरः ।

ताराङ्कमन्त्रवर्णैकविग्रहोज्ज्वलविग्रहः ॥ १४७॥

अकारादिक्षकारान्तविद्याभूषितविग्रहः ।

ॐश्रींविनायको ॐह्रींविघ्नाध्यक्षो गणाधिपः ॥ १४८॥

हेरम्बो मोदकाहारो वक्रतुण्डो विधिस्मृतः ।

वेदान्तगीतो विद्यार्थी शुद्धमन्त्रः षडक्षरः ॥ १४९॥

गणेशो वरदो देवो द्वादशाक्षरमन्त्रितः ।

सप्तकोटिमहामन्त्रमन्त्रिताशेषविग्रहः ॥ १५०॥

गाङ्गेयो गणसेव्यश्च ॐश्रीन्द्वैमातुरः शिवः ।

ॐह्रींश्रींक्लींग्लौंगंदेवो महागणपतिः प्रभुः (१०००) ॥ १५१॥

इदं नाम्नां सहस्रं ते महागणपतेः स्मृतम् ।

गुह्यं गोप्यतमं गुप्तं सर्वतन्त्रेषु गोपितम् ॥ १५२॥

सर्वमन्त्रनिधिं दिव्यं सर्वविघ्नविनाशनम् ।

ग्रहतारामयं राशिवर्णपङ्क्तिसमन्वितम् ॥ १५३॥

सर्वविद्यामयं ब्रह्मसाधनं साधकप्रियम् ।

गणेशस्य च सर्वस्वं रहस्यं त्रिदिवौकसाम् ॥ १५४॥

यथेष्टफलदं लोके मनोरथप्रपूरणम् ।

अष्टसिद्धिमयं साध्यं साधकानां जयप्रदम् ॥ १५५॥

विनार्चनं विना होमं विना न्यासं विना जपम् ।

अणिमाद्यष्टसिद्धीनां साधनं स्मृतिमात्रतः ॥ १५६॥

चतुर्थ्यामर्धरात्रे तु पठेन्मन्त्री चतुष्पथे ।

लिखेद्भूर्जे रवौ देवि पुण्यं नाम्नां सहस्रकम् ॥ १५७॥

धारयेत्तु चतुर्दश्यां मध्याह्ने मूर्ध्नि वा भुजे ।

योषिद्वामकरे बद्ध्वा पुरुषो दक्षिणे भुजे ॥ १५८॥

स्तम्भयेदपि ब्रह्माणं मोहयेदपि शङ्करम् ।

वशयेदपि त्रैलोक्यं मारयेदखिलान् रिपून् ॥ १५९॥

उच्चाटयेच्च गीर्वाणान् शमयेच्च धनञ्जयम् ।

वन्ध्या पुत्रांल्लभेच्छीघ्रं निर्धनो धनमाप्नुयात् ॥ १६०॥

त्रिवारं यः पठेद्रात्रौ गणेशस्य पुरः शिवे ।

नग्नः शक्तियुतो देवि भुक्त्वा भोगान् यथेप्सितान् ॥ १६१॥

प्रत्यक्षं वरदं पश्येद्गणेशं साधकोत्तमः ।

य एनं पठते नाम्नां सहस्रं भक्तिपूर्वकम् ॥ १६२॥

तस्य वित्तादिविभवो दारायुःसम्पदः सदा ।

रणे राजभये द्यूते पठेन्नाम्नां सहस्रकम् ॥ १६३॥

सर्वत्र जयमाप्नोति गणेशस्य प्रसादतः ।

इतीदं पुण्यसर्वस्वं मन्त्रनामसहस्रकम् ॥ १६४॥

महागणपतेर्गुह्यं गोपनीयं स्वयोनिवत् ।

॥ इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये

महागणपतिसहस्रनामस्तोत्रं  सम्पूर्णम् ॥

******************************************

॥ महागणपतिस्तोत्रम् ॥

योगं योगविदां विधूत-विविध-व्यासंगशुद्धाशय-

प्रादुर्भूत-सुधारस-प्रसृमर-ध्यानास्पदाध्यासिनाम् ।

आनन्दप्लवमान-बोधमधुरा-ऽऽमोदच्छटामेदुरं

तं भूमानमुपास्महे परिणतं दन्तावलास्यात्मना ॥ १॥

तारश्री-परशक्तिकामवसुधा-रूपानुगं यं विदुस्तस्मै

स्तात्प्रणतिर्गणाधिपतये यो रागिणाऽभ्यर्थ्यते ।

आमन्त्र्य प्रथमं वरेति वरदेत्यार्तेन सर्वं जनं

स्वामिन् मे वशमानयेति सततं स्वाहादिभिः पूजितः ॥ २॥

कल्लोलांचल-चुम्बिताम्बुद-तताविक्षुद्रवाम्भोनिधौ

द्वीपे रत्नमये सुरद्रुमवनामोदैकमेदस्विनि ।

मूले कल्पतरोर्महामणिमये पीठेऽक्षराम्भोरूहे

षट्कोणा कलित-त्रिकोणरचना-सत्कर्णिकेऽमुं भजे ॥ ३॥

चक्रप्रास-रसाल-कार्मुक-गदा-सद्बीजपूरद्विज-

व्रीह्यग्रोत्पल-पाशपंकजकरं शुण्डाग्रजाग्रद्घटम् ।

आश्लिष्टं प्रियया सरोजकरया रत्नस्फुरद् भूषया

माणिक्यप्रतिमं महागणपतिं विश्वेशमाशास्महे ॥ ४॥

दानाम्भः-परिमेदुर-प्रसृमर-व्यालम्बिरोलम्बभृत्

सिन्दूरारूण-गण्डमण्डलयुग-व्याजात् प्रशस्तिद्वयम् ।

त्रैलोक्येष्ट विधानवर्णसुभगं यः पद्मरागोपमं

धत्ते स श्रियमातनोतु सततं देवो गणानां पतिः ॥ ५॥

भ्राम्यन् मन्दरघूर्णनापरवश-क्षीराब्धिवीचिच्छटा-

सच्छायाश्चल-चामर-व्यतिकर-श्रीगर्वसर्वङ्कषाः ।

दिक्कान्ताघन-सारचन्दनरसा-साराःश्रयन्तां मनः

स्वच्छन्दप्रसर-प्रलिप्तवियतो हेरम्बदन्तत्विषः ॥ ६॥

मुक्ताजालकरम्बित-प्रविकसन्-माणिक्यपुंजच्छटा-

कान्ताः कम्बुकदम्ब-चुम्बितघनाम्भोज-प्रवालोपमाः ।

ज्योत्स्नापूर-तरंग-मन्थरतरत्-सन्ध्यावयस्याश्चिरं

हेरम्बस्य जयन्ति दन्तकिरणाकीर्णाः शरीरत्विषः ॥ ७॥

शुण्डाग्राकलितेन हेमकलशेनावर्जितेन क्षरन्

नानारत्नचयेन साधकजनान् सम्भावयन् कोटिशः ।

दानामोद-विनोदलुब्ध-मधुप-प्रोत्सारणाविर्भवत्

कर्णान्दोलनखेलनो विजयते देवो गणग्रामणीः ॥ ८॥

हेरम्बं प्रणमामि यस्य पुरतः शाण्डिल्यमूले श्रिया

बिभ्रत्याम्बुरूहे समं मधुरिपुस्ते शङ्खचक्रे वहन् ।

न्यग्रोधस्य तले सहाद्रिसुतया शम्भुस्तथा दक्षिणे

बिभ्राणः परशुं त्रिशूलमितया पाशाङ्कुशाभ्यां सह ॥ ९॥

पश्चात् पिप्पलमाश्रितो रतिपतिर्देवस्य रत्योत्पले

बिभ्रत्या सममैक्षवं धनुरिषून् पौष्पान् वहन् पञ्च च ।

वामे चक्रगदाधरः स भगवान्क्रोडः प्रियङ्गोस्तले

हस्तोद्यच्छुकशालिमंजरिकया देव्या धरण्या सह ॥ १०॥

षट्कोणाश्रिषु षट्सु षड्गजमुखाः पाशाङ्कुशाभीवरान्

बिभ्राणाः प्रमदासखाः पृथुमहाशोणाश्म-पुञ्जत्विषः ।

आमोदः पुरतः प्रमोदसुमुखौ तं चाभितो दुर्मुखः

पश्चात् पार्श्वगतोऽस्य विघ्न इति यो यो विघ्नकर्तेति च ॥ ११॥

आमोदादिगणेश्वर-प्रियतमास्तत्रैव नित्यं स्थिताः

कान्ताश्लेषरसज्ञ-मन्थरदृशः सिद्धिः समृद्धिस्ततः ।

कान्तिर्या मदनावतीत्यपि तथा कल्पेषु या गीयते

साऽन्या यापि मदद्रवा तदपरा द्राविण्यमूः पूजिताः ॥ १२॥

आश्लिष्टौ वसुधेत्यथो वसुमती ताभ्यां सितालोहितौ

वर्षन्तौ वसुपार्श्वयोर्विलसतस्तौ शंखपद्मौ निधी ।

अंगान्यन्वथ मातरश्च परितः शक्रादयोऽब्जाश्रया-

स्तद्बाह्येः कुलिशादयः परिपतत्काला नलज्योतिषः ॥ १३॥

इत्थं विष्णु-शिवादि-तत्वतनवे श्रीवक्रतुण्डाय

हुंकाराक्षिप्त-समस्तदैत्य पृतनाव्राताय दीप्तत्विषे ।

आनन्दैक-रसावबोधलहरी विध्वस्तसर्वोर्मये

सर्वत्र प्रथमानमुग्धमहसे तस्मै परस्मै नमः ॥ १४॥

सेवा हेवाकिदेवा-सुरनरनिकर-स्फार-कोटीर-कोटि-

काटिव्याटीकमान-द्युमणिसममणि-श्रेणिभावेणिकानाम् ।

राजन्नीराजनश्री-सखचरणनख-द्योतविद्योतमानः

श्रेयः स्थेयः स देयान् मम विमलदृशो

बन्धुरं सिन्धुरास्यः ॥ १५॥

एतेन प्रकटरहस्यमन्त्रमाला-गर्भेण

स्फुटतरसंविदा स्तवेन ।

यः स्तौति प्रचुरतरं महागणेशं तस्येयं

भवति वशंवदा त्रिलोकी ॥ १६॥

॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्य-

श्रीराघवचैतन्यविरचितं महागणपतिस्तोत्रं समाप्तम् ॥

********************************

॥ महागणपतिस्तोत्रं श्रीराघवचैतन्यविरचितम् ॥

तच्छिष्यकृतया टिप्पण्या समेतम् ।

योगं योगविदां विधूतविविधव्यासङ्गशुद्धाशय-

प्रादुर्भूतसुधारसप्रसृमरध्यानास्पदाध्यासिनाम् ।

आनन्दप्लवमानबोधमधुरामोदच्छटामेदुरं

तं भूमानमुपास्महे परिणतं दन्तावलस्यात्मना ॥ १॥

दन्तावलो गजस्तस्येवास्यं मुखं यस्य स गजाननस्तदात्मना तद्रूपेण

परिणतं तं भूमानं परं ब्रह्मोपास्महे । कीदृशं तम् । आनन्दो

ब्रह्मानन्दस्तेन प्लवमानः । लक्षणया पूर्णानन्दाभिन्न इत्यर्थः ।

ईदृशो यो बोधस्तेन चिदानन्दमयं स्वरूपमुक्तम् । तद्विवर्तरूपः

प्रपञ्च एव मधुरामोदच्छटात्वेन रूपितस्तेन मेदुरम् । पुनः कीदृशम् ।

योगविदां योगम् । कीदृशां योगविदाम् । विधूतो विविधो व्यासङ्गो यैरत

एव शुद्धो य आशयस्तस्मिन्प्रादुर्भूतः सुधारसः शान्तिसुखं येषां ते

च ते प्रसृमरं प्रसारि ध्यानं यस्मिन्नीदृशं यदास्पदं कंदरादि

तदध्यासिनश्च तेषाम् ॥

तारश्रीपरशक्तिकामवसुधारूपानुगां यं विदु-

स्तस्मै स्तात्प्रणतिर्गणाधिपतये यो रागिणाभ्यर्थ्यते ।

आमन्त्र्य प्रथमं वरेति वरदेत्यार्तेन सर्वं जनं

स्वामिन्मे वशमानयेति सततं स्वाहादिभिः पूजितः ॥ २॥

महागणपतिमन्त्रमुद्धरति - तारः प्रणवः, श्रीर्लक्ष्मीबीजम्,

परशक्तिर्मायाबीजम्, कामः कामबीजम्, वसुधा भूमिबीजम्, इति पञ्चरूपाणां

बीजानामनु गमित्यक्षरमेतादृशं यं साधका विदुस्तस्मै गणाधिपतये

प्रणतिः स्तादिति योजना । यः सततं स्वाहास्वधादिभिः शक्तिभिः

पूजितः । आर्तेन रागिणा प्रथमं वरेति ततो वरदेत्यामन्त्र्याभ्यर्थ्यते ।

अभ्यर्थनामेवाह - सर्वं जनं स्वामिन्मे वशमानयेति । स्वाहादिभिरित्यनेन

स्वाहान्तो मन्त्रः । अत्राधिपदं सर्वमिति च पदं छन्दोनुरोधादुक्तम् ।

मन्त्रे तु गणपतये तथा सर्वजनमित्येकमेव पदम् । स्वामिन्निति च

मन्त्राद्बहिर्भूतम् ॥

कल्लोलाञ्चलचुम्बिताम्बुदतताविक्षुद्रवाम्भोनिधौ

द्वीपे रत्नमये सुरद्रुमवनामोदैकमेदस्विनि ।

मूले कल्पतरोर्महामणिमये पीठेऽक्षराम्भोरुहे

षट्कोणाकलितत्रिकोणरचनसत्कर्णिकेऽमुं भजे ॥ ३॥

कल्लोलानां महोर्मीणामञ्चलाः प्रान्तास्तैराश्लिष्टा मेघततिर्येनैतादृश

इक्षुरससमुद्रे सुरद्रुमाणां पारिजातादीनां वनं तदामोदेन परिपुष्टे ।

रत्नमयं द्वीपं वारिमध्यस्थलं तद्गतस्य कल्पतरोर्मूले महामणिमयं

पीठं तत्र षट्कोणयुक्तत्रिकोणकर्णीकायुक्तेऽक्षराम्भोरुहे तन्त्रप्रसिद्धे

मातृकाकमलेऽमुं महागणपतिं भजे ॥

चक्रप्रासरसालकार्मुकगदासद्बीजपूरद्विज-

व्रीह्यग्रोत्पलपाशपङ्कजकरं शुण्डाग्रजाग्रद्घटम् ।

आश्लिष्टं प्रियया सरोजकरया रत्नस्फुरद्भूषया

माणिक्यप्रतिमं महागणपतिं विश्वेशमाशास्महे ॥ ४॥

चक्रं प्रसिद्धम्, प्रासस्त्रिशूलः, रसालकार्मुकमिक्षुधनुः, गदा प्रसिद्धा,

बीजपूरो मातुलिङ्गम्, द्विजः स्वकीयो दन्तः, व्रीह्यग्रं शालिमञ्जरी,

उत्पलं प्रसिद्धम्, पाशपङ्कजे च प्रसिद्धे, एवं दशायुधानि करेषु

यस्य । शुण्डाग्रे पुष्करे जाग्रत्स्थितो घटो रत्नपूर्णो हेमकुम्भो यस्य ।

कमलहस्तया प्रियया दक्षिणहस्तेनालिङ्गितं माणिक्यप्रतिमं शोणच्छविं

सर्वेश्वरं महागणपतिमाशास्महे ॥

दानाम्भःपरिमेदुरप्रसृमरव्यालम्बिरोलम्बभृ-

त्सिन्दूरारुणगण्डमण्डलयुगव्याजात्प्रशस्तिद्वयम् ।

त्रैलोक्येष्टाविधानवर्णसुभगं यः पद्मरागोपमं

धत्ते स श्रियमातनोतु सततं देवो गणानां पतिः ॥ ५॥

दानाम्भसा मदाम्बुना परिमेदुरं व्याप्तं प्रसृमरान्व्यालम्बिनो

रोलम्बान्भ्रमरान्बिभर्तीति प्रसृमरव्यालम्बिरोलम्बभृत् ।

सिन्दूरेणारुणमेतादृशं कुम्भप्रदेशद्वयं तस्य

मिषात्त्रैलोक्येष्टविधान्वर्णसुभगं त्रिभुवनशुभविध्यक्षरमनोज्ञम् ।

पद्मरागोपमं पद्मरागो लोहितकस्तदुपमं प्रशस्तिद्वयं यो धत्ते स

गणानां पतिर्देवः सततं श्रियमातनोतु । यथा मृदम्बुलिप्ते दारुफलके

रक्तचूर्णं दत्त्वाक्षराणि, तथा दानाम्बुलिप्ते सिन्दूरवति कुम्भस्थले

भ्रमरा इत्युक्तं भवति ॥

भ्राम्यन्मन्दरघूर्णनापरवशक्षीराब्धिवीचिच्छटा-

सच्छायाश्चलचामरव्यतिकरश्रीगर्वसर्वंकृषाः ।

दिक्कान्ताघनसारचन्दनरसासाराः श्रयन्तां मनः

स्वच्छन्दप्रसरप्रलिप्तवियतो हेरम्बदन्तत्विषः ॥ ६॥

हेरम्बदन्तत्विषो मनः श्रयन्ताम् । किंभूताः । भ्राम्यतो

मन्दरस्य घूर्णनावृत्तयस्तदायत्तस्य क्षीराब्धेर्वीचयो

लहर्यस्तासां छटा अग्रभागास्तैः सदृशाः । पुनः कीदृशाः ।

चलचामरव्यतिकरश्रीगर्वसर्वंककृषाः । व्यतिकरो

व्यतिषङ्गः । दिक्कान्तेत्यादिरूपकम् । घनसारः कर्पूरः । तथा

स्वच्छन्दप्रसरप्रलिप्तवियतोऽनल्पसंचाराकीर्णाकाशाः । एतेन त्विषां

बहुत्वं व्यज्यते ॥

मुक्ताजालकरम्बितप्रविकसन्माणिक्यपुञ्जच्छटा-

कान्ताः कम्बुकदम्बचुम्बितघनाभोगप्रवालोपमाः ।

ज्योत्स्नापूरतरङ्गमन्थरतरत्संध्यावयस्याश्चिरं

हेरम्बस्य जयन्ति दन्तकिरणाकीर्णाः शरीरत्विषः ॥ ७॥

मौक्तिकसमूहमिश्रितप्रदीप्तमाणिक्यसमूहच्छटावत्कान्ता मनोहराः ।

शङ्खसमूहसंगतविस्तीर्णविद्रुमसमाः । ज्योत्स्नापूरतरङ्गे मन्थरं

तरन्ती चासौ संध्या च तस्या वयस्याः साम्यात्सख्यः । एतादृशा हेरम्बस्य

दन्तकिरणैर्व्याप्ताः शरीरत्विषश्चिरं जयन्ति ॥

शुण्डाग्राकलितेन हेमकलशेनावर्जितेन क्षर-

न्नानारत्नचयेन साधकजनान्संभावयन्कोटिशः ।

दानामोदविनोदलुब्धमधुपप्रोत्सारणाविर्भव-

त्कर्णान्दोलनखेलनो विजयते देवो गणग्रामणीः ॥ ८॥

शुण्डाप्रधृतसुवर्णकलशसंगृहीतेन क्षरता

बहुत्वाद्बहिरपि निर्गच्छता मुक्तामाणिक्यादिरत्नसमूहेन कोटिशः

साधकजनान्संभावयन्नसंख्यातानुपासकान्सम्पदा वर्धयन् ।

दानेत्यादि । आमोदो गन्धहर्षयोः । प्रोत्सारणमुच्चाटनं

तदर्थमाविर्भवत्कर्णान्दोलनक्रीडः । गणानामीश्वरो देवो विजयते ॥

हेरम्बं प्रणमामि यस्य पुरतः शाण्डिल्यमूले श्रिया

बिभ्रत्याम्बुरुहे समं मधुरिपुस्ते शङ्खचक्रे वहन् ।

न्यग्रोधस्य तले सहाद्रिसुतया शंभुस्तया दक्षिणे

बिभ्राणः परशुं त्रिशूलमितया पाशाङ्कुशाभ्यां शुभम् ॥ ९॥

शाण्डिल्यमूले बिल्ववृक्षस्याधो यस्य महागणपतेः पुरतोऽग्रभागे पद्मे

बिभ्रत्या श्रिया समं ते प्रसिद्धे शङ्खचक्रे वहन्मधुरिपुर्विष्णुरस्ति ।

तथा यस्य दक्षिणे न्यग्रोधस्य तले वटवृक्षाधः पाशाङ्कुशाभ्यामितया

सहितयाद्रिसुतया पार्वत्या सह परशुं त्रिशूलं च बिभ्राणः शंभुः

शिवोऽस्ति ॥

पश्चात्पिप्पलमाश्रितो रतिपतिर्देवस्य रत्योत्पले

बिभ्रत्या सममैक्षवं धनुरिषून्पौष्पान्वहन्पञ्च च ।

वामे चक्रगदाधरः स  भगवान्क्रोडः प्रियंगोस्तले

हस्तोद्यच्छुकशालिमञ्जरिकया देव्या धरण्या सह ॥ १०॥

देवस्य पश्चिमे पिप्पलवृक्षस्याध उत्पले बिभ्रत्या रत्या सममैक्षवं

धनुः पञ्च पौष्पानिषूंश्च वहन् रतिपतिः कामदेवोऽस्ति । अस्य च वामे

प्रियंगुवृक्षाधो हस्तोद्यच्छुकशालिमञ्जरिकयैकस्मिन्करे कीरमन्यत्र

कलमकणिशं बिभ्रत्या धरण्या सह स प्रसिद्धो भगवान्क्रोडो वराहोऽस्ति

तं हेरम्बं प्रणमामीति पूर्वेणान्वयः ॥

षट्कोणाश्रिषु षट्सु षड् गजमुखाः पाशाङ्कुशाभीवरा-

न्बिभ्राणाः प्रमदासखाः पृथुमहाशोणाश्मपुञ्जत्विषः ।

आमोदः पुरतः प्रमोदसुमुखौ तं चाभितो दुर्मुखः

पश्चात्पार्श्वगतोऽस्य विघ्न इति यो विघ्नकर्तेति च ॥ ११॥

षट्कोणस्य पीठस्य षट्स्वश्रिषु पालीषु षड् गजमुखा ध्येयाः ।

कीदृशास्ते । पाशाङ्कुशाभयवरान्हस्तेषु बिभ्राणाः । प्रमदानां सखाय

इति प्रमदासखाः । भार्यासहिता इत्यर्थः । पृथुश्चासौ महाशोणाश्मनां

पद्मरागाणां पुञ्जस्तद्वत्त्विट् कान्तिर्येषां ते । यदि 'पृथुमहाः'

इति विसर्गान्तः पाठस्तदा भिन्नं पदम् । पृथुर्महो येषां ते ।

अकारान्तोऽपि महशब्दोऽस्ति । तेषां नामान्याह - पुरतोऽग्रकोण आमोदः ।

तं चामोदमभितः प्रमोदसुमुखौ । पुरः कल्पितपूर्वदिगपेक्षयाग्निकोणे

प्रमोदः, एवमीशानकोणे सुमुख इत्यर्थः । पश्चात्पश्चिमकोणे दुर्मुखः ।

अस्य दुर्मुखस्य विघ्न इति यस्य नाम स एकस्मिन्पार्श्वे विघ्नकर्तेति

यस्य नाम स द्वितीयपार्श्वेऽस्ति । अर्थादेको नैरृत्यकोणे, अपरो वायव्ये

वर्तते ॥

आमोदादिगणेश्वरप्रियतमास्तत्रैव नित्यं स्थिताः

कान्ताश्लेषरसज्ञमन्थरदृशः सिद्धिः समृद्धिस्ततः ।

कान्तिर्या मदनावतीत्यपि तथा कल्पेषु या गीयते

सान्या यापि मदद्रवा तदपरा द्राविण्यमूः पूजिताः ॥ १२॥

कान्तस्य स्वस्वभर्तुरालिङ्गनरसं जानन्त्यत एव मन्थरा रागिणी दृग्यासां

ताः । आमोदादीनां पूर्वश्लोकोक्तानां षण्णां भार्यास्तेषां समीपे स्थिता ध्येयाः ।

तासां नामानि च - सिद्धिः, समृद्धिः, कान्तिः, मदनावती, मदद्रवा,

द्राविणी चेति ॥

आश्लिष्टौ वसुधेत्यथो वसुमती ताभ्यां सितालोहितौ
वर्षन्तौ वसु पार्श्वयोर्विलसतस्तौ शङ्खपद्मौ निधी ।
अङ्गान्यन्वथ मातरश्च परितः शक्रादयोऽब्जाश्रया-
स्तद्बाह्ये कुलिशादयः परिपतत्कालानलज्योतिषः ॥ १३॥

वसुधया वसुमत्या च क्रमेणालिङ्गितौ शुक्लरक्तवर्णौ धनं वर्षन्तौ
तौ शङ्खपद्मसंज्ञौ प्रसिद्धौ निधी षट्कोणपार्श्वयोर्विलसतः ।
तयोर्ध्यानं कुर्यादित्यर्थह । अनु निधिध्यानानन्तरं हृदयानि
षडङ्गानि ध्यायेत् । परितो ब्राह्म्याद्या अष्ट मातरो ध्येयाः ।
षट्कोणाद्बहिःस्थितेऽष्टदलकमल इन्द्रादयो दिक्पालास्तद्बाह्ये तेषां समीप
एव परिपतत्कालानलज्योतिषः प्रदीप्तस्वरूपा इन्द्रादीनां हेतयो वज्राद्या
ध्येयाः ॥

इथं विष्णुशिवादितत्त्वतनवे श्रीवक्रतुण्डाय हुं-
काराक्षिप्तसमस्तदैत्यपृतनाव्राताय दीप्तत्विषे ।
आनन्दैकरसावबोधलहरीविध्वस्तसर्वोर्मये
सर्वत्र प्रथमानमुग्धमहसे तस्मै परस्मै नमः ॥ १४॥

'हेरम्बं प्रणमामि' (९।१०) इति श्लोकाभ्यां
विष्णुशिवादिस्वरूपैस्तनुर्मूर्तिर्यस्य स तस्मै । आदिपदात्स्मरक्रोडौ ।
हुंकारमात्रेण निरस्तसमस्तासुरसैन्यसमूहाय दीप्तकान्तये । आनन्देति ।
निरतिशयसुखस्फुरणतरङ्गैर्दूरीकृतसम्पूर्णोर्मये । ऊर्मयः
षड्भावविकाराः । ते च - जायते, अस्ति, वर्धते, विपरिणमते,
अपक्षीयते, नश्यतीति च । आनन्दैकरसावयोधलहरीभिर्विध्वस्ताः
सर्वेषां साधकानामूर्मयः षडिन्द्रियजन्या वृत्तयो यस्मादित्येके ।
ऊर्मिशब्देनाविद्यादयो योगशास्त्रप्रसिद्धाः क्लेशाः । सर्वत्र प्रथमानं
मुग्धं सुन्दरं महो यस्य तस्मै परस्मै जगतोऽन्यस्मै नमः ॥

सेवाहेवाकिदेवासुरनरनिकरस्फारकोटीरकोटी-
कोटिव्याटीकमानद्युमणिसममणिश्रेणिभावेणिकानाम् ।

राजन्नीराजनश्रीसखचरणनखद्योतविद्योतमानः

श्रेयः स्थेयः स देयान्मम विमलदृशो बन्धुरं सिन्धुरास्यः ॥ १५॥

सेवायां हेवाकोऽभिलाषो येषाम् । अहमग्रेऽहमग्रे भवामीतीच्छा ।

अहंपूर्विकेति यावत् । ते च ते देवासुरनराणां समूहास्तेषां

देदीप्यमानमुकुटाग्राणां या कोटिः संख्याविशेषस्तत्र व्याटीकमानाः सुसंगताः

सूर्यतुल्यरत्नपङ्क्तिकान्तिप्रवाहास्तेषाम् । राजन्ती नीराजनश्रीरारात्रिकशोभा

तस्याः सखायस्ते च ते चरणनखाश्च तेषां द्योतेन प्रकाशेन

विद्योतमानः स प्रसिद्धः सिन्धुरास्यो गजमुखः । हे विमलदृशः

पण्डिताः । मम बन्धुरं रम्यं स्थेयः स्थिरतरं श्रेयः कल्याणं देयात् ।

ममेत्यस्य वा विमलदृश इति विशेषणम् । 'विमलदृशा' इति पाठे तु

सौम्यावलोकनेन श्रेयो दद्यादित्यर्थः ॥

एतेन प्रकटरहस्यमन्त्रमालागर्भेण स्फुटतरसंविदा स्तवेन ।

यः स्तौति प्रचुरतरं महागणेशं तस्येयं भवति वशंवदा त्रिलोकी

॥ १६॥

स्फुटतरसंविदेत्यनेन स्तोत्रे प्रसादगुणः सूचितः । प्रचुरतरः

मुहुर्मुहुः । अन्यत्स्पष्टम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीराघवचैतन्यविरचितं

महागणपतिस्तोत्रं तच्छिष्यकृतया टिप्पण्या समेतं समाप्तम् ।

*********************************

॥ श्रीमहागणपत्येकविंशतिनामस्तोत्रम् ॥

गणञ्जयो गणपतिर्हेरम्बो धरणीधरः ।

महागणपतिर्बुद्धिप्रियः क्षिप्रप्रसादनः ॥ १॥

अमोघसिद्धिरमृतमन्त्रश्चिन्तामणिर्निधिः ।

सुमङ्गलो बीजमाशापूरको वरदः कलः ॥ २॥

काश्यपो नन्दनो वाचासिद्धो ढुण्ढिर्विनायकः ॥ ३॥

॥ इति श्रीगणेशपुराणे उपासनाखण्डे ईश्वरगणेशसंवादे श्री

महागणपत्येकविंशतिनाम स्तोत्रं सम्पूर्णम् ॥

******************************

॥ वक्रतुण्डगणेशकवचम् ॥

श्री गणेशाय नमः ।

मौलिं महेशपुत्रोऽव्याद्भालं पातु विनायकः ।

त्रिनेत्रः पातु मे नेत्रे शूर्पकर्णोऽवतु श्रुती ॥ १॥

हेरम्बो रक्षतु घ्राणं मुखं पातु गजाननः ।

जिह्वां पातु गणेशो मे कण्ठं श्रीकण्ठवल्लभः ॥ २॥

स्कन्धौ महाबलः पातु विघ्नहा पातु मे भुजौ ।

करौ परशुभृत्पातु हृदयं स्कन्दपूर्वजः ॥ ३॥

मध्यं लम्बोदरः पातु नाभिं सिन्दूरभूषितः ।

जघनं पार्वतीपुत्रः सक्थिनी पातु पाशभृत् ॥ ४॥

जानुनी जगतां नाथो जङ्घे मूषकवाहनः ।

पादौ पद्मासनः पातु पादाधो दैत्यदर्पहा ॥ ५॥

एकदन्तोऽग्रतः पातु पृष्ठे पातु गणाधिपः ।

पार्श्वयोर्मोदकाहारो दिग्विदिक्षु च सिद्धिदः ॥ ६॥

व्रजतस्तिष्ठतो वापि जाग्रतः स्वपतोऽश्नतः ।

चतुर्थीवल्लभो देवः पातु मे भुक्तिमुक्तिदः ॥ ७॥

इदं पवित्रं स्तोत्रं च चतुर्थ्यां नियतः पठेत् ।

सिन्दूररक्तः कुसुमैर्दूर्वया पूज्य विघ्नपम् ॥ ८॥

राजा राजसुतो राजपत्नी मन्त्री कुलं चलम् ।

तस्यावश्यं भवेद्वश्यं विघ्नराजप्रसादतः ॥ ९॥

समन्त्रयन्त्रं यः स्तोत्रं करे संलिख्य धारयेत् ।

धनधान्यसमृद्धिः स्यात्तस्य नास्त्यत्र संशयः ॥ १०॥

अस्य मन्त्रः ।

ऐं क्लीं ह्रीं वक्रतुण्डाय हुं ।

रसलक्षं सदैकाग्र्यः षडङ्गन्यासपूर्वकम् ।

हुत्वा तदन्ते विधिवदष्टद्रव्यं पयो घृतम् ॥ ११॥

यं यं काममभिध्यायन् कुरुते कर्म किञ्चन ।

तं तं सर्वमवाप्नोति वक्रतुण्डप्रसादतः ॥ १२॥

भृगुप्रणीतं यः स्तोत्रं पठते भुवि मानवः ।

भवेदव्याहतैश्वर्यः स गणेशप्रसादतः ॥ १३॥

॥ इति गणेशरक्षाकरं स्तोत्रं समाप्तम् ॥

********************************

॥ वरदगणेशकवचम् ॥

श्रीगणेशाय नमः ।

श्रीभैरव उवाच ।

महादेवि गणेशस्य वरदस्य महात्मनः ।

कवचं ते प्रवक्ष्यामि वज्रपञ्जरकाभिधम् ॥ १॥

अस्य श्रीमहागणपतिवज्रपञ्जरकवचस्य श्रीभैरव ऋषिः ,

गायत्र्यं छन्दः , श्रीमहागणपतिर्देवता , गं बीजं ,

ह्रीं शक्तिः , कुरुकुरु कीलकं , वज्रविद्यादिसिद्ध्यर्थे

महागणपतिवज्रपञ्जरकवचपाठे विनियोगः ।

ध्यानम् ।

विघ्नेशं विश्ववन्द्यं सुविपुलयशसं लोकरक्षाप्रदक्षं

साक्षात् सर्वापदासु प्रशमनसुमतिं पार्वतीप्राणसूनुम् ।

प्रायः सर्वासुरेन्द्रैः ससुरमुनिगणैः साधकैः पूज्यमानं

कारुण्येनान्तरायामितभयशमनं विघ्नराजं नमामि ॥ २॥

ॐश्रींह्रींगं शिरः पातु महागणपतिः प्रभुः ।

विनायको ललाटं मे विघ्नराजो भ्रुवौ मम ॥ ३॥

पातु नेत्रे गणाध्यक्षो नासिकां मे गजाननः ।

श्रुति मेऽवतु हेरम्बो गण्डौ मोदकाशनः ॥ ४॥

द्वैमातरो मुखं पातु चाधरौ पात्वरिन्दम् ।

दन्तान् ममैकदन्तोऽव्याद् वक्रतुण्डोऽवताद् रसाम् ॥ ५॥

गाङ्गेयो मे गलं पातु स्कन्धौ सिंहासनोऽवतु ।

विघ्नान्तको भुजौ पातु हस्तौ मूषकवाहनः ॥ ६॥

ऊरू ममावतान्नित्यं देवस्त्रिपुरघातनः ।

हृदयं मे कुमारोऽव्याज्जयन्तः पार्श्वयुग्मकम् ॥ ७॥

प्रद्युम्नो मेऽवतात् पृष्ठं नाभिं शङ्करनन्दनः ।

कटिं नन्दिगणः पातु शिश्नं वीरेश्वरोऽवतु ॥ ८॥

मेढ्रे मेऽवतु सौभाग्यो भृङ्गिरीटी च गुह्यकम् ।

विराटकोऽवतादूरू जानू मे पुष्पदन्तकः ॥ ९॥

जङ्घे मम विकर्तोऽव्याद् गुल्फावन्त्यगणोऽवतु ।

पादौ चित्तगणः पातु पादाधो लोहितोऽवतु ॥ १०॥

पादपृष्ठं सुन्दरोऽव्याद् नूपुराढ्यो वपुर्मम ।

विचारो जठरं पातु भूतानि चोग्ररूपकः ॥ ११॥

शिरसः पादपर्यन्तं वपुः सुप्तगणोऽवतु ।

पादादिमूर्धपर्यन्तं वपुः पातु विनर्तकः ॥ १२॥

विस्मारितं तु यत् स्थानं गणेशस्तत् सदावतु ।

पूर्वे मां ह्रीं करालोऽव्यादाग्नेये विकरालकः ॥ १३॥

दक्षिणे पातु संहारो नैरृते रुरुभैरवः ।

पश्चिमे मां महाकालो वायौ कालाग्निभैरवः ॥ १४॥

उत्तरे मां सितास्युऽव्यादैशान्यामसितात्मकः ।

प्रभाते शतपत्रोऽव्यात् सहस्रारस्तु मध्यमे ॥ १५॥

दन्तमाला दिनान्तेऽव्यान्निशि पात्रं सदावतु ।

कलशो मां निशीथेऽव्यान्निशान्ते परशुस्तथा ॥ १६॥

सर्वत्र सर्वदा पातु शङ्खयुग्मं च मद्वपुः ।

ॐॐ राजकुले हहौं रणभये ह्रींह्रीं कुद्यूतेऽवतात्

श्रींश्रीं शत्रुगृहे शशौं जलभये क्लींक्लीं वनान्तेऽवतु ।

ग्लौंग्लूंग्लैंग्लंगुं सत्वभीतिषु महाव्याध्यार्तिषु ग्लौंगगौं

नित्यं यक्षपिशाचभूतफणिषु ग्लौंगं गणेशोऽवतु ॥ १७॥

इतीदं कवचं गुह्यं सर्वतन्त्रेषु गोपितम् ।

वज्रपञ्जरनामानं गणेशस्य महात्मनः ॥ १८॥

अङ्गभूतं मनुमयं सर्वाचारैकसाधनम् ।

विनानेन न सिद्धिः स्यात् पूजनस्य जपस्य च ॥ १९॥

तस्मात् तु कवचं पुण्यं पठेद्वा धारयेत् सदा ।

तस्य सिद्धिर्महादेवि करस्था पारलौकिकी ॥ २०॥

यंयं कामयते कामं तं तं प्राप्नोति पाठतः ।

अर्धरात्रे पठेन्नित्यं सर्वाभीष्टफलं लभेत् ॥ २१॥

इति गुह्यं सुकवचं महागणपतेः प्रियम् ।

सर्वसिद्धिमयं दिव्यं गोपयेत् परमेश्वरि ॥ २२॥

॥ इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये महागणपतिकवचं समाप्तम् ॥

******************************

॥ विघ्नविनाशकस्तोत्रम् ॥

ईशानो ढुण्ढिराजो गणपतिरखिलाधौघनाशो वरेण्यो

देवानामग्रण्यः सकलगुणनिधिर्योऽग्रपूजाधिकारी । विद्याधीशो बलिष्ठः षडरिविदलनः सिद्धिबुद्धिप्रदाता

जीवानां मुक्तिहेतुर्जयति भवहरः श्रीगुरुः सौख्यसिन्धुः ॥ १॥

विघ्नान्हन्तीति योऽसौ श्रुतिषु निगदितो विघ्नहेतिप्रसिद्धो

व्यक्तेवाऽव्यक्तरूपे प्रणववपुरयं ब्रह्मरूपः स्वमात्रः । यो व्यक्तो भक्तहेतुर्निरवधिरमलो निर्गुणो निष्क्रियोपि

भक्तानां मुक्तिहेतौ विदलयति कृतं मायिकस्याद्वयः सः ॥ २॥

सर्पोरज्जुर्हि यद्वन्न भुजग इति सा कथ्यते रज्जुसर्पे

विश्वं ब्रह्मैव तद्वन्न च जगदिति तत्खल्विदं ब्रह्मवाक्ये । सत्ता सामान्यरूपात्कथितमपि च यो दृश्यरूपो न तादृक्

दृश्यं यद्विघ्नकृत्स्यात्तदपनयति यो बोधतो विघ्नहाऽयम् ॥ ३॥

सर्वं ब्रह्मस्वरूपं परमपरयुतं विश्वमाभाति यच्च

चैतन्यस्याद्द्वयत्वाद् गदित इति च यो दृश्यरूपोऽप्यरूपः ।

माया तत्सर्वकार्यं जडमिति कथितं यं विनाभावमेति

सर्वत्रावस्थितत्वात्तदनुभव इति स्वादनाद्योऽद्वयः सः ॥ ४॥

भात्यस्त्यानन्दरूपोऽसदसुखजडतारूपदृश्येऽस्ति यो वै

नित्यो नित्यादिकानां भवति किल तथा चेतनश्चेतनानाम् ।

सर्वस्यैतस्य माया-कृतसुखमिह यत् प्रार्थ्यते तद्गणेशो

यस्तं सर्वादिभूतं भजत जगति भोः सारभूतं वरेण्यम् ॥ ५॥

नित्यं यन्निर्विकारं निरतिशयसुखं ब्रह्मतन्मत्स्वरूपं

ज्ञात्वा विश्वातिभूतः सकलविदलयन् स्वार्चिषा स्वस्थ आसे । माया तत्कार्य-मेतत्स्पृशति न मयि वा दृश्यते नाऽविरासीन्

मायायाः सर्वशक्तेः पर इति सततं यः स एवाद्वयोऽहम् ॥ ६॥

ब्रह्मानन्दकरोऽयमात्ममतिदः श्रीढुण्ढिराजस्तवो

विघ्नाघौघघनप्रचण्डपवनः कामेभपञ्चाननः ।

मायाव्याकुलप्रमत्तमरुडो मोहाटवीहव्यवाड् अज्ञानान्धनिवारणैकतरणिर्भेदाब्धिकुम्भोद्भवः ॥ ७॥

इति श्रीभगवता श्रीधरस्वामीना विरचितं

विघ्नविनाशकस्तोत्रं सम्पूर्णम् ॥

*******************************

॥ श्रीविघ्नेश्वराष्टोत्तर शतनामस्तोत्रम् ॥

विनायको विघ्नराजो गौरीपुत्रो गणेश्वरः ।

स्कंदाग्रजोव्ययः पूतो दक्षोऽध्यक्षो द्विजप्रियः ॥ १॥

अग्निगर्वच्छिद इन्द्रश्रीप्रदः ।

वाणीप्रदोअः अव्ययः सर्वसिद्धिप्रदश्शर्वतनो शर्वरीप्रियः ॥ २॥

सर्वात्मकः सृष्टिकर्ता देवोनेकार्चितश्शिवः ।

शुद्धबुद्धि प्रियश्शांतो ब्रह्मचारी गजाननः ॥ ३॥

द्वैमात्रेयो मुनिस्तुत्यो भक्तविघ्नविनाशनः ।

एकदन्तश्छतुर्बाहुश्छतुरश्शक्तिसंयुतः ॥ ४॥

लम्बोदरश्शूर्पकर्णो हरर्ब्रह्म विदुत्तमः ।

कालो ग्रहपतिः कामी सोमसूर्याग्निलोचनः ॥ ५॥

पाशाङ्कुशधरश्चण्डो गुणातीतो निरञ्जनः ।

अकल्मषस्स्वयंसिद्धस्सिद्धार्चितः पदाम्बुजः ॥ ६॥

बीजपूरफलासक्तो वरदश्शाश्वतः कृतिः ।

द्विजप्रियो वीतभयो गदी चक्रीक्षुचापधृत् ॥ ७॥

श्रीदोज उत्पलकरः श्रीपतिः स्तुतिहर्षितः ।

कुलाद्रिभेत्ता जटिलः कलिकल्मषनाशनः ॥ ८॥

चन्द्रचूडामणिः कान्तः पापहारी समाहितः ।

अश्रितश्रीकरस्सौम्यो भक्तवांछितदायकः ॥ ९॥

शान्तः कैवल्यसुखदस्सच्चिदानन्द विग्रहः ।

ज्ञानी दयायुतो दांतो ब्रह्मद्वेषविवर्जितः ॥१०॥

प्रमत्तदैत्यभयदः श्रीकंथो विबुधेश्वरः ।

रामार्चितोविधिर्नागराजयज्ञोपवीतकः ॥११॥

स्थूलकंठः स्वयंकर्ता सामघोषप्रियः परः ।

स्थूलतुण्डोऽग्रणी धीरो वागीशस्सिद्धिदायकः ॥ १२॥

दूर्वाबिल्वप्रियोऽव्यक्तमूर्तिरद्भुतमूर्तिमान् ।

शैलेन्द्रतनुजोत्सङ्गखेलनोत्सुकमानसः ॥ १३॥

स्वलावण्यसुधासारो जितमन्मथविग्रहः ।

समस्तजगदाधारो मायी मूषकवाहनः ॥१४॥

हृष्टस्तुष्टः प्रसन्नात्मा सर्वसिद्धिप्रदायकः ।

अष्टोत्तरशतेनैवं नाम्नां विघ्नेश्वरं विभुं ॥ १५॥

तुष्टाव शंकरः पुत्रं त्रिपुरं हंतुमुत्यतः ।

यः पूजयेदनेनैव भक्त्या सिद्धिविनायकम् ॥१६॥

दूर्वादलैर्बिल्वपत्रैः पुष्पैर्वा चंदनाक्षतैः ।

सर्वान्कामानवाप्नोति सर्वविघ्नैः प्रमुच्यते ॥

***************************

॥ श्रीविनायकविनतिः ॥

श्रीगणेशाय नमः ।

हेरम्बमम्बामवलम्बमानं लम्बोदरं लम्ब-वितुण्ड-शुण्डम् ।

उत्सङ्गमारोपयितुं ह्यपर्णां हसन्तमन्तर्हरिरूपमीडे ॥ १॥

मिलिन्द-वृन्द-गुञ्जनोल्लसत्कपोल-मण्डलं

श्रुति-प्रचालन-स्फुरत्समीरवीजिताननम् ।

वितुण्ड-शुण्डमण्डल-प्रसार-शोभिविग्रहं

निवारिताघ-विघ्नराशिमङ्कलालपं भजे ॥ २॥

गजेन्द्र-मौक्तिकालि-लग्न-कम्बुकण्ठ-पीठकं

सुवर्णवल्लि-मण्डली-विधानबद्ध-दन्तकम् ।

प्रमोदि-मोदकाञ्चितं करण्डकं कराम्बुजे

दधानमम्बिकामनो विनोद-मोददायकम् ॥ ३॥

गभीर-नाभि-तुन्दिलं सुपीत-पाट-धौतकं

प्रतप्त-हाटकोपवीत-शोभिताङ्ग-सङ्ग्रहम् ।

सुरा-ऽसुरार्चितांघ्रिकं शुभक्रिया सहायकं

महेशचित्त-चायकं विनायकं नमाम्यहम् ॥ ४॥

गजाननं गणेश्वरं गिरीशजा-कुमारकं

महेश्वरात्मजं मुनीन्द्र-मानसाधि-धावकम् ।

मतिप्रकर्ष-मण्डितं सुभक्त-चित्त-मोदकं

भजज्जनालिघोर-विघ्नघातकं भजाम्यहम् ॥ ५॥

लसल्ललाट-चन्द्रकं क्रियाकृतेऽस्ततन्द्रकं

महेन्द्रवन्द्य-पादुकं षडाननाग्रजानुजम् ।

अहिं निवार्य मूषकाधिरक्षकं मयूरकं

विलोक्य सुप्रसन्नमानसं गणाधिपं भजे ॥

हरिं निरीक्ष्य भीतिचञ्चलाक्षमेत्य मातरं

निजावनाय पार्श्वमागतां विलोक्य सत्वरम् ।

तदीय-वक्षसि प्रविश्य सुस्थिरं परे वरे

नमामि सेवकालिशोक-शोषकं निरन्तरम् ॥ ७॥

निलिम्प-लोकमण्डलो-प्रपूर्ण-पूजनीयकं

सुभक्त भक्तिभावना विभाविताखिलप्रदम् ।

प्रभूत भूति भावकं दुरूह दुःख पावकं

व्रजेश्वरांश-सम्भवं विद्युप्रभासितालिकम् ॥ ८॥

गिरीन्द्र-नन्दिनी-कराम्बुज-प्रसाधिताऽलकम्

विलोल-शुण्ड-चुम्बितोग्र-भालचन्द्र-बालकम् ।

निजाखु-खेलनापरं कखन्तमस्तचापलं

नमामि सिद्धि-बुद्धि-हस्त-चालि-पञ्चचामरम् ॥ ९॥

विनायकस्य विनतिं पठतां श्रृण्वतां सताम् ।

सिद्धि-बुद्धि-प्रदां सन्ति मङ्गलानि पदे पदे ॥ १०॥

॥ इति पण्डित-श्रीशिवप्रसादद्विवेदि-विरचिता विनायक-विनतिः समाप्तः ॥

********************************

॥ श्रीविनायकस्तोत्रम् ॥

ॐ

मूषिकवाहन मोदकहस्त चामरकर्ण विलम्बितसूत्र ।

वामनरूप महेश्वरपुत्र विघ्नविनायक पाद नमस्ते ॥

देवदेवसुतं देवं जगद्विघ्नविनायकम् ।

हस्तिरूपं महाकायं सूर्यकोटिसमप्रभम् ॥ १॥

वामनं जटिलं कान्तं ह्रस्वग्रीवं महोदरम् ।

धूम्रसिन्दूरयुद्गण्डं विकटं प्रकटोत्कटम् ॥ २॥

एकदन्तं प्रलम्बोष्ठं नागयज्ञोपवीतिनम् ।

त्र्यक्षं गजमुखं कृष्णं सुकृतं रक्तवाससम् ॥ ३॥

दन्तपाणिं च वरदं ब्रह्मण्यं ब्रह्मचारिणम् ।

पुण्यं गणपतिं दिव्यं विघ्नराजं नमाम्यहम् ॥ ४॥

देवं गणपतिं नाथं विश्वस्याग्रे तु गामिनम् ।

देवानामधिकं श्रेष्ठं नायकं सुविनायकम् ॥ ५॥

नमामि भगवं देवं अद्भुतं गणनायकम् ।

वक्रतुण्ड प्रचण्डाय उग्रतुण्डाय ते नमः ॥ ६॥

चण्डाय गुरुचण्डाय चण्डचण्डाय ते नमः ।

मत्तोन्मत्तप्रमत्ताय नित्यमत्ताय ते नमः ॥ ७॥

उमासुतं नमस्यामि गङ्गापुत्राय ते नमः ।

ओङ्काराय वषट्कार स्वाहाकाराय ते नमः ॥ ८॥

मन्त्रमूर्ते महायोगिन् जातवेदे नमो नमः ।

परशुपाशकहस्ताय गजहस्ताय ते नमः ॥ ९॥

मेघाय मेघवर्णाय मेघेश्वर नमो नमः ।

घोराय घोररूपाय घोरघोराय ते नमः ॥ १०॥

पुराणपूर्वपूज्याय पुरुषाय नमो नमः ।

मदोत्कट नमस्तेऽस्तु नमस्ते चण्डविक्रम ॥ ११॥

विनायक नमस्तेऽस्तु नमस्ते भक्तवत्सल ।

भक्तप्रियाय शान्ताय महातेजस्विने नमः ॥ १२॥

यज्ञाय यज्ञहोत्रे च यज्ञेशाय नमो नमः ।

नमस्ते शुक्लभस्माङ्ग शुक्लमालाधराय च ॥ १३॥

मदक्लिन्नकपोलाय गणाधिपतये नमः ।

रक्तपुष्प प्रियाय च रक्तचन्दन भूषित ॥ १४॥

अग्निहोत्राय शान्ताय अपराजय्य ते नमः ।

आखुवाहन देवेश एकदन्ताय ते नमः ॥ १५॥

शूर्पकर्णाय शूराय दीर्घदन्ताय ते नमः ।

विघ्नं हरतु देवेश शिवपुत्रो विनायकः ॥ १६॥

फलश्रुति

जपादस्यैव होमाच्च सन्ध्योपासनसस्तथा ।

विप्रो भवति वेदाढ्यः क्षत्रियो विजयी भवेत् ॥

वैश्यो धनसमृद्धः स्यात् शूद्रः पापैः प्रमुच्यते ।

गर्भिणी जनयेत्पुत्रं कन्या भर्तारमाप्नुयात् ॥

प्रवासी लभते स्थानं बद्धो बन्धात् प्रमुच्यते ।

इष्टसिद्धिमवाप्नोति पुनात्यासत्तमं कुलं ॥

सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम् ।

सर्वकामप्रदं पुंसां पठतां श्रुणुतामपि ॥

॥ इति श्रीब्रह्माण्डपुराणे स्कन्दप्रोक्त विनायकस्तोत्रं सम्पूर्णम् ॥

******************************

॥ विनायकस्तोत्रम् समन्त्रकम् ॥

वा रणास्यो द रघ्नोर्थ्य ए कदं त श्शिवात्मकः

सु शर्मकृ त्ता रकोर्च्यः क विस्त त्पु रुषप्रियः दे वः पवि त्रे क्षणोर्द्यो दं ती चा रु स्त्रिलोचना

वा ग्मीशो मा या तीतात्मा ता पशो षा ख्य आखुगः न दीवंद्यो य मीशानो य शस्वी य शआस्पदः

द र्शनीयो वि घ्नराजो वि घ्नहा वि घ्नकृद्विराट्स

भ्यो हृतप् द्म निलयो द्म रस द्म विहापकः

र क्तङ्गोर्को हे ममाली हे रम्बो हे मंदष्ट्रक

स्व राट्प्रभा अ जोऽनन्तो व रेण्यो म तिमान् गुणी

ती र्थकीर्तिर् व रकरः क्र त्वीशो हा पितासुरः

कृ पाकरो धू म्रकेतुस् तुं दिलो दे ववल्लभः

त पस्वीशस् ता पहारो डा किनी वा रितो भयः

वि श्वप्रियो य क्षवन्द्यो य ष्टान य विवर्धनः

ना नारूपो धी र आद्यो धी मतां धी रकः सुधीः

य मीश्वरो म हाहस्ती म हात्मा म ह उत्तमः

क र्ताऽकर्ता हि तकरो हि तज्ञो हि तशासनः

स्तो ता स्तव्यस् तं त्रमूलस् तं त्रज्ञस् तं त्रविग्रहः

त्र यी वन्द्यो नो दनाज्ञो नो दना नो दितद्विजः

मि त्राभो म द नस्मेरो दं ती म रु दुपासितः दं डो प्रम तः शास्त्रार्यस् ती र्थमिं द्रः स्तोघहा। स त्यसन्धः प्र काशात्मा प्र सन्न प्र णतार्तिहा मं त्रविद्या चो दितात्मा चो दना चो दिताखिलः त्र यीधर्मो द शातीतो द क्षोऽभे द उमासुतः कं नः स दे यात् प्रणुतो यात् स पा यात् सदा भयात् इति श्रीवासुदेवानन्दसरस्वतिविरचितं समन्त्रकं विनायकस्तोत्रं सम्पूर्णम् ॥

*********************************

॥ विज्ञानगणराजस्तोत्रम् ॥

श्री गणेशायनमः ।

अत्रिरुवाच ।

श्रृणु पुत्र प्रवक्ष्यामि शान्तियोगं सनातनम् ।

ब्रह्मणा कथितं ह्येतद्येन शान्तोऽहमञ्जसा ॥ १॥

अस्माकं कुलदेवत्वं प्राप्तो गणपतिःप्रभुः ।

स वै देवाधिदेवानां कुलदेवः प्रकीर्तितः ॥ २॥

शान्तियोगस्वरूपं तं जानीहि त्वं महामते ।

भजस्व सुप्रयत्नेन तदा शान्तिमवाप्स्यसि ॥ ३॥

गणेशात्सर्वमुत्पन्नं तेन संस्थापितं सुत ।

तस्याराधनमात्रेण कृतकृत्याः शिवादयः ॥ ४॥

नामरूपात्मकं सर्वं जगद् ब्रह्म प्रकथ्यते ।

तदेव शक्तिरूपाख्यं ब्रह्मासद्रूपकं परम् ॥ ५॥

तत्रामृतमयं भानुमात्माकारेण संस्थितम् ।

सद्रूपं तं विजानीयाद् ब्रह्म वेदे प्रकीर्तितम् ॥ ६॥

तयोरभेदतो ब्रह्म समं सर्वत्र संस्थितम् ।

सदसन्मयगं विष्णुं जानीहि वेदवादतः ॥ ७॥

तेभ्यो विलक्षणस्तुर्या नेतिरूपः प्रकीर्तितः ।

निर्मोहः शिवसंज्ञश्च स्वाधीनं ब्रह्म तद्बुधैः ॥ ८॥

चतुर्णां ब्रह्मसंयोगे स्वानन्दः कथ्यते बुधैः ।

स वै मायामयः साक्षाद्गुणेशो वेदवादिभिः ॥ ९॥

अन्तर्बाह्याः क्रियाः सर्वा ब्रह्माकारः प्रदृश्यते ।

कर्मयोगः स विज्ञेयः संयोगः कर्मणां सुत ॥ १०॥

ज्ञानात्मचक्षुषा ज्ञानं यद्यद्भवति योगिनाम् ।

तेषामभेदको योगो ज्ञानयोगः प्रकीर्तितः ॥ ११॥

ज्ञानानां कर्मणाम् चैव भेदे योगः समात्मकः ।

आनन्दात्मकरूपोऽयं द्वैधनाशे स प्राप्यते ॥ १२॥

स्वेच्छया कर्मयोगश्च धृतो येन महात्मना ।

स्वेच्छया ज्ञानयोगश्च स्वेच्छयानन्दयोगकः ॥ १३॥

स्वेच्छया स त्रिभिर्हिनः सहजाख्यः प्रकथ्यते ।

सदा स्वाधीनरूपश्च स्वेच्छया क्रीडते स्वयम् ॥ १४॥

ब्रह्मभूतात्मको योगः स्वानन्दाख्यः प्रकीर्तितः ।

तत्र स्वाधीनता पुत्र पराधीना त्रिधा कृता ॥ १५॥

ब्रह्मणि ब्रह्मभूतस्य स्वतः परत एव च ।

उत्थानं नास्ति संयोगात्स्वस्वरूपिणि योगिनः ॥ १६॥

स्वानन्दे सुतसंयोगो जगतां ब्रह्मणां भवेत् ।

सर्वाभेदेन योगोऽयं तस्मान्मायासमन्वितः ॥ १७॥

अयोगात्मकयोगश्च सदा संयोगवर्जितः ।

जगतां ब्रह्मणां तत्र प्रवेशोऽतो न विद्यते ॥ १८॥

सदा निर्मायिको योगः स्वसंवेद्यविवर्जितः ।

स्वकीयाभेदहीनत्वान्निवृत्तिर्योगिभिर्धृता ॥ १९॥

ब्रह्म ब्रह्माणि संस्थं यन्नागतं न गतं पुनः ।

स्वानन्दनाशतस्तुभ्यं ब्रह्मभूतमयोगकम् ॥ २०॥

ब्रह्मस्वानन्दवासी स गणेशः कथ्यते बुधैः ।

स्वानन्दात्मात्मकः प्रोक्तो वेदेषु वेदवादिभिः ॥ २१॥

क्रीडात्मको गणेशानः स्वानन्दः परिकीर्तितः ।

संयोगात्मकरूपेण स्वस्वरूपेण तिष्ठति ॥ २२॥

क्रीडाहीनो गणेशानो योगरूपः प्रकीर्तितः ।

निरानन्दात्मकत्वेन सदा ब्रह्मणि संस्थितः ॥ २३॥

संयोगायोगयोगेन तयोर्नाशे गणेश्वरः ।

शान्तियोगात्मकः प्रोक्तो योगिभिर्योगसेवया ॥ २४॥

पूर्णयोगात्मकस्तत्र गणेशः परिकीर्तितः ।

मायायुक्तविहीनत्वं भ्रान्तिमात्रं प्रकीर्तितम् ॥ २५॥

पञ्चचित्तस्वरूपां त्वं बुद्धिं जानीहि पुत्रक ।

तत्र मोहकरी सिद्धिर्भ्रान्तिदा मोहरूपिणी ॥ २६॥

धर्मार्थकाममोक्षाणां सिद्धिर्भिन्ना प्रदृश्यते ।

ब्रह्मभूतमयी सिद्धिः कथिता योगिभिस्तथा ॥ २७॥

पञ्चधा चित्तवृत्तिर्या तत्र यद्बिम्बितं सुत ।

तदेव गणराजस्य रूपं बिम्बात्मकं परम् ॥ २८॥

धर्मार्थकाममोक्षेषु ब्रह्मभूतेषु यत्स्मृतम् ।

ऐश्वर्यं मोहदं जन्तुर्भ्रमति यत्र लालसः ॥ २९॥

पञ्चैश्वर्येषु यद्बिम्बं तदेव गणपस्य च ।

जीवं जानीहि पुत्र त्वं शान्तियोगस्य सेवया ॥ ३०॥

पञ्चचित्तप्रणाशे वै पञ्चैश्वर्ये लयं गतः ।

अधुना गणराजस्त्वं भविताऽसि न संशयः ॥ ३१॥

त्यजावधूतमार्गं त्वं भाववधूतमुख्यकः ।

अवधूय महच्चित्तं महदैश्वर्यमादरात् ॥ ३२॥

सदा शान्तिं भजस्व त्वं योगेन दत्त सत्वरम् ।

ददामि ते महामन्त्रं गणेशस्य विधानतः ॥ ३३॥

तत एकाक्षरं मन्त्रं ददौ पुत्राय भावतः ।

अत्रिर्योगविदां श्रेष्ठस्तं प्रणम्य ययावजः।३४ ।

साक्षाद्विष्णुस्वरूपश्च दत्तो योगविदांवरः ।

गङ्गाया दक्षिणे तीरे पूजयामास विघ्नपम् ॥ ३५॥

त्यक्त्वा भूमिस्वरूपं स शान्तिमास्थाय योगवित् ।

अभजत्तं तु भावेन गणपं हृदि चिन्तयन् ॥ ३६॥

महायोगी स्वयं दत्तो वर्षेणैकेन शौनक ।

शान्तिं प्राप्तो विशेषेण गाणपत्यो बभूव ह ॥ ३७॥

तं द्रष्टुं गणपस्तत्र ययौ भक्तं निजेच्छया ।

भक्तवात्सल्यभावेन दत्ताश्रमसुशान्तिदः ॥ ३८॥

तं दृष्ट्वा सहसोत्थाय प्रणनाम कृतांजलिः ।

तुष्टाव सुस्थिरो भूत्वा विघ्नेशं कुलदैवतम् ॥ ३९॥

दत्त उवाच ।

नमो गणपते तुभ्यं नमो योगस्वरूपिणे ।

योगिभ्यो योगदात्रे च शान्तियोगात्मने नमः ॥ ४०॥

सिद्धिबुद्धिपते तुभ्यं पञ्चचित्तप्रधारकम् ।

नानाविहारशीलाय गणेशाय नमो नमः ॥ ४१॥

सिद्धिदात्रे समस्तेभ्यो नानैश्वर्यप्रधारिणे ।

मोहहन्त्रे मोहकर्त्रे हेरम्बाय नमो नमः ॥ ४२॥

स्वानन्दवासिने तुभ्यं संयोगाभेदधारिणे ।

नानामायाविहाराय विघ्नेशाय नमो नमः ॥ ४३॥

सांख्याय ब्रह्मनिष्ठाय बोधहीनाय धीमते ।

परतोत्थानरूपाय विदेहाय नमो नमः ॥ ४४॥

बोधाय सर्वरूपाय देहदेहिमयाय च ।

स्वत उत्थानरूपाय प्रकृतेर्लय ते नमः ॥ ४५॥

सोऽहङ्काराय देवाय जगदीशाय ते नमः ।

महते बिन्दुरूपाय जगद्रूपाय ते नमः ॥ ४६॥

नादात्मकगुणेशाय नानावेषप्रधारिणे ।

ब्रह्मणे सृष्टिकर्त्रे च पितामह नमोऽस्तु ते ॥ ४७॥

हरये पालकायैव नानादेहधराय च ।

संहर्त्रे शङ्करायैव कर्माकाराय भानवे ॥ ४८॥

शक्तये च क्रियामूर्ते देवमानवरूपिणे ।

नागासुरमयायैव ढुण्ढिराजाय ते नमः ॥ ४९॥

स्थावराय नमस्तुभ्यं जङ्गमाय नमो नमः ।

जगद्रूपाय देवाय ब्रह्मणे ते नमो नमः ॥ ५०॥

किं स्तौमि त्वां गणाधीश योगाकारेण संस्थितम् ।

वेदादयः समर्था न त्वामतः प्रणमाम्यहम् ॥ ५१॥

धन्यो देहो मदीयोऽद्य पितरौ कुलमेव च ।

विद्या योगस्तपश्चैव त्वदंघ्रियुगदर्शनात् ॥ ५२॥

इत्युक्त्वा भक्तिभावेन परिप्लुतो महामुनिः ।

ननर्त हृष्टरोमाऽसौ आनन्दाश्रूः सृजन्मुहुः ॥ ५३॥

ततस्तं स्वकरे धृत्वा गणनाथः प्रसस्वजे ।

उवाच योगिनं पूर्णैर्वचनं परमाद्भुतम् ॥ ५४॥

गणेश उवाच ।

धन्योऽसि दत्त योगीन्द्रो जातोऽसि मदनुग्रहात् ।

शान्तिं लभसि पूर्णां त्वमचलां मयि सर्वदा ॥ ५५॥

कदापि ते न भेदो मे भविष्यति महामुने ।

त्वत्प्रीतिसम्प्रवृद्ध्यर्थमत्र स्थास्यामि निश्चलः ॥ ५६॥

गणेशज्ञानमाहात्म्यं त्वया ह्यत्रेर्मुखाच्छ्रुतम् ।

साक्षात्कारकृतं तस्मादिदं विज्ञानक्षेत्रकम् ॥ ५७॥

विज्ञानगणपो दत्तनाम्ना ख्यातो भवाम्यहम् ।

दर्शनाच्छान्तिसन्दाता भविष्याम्यत्र मानद ॥ ५८॥

अत्र वासं प्रकुर्वन्ति मदर्थं भक्तिसंयुताः ।

शान्तियोगं सदा तेभ्यो दास्यामि ते स्वसन्निधौ ॥ ५९॥

इदं पुरा शिवेनैव ज्ञानं साक्षात्कृतं स्वयम् ।

विज्ञानेश्वरनामा मे कृतो मया स शङ्करः ॥ ६०॥

तस्यात्र सन्निधिं स्थित्वा त्वया तथा सुसाधितम् ।

अतः शङ्करमित्रत्वं प्राप्तोऽसि मदनुग्रहात् ॥ ६१॥

त्वया कृतमिदं स्तोत्रं योगशान्तिप्रदं भवेत् ।

पठतां श्रृण्वतां नृणां ब्रह्मीभूतकरं तथा ॥ ६२॥

धर्मार्थकाममोक्षाणां दायकं प्रभविष्यति ।

सर्वसिद्धिप्रदं चैव सर्वेभ्यो ज्ञानदायकम् ॥ ६३॥

इत्युक्त्वाऽन्तर्दधे तत्र गणेशो भक्तवत्सलः ।

दत्तः खिन्नश्च तं ध्यात्वा तस्थौ तत्र प्रजापते ॥ ६४॥

ततस्तत्कृपया तेन स्वात्मा तत्र समर्पितः ।

योगाभेदमयत्वेन जात आत्मनिवेदकः ॥ ६५॥

दत्तो भक्तो गणेशश्च स्वामी तस्येति नाशितम् ।

स्वामिनि सेवकः सोऽपि तदाकारेण संस्थितः ॥ ६६॥

इयं भक्तिर्गणेशस्यात्मनिवेदनरूपिणी ।

दत्तेन सा धृता मुख्या शान्तियोगमयत्वतः ॥ ६७॥

एतस्मिन्नन्तरे तत्र प्रकटोऽभूत्स्वयं शिवः ।

विज्ञानेश्वरनामासौ दत्तं तं परिषस्वजे ॥ ६८॥

अहो दत्त महाभाग मम मित्रत्वमागतः ।

अत्रैवाहं गणेशानं ध्यायामि योगसेवया ॥ ६९॥

ततो दत्तं पुरस्कृत्य शङ्करो ब्राह्मणैः सह ।

गणेशं स्थापयामास गङ्गाया दक्षिणे तटे ॥ ७०॥

विज्ञानगणराजेति नाम चक्रे महर्षिभिः ।

तदादिक्षेत्रविख्यातं बभूव गणपस्य तत् ॥ ७१॥

विज्ञाननामकं पुण्यं शान्तियोगफलप्रदम् ।

सर्वसिद्धिकरं क्षेत्रं यात्राकारि जनस्य च ॥ ७२॥

इति मुद्गलपुराणोक्तं विज्ञानगणराजस्तोत्रं समाप्तम् ।

*******************************

॥ शत्रुसंहारकमेकदन्तस्तोत्रम् ॥

श्रीगणेशाय नमः ।

सनत्कुमार उवाच ।

श्रृणु शम्भ्वादयो देवा मदासुरविनाशने ।

उपायं कथयिष्यामि तत्कुरुध्वं मुनीश्वराः ॥ १॥

गणेशं पूजयध्वं वै यूयं सर्वे समावृताः ।

स बाह्यान्तरसंस्थो वै हनिष्यति मदासुरम् ॥ २॥

सनत्कुमारवाक्यं तच्छ्रुत्वा देवर्षिसत्तमाः ।

ऊचुस्तं प्रणिपत्यादौ भक्तिनम्रात्मकन्धराः ॥ ३॥

देवर्षय ऊचुः ।

केनोपायेन देवेशं गणेशं मुनिसत्तमम् ।

पूजयामो विशेषेण तं ब्रवीहि यथातथम् ॥ ४॥

एवं पृष्टो महायोगी देवैश्च मुनिभिः सह ।

उवाचाराधनं तेभ्यो गाणपत्यो महायशाः ॥ ५॥

एकाक्षरेण तं देवं हृदिस्थं गणनायकम् ।

विधिना पूजयध्वं च तुष्टस्तेन भविष्यति ॥ ६॥

ध्यानं तस्य प्रवक्ष्यामि श्रृणुध्वं सुरसत्तमाः ।

यूयं तं तादृशं ध्यात्वा तोषयध्वं विधानतः ॥ ७॥

एकदन्तं चतुर्बाहुं गजवक्त्रं महोदरम् ।

सिद्धिबुद्धिसमायुक्तं मूषकारूढमेव च ॥ ८॥

नाभिशेषं सपाशं वै परशुं कमलं शुभम् ।

अभयं सन्दधन्तं च प्रसन्नवदनाम्बुजम् ॥ ९॥

भक्तेभ्यो वरदं नित्यमभक्तानां निषूदनम् ।

एतादृशं हृदि ध्यात्वा सेवध्वमेकदन्तकम् ॥ १०॥

सर्वेषां हृदि संस्थोऽयं बुद्धिप्रेरकभावतः ।

स्वयं बुद्धिपतिः साक्षादात्मा च सर्वदेहिनाम् ॥ ११॥

एकशब्दात्मिका माया देहरूपा विलासिनी ।

दन्तः सत्तात्मकः प्रोक्तः शब्दस्तत्र न संशयः ॥ १२॥

मायाया धारकोऽयं वै सत्तमात्रेण संस्थितः ।

एकदन्तो गणेशो वै कथ्यते वेदवादिभिः ॥ १३॥

सर्वसत्ताधरं पूर्णमेकदन्तं गजाननम् ।

सेवध्वं भक्तिभावेन भविष्यति सदा सुखम् ॥ १४॥

एवमुक्त्वा ययौ योगी स सनत्कुमार आदरात् ।

जय हेरम्बमन्त्रं वै समुच्चरन् मुखेन सः ॥ १५॥

ततो देवगणाः सर्वे मनुयस्तपसि स्थिताः ।

एकाक्षरविधानेन तोषयामासुरादरात् ॥ १६॥

पत्रभक्षा निराहारा वायुभक्षा जलाशिनः ।

कन्दमूलफलाहाराः केचित्केचिद्बभूविरे ॥ १७॥

संस्थिता ध्याननिष्ठा वै जपहोमपरायणाः ।

नानातपःप्रभावेण तोषयन् गणनायकम् ॥ १८॥

गतवर्षशतेषु वै सन्तुष्ट एकदन्तकः ।

आययौ तान्वरान्दातुं ध्यातस्तैर्यादृशस्तथा ॥ १९॥

जगाद स तपोयुक्तान् मुनीन्देवन्गजाननः ।

वरं वृणुत तुष्टोऽहं दास्यामि ब्राह्मणामराः ॥ २०॥

तस्य तद्वचनं श्रुत्वा हृष्टा देवर्षयोऽभवन् ।

उन्मील्य लोचने देवमपश्यन्समीपस्थितम् ॥ २१॥

दृष्ट्वा मूषकसंस्थं तं प्रणेमुस्ते गजाननम् ।

मुनयो देवदेवेन्द्रा पुपूजुर्भक्तिसंयुताः ॥ २२॥

पूजयित्वा यथान्यायं प्रणम्य करसम्पुटाः ।

तुष्टुवुरेकदन्तं तं भक्तिनम्रात्मकन्धराः ॥ २३॥

देवर्षय ऊचुः ।

नमस्ते गजवक्त्राय गणेशाय नमो नमः ।

अनन्तानन्दभोक्त्रे वै ब्रह्मणे ब्रह्मरूपिणे ॥ २४॥

आदिमध्यान्तहीनाय चराचरमयाय ते ।

अनन्तोदरसंस्थाय नाभिशेषाय ते नमः ॥ २५॥

कर्त्रे पात्रे च संहर्त्रे त्रिगुणानामधीश्वर ।

सर्वसत्ताधरायैव निर्गुणाय नमो नमः ॥ २६॥

सिद्धिबुद्धिपते तुभ्यं सिद्धिबुद्धिप्रदाय च ।

ब्रह्मभूताय देवेश सगुणाय नमो नमः ॥ २७॥

परशुधारिणे तुभ्यं कमलहस्तशोभिने ।

पाशाभयधरायैव महोदराय ते नमः ॥ २८॥

मूषकारूढदेवाय मूषकध्वजिने नमः ।

आदिपूज्याय सर्वाय सर्वपूज्याय ते नमः ॥ २९॥

सगुणात्मककायाय निर्गुणमस्तकाय ते ।

तयोदभेदरूपेण चैकदन्तय ते नमः ॥ ३०॥

देवान्ताऽगोचरायैव वेदान्तलभ्यकाय ते ।

योगाधीशाय वै तुभ्यं ब्रह्माधीशाय ते नमः ॥ ३१॥

अपारगुणधामायानन्तमायाप्रचरिणे ।

नानावतारभेदाय शान्तिदाय नमो नमः ॥ ३२॥

वयं धन्या वयं धन्या यैर्दृष्टो गणनायकः ।

ब्रह्मभूतमयः साक्षात्प्रत्यक्षं पुरतः स्थितः ॥ ३३॥

एवं स्तुत्वा प्रहर्षेण ननृतुर्भक्तिसंयुताः ।

साश्रुनेत्रान्सरोमाञ्चान्दृष्ट्वा तान् ढुण्ढिरब्रवीत् ॥ ३४॥

एकदन्त उवाच ।

वरं वृणुत देवेशा मनुयश्च यथेप्सितम् ।

दास्यामि तं न सन्देहो यद्यपि दुर्लभं भवेत् ॥ ३५॥

भवत्कृतं मदीयं तत् स्तोत्रं सर्वार्थदं भवेत् ।

पठते श्रुण्वते देवा नानासिद्धिप्रदं द्विजाः ॥ ३६॥

शत्रुनाशकरं चैव सुखानन्दप्रदायकम् ।

पुत्रपौत्रादिकं सर्वं लभते पाठतो नरः ॥ ३७॥

गृत्समद उवाच ।

एवं तस्य वचः श्रुत्वा हर्षयुक्ताः सुरर्षयः ।

ऊचुस्तमेकदन्तं ते प्रणम्य भक्तिभावतः ॥ ३८॥

सुरर्षय ऊचुः ।

यदि तुष्टोऽसि सर्वेश एकदन्त महाप्रभो ।

यदि देयो वरो नश्चेज्जहि दुष्टं मदासुरम् ॥ ३९॥

इति श्रीमुद्गलपुराणान्तर्गतं सनकादिकृतमेकदन्तस्तोत्रं समाप्तम् ।

**********************************

॥ श्रीशारदेशकवच ॥

श्रीगणेशाय नमः ।

देव्युवाच ।

कवचं शारदेशस्य कृपया ब्रूहि शङ्कर ।

शिव उवाच ।

कवचस्यास्य गणको ढुण्ढिसमुद्भवः ।

गँ बीजं प्रणवश्शक्तिस्स्वाहावै कीलकं स्मृतम् ।

न्यासध्यानादयस्सर्वे मन्त्रवत्परिकीर्तिताः ।

रमेशः पूर्वतः पातु वह्निकोणे रमावतु ॥ १॥

दक्षिणे पातु मां शम्भुः नैरृत्यां गिरिनन्दिनी ।

पश्चिमे पातु मां माये वायव्यां रतिसुन्दरी ॥ २।

उत्तरे पातु मां ब्रह्मा रौद्रायां तु सरस्वती ।

आकाशे पुष्टिविघ्नेशः पातु मां पुष्टिसंयुतः ॥ ३॥

पाताले मूषकः पातु चतुर्ब्रह्मस्वरूपवान् ।

एवं दशदिशो रक्षेत् पञ्चैकाकृतिधारकः ॥ ४॥

शिखायां गुणपः पातु गुणाधारस्वरूपवान् ।

मूर्धानं पातु मे श्वेतः सुधामूर्तिर्निरन्तरम् ॥ ५॥

विद्येश्वरः फालदेशं भ्रूमध्यं ज्ञानदायकः ।

श्रवणौ मणिकर्णीशो महानन्दः कपोलयोः ॥ ६॥

दन्तान्मे स्थूलदन्तोऽव्यात् जिह्वां वागीश्वरीपतिः ।

ओष्ठौ मे पातु पीयूषदायको विष्णुपूजितः ॥ ७॥

चिबुकं प्रतिवादिमुखस्तम्भकरोऽवतु ।

कण्ठं विषनाशकोऽव्यात् वक्षो मे शूर्पकर्णकः ॥ ८॥

पञ्चप्राणान्सदा पातु मृतसञ्जीविनीपतिः ।

दौर्भाग्यनाशकस्स्कन्धौ बाहू मे यक्षिणीपतिः ॥९॥

ऊरू उदारगणपो लिङ्गं मे सृष्टिलिङ्गकः ।

अण्डं बीजगणेशोऽव्याद्गुदं विघ्नविनाशकः ॥ १०॥

पृष्ठं मेरुधनुष्पाणिः जानुनी मे जयप्रदः ।

जङ्घायुग्मं र्हस्वजङ्घो पादौ मृत्युविनाशकः ॥ ११॥

सर्वाङ्गाणि शारदेशः पातुमां विघ्ननाशकः ।

दिवाव्यान्नवनीतेशो रात्रावाज्ञागणेश्वरः ॥ १२॥

अटव्यां पर्वताग्रेवा गमनागमनादिषु ।

दशबाहुधरः पातु भार्यान्मे शारदेश्वरः ॥ १३॥

पुत्रान्पुत्रीर्गुरून्भृत्यान् पातुमां मुद्गरायुधः ।

धियं विद्यां धनं गेहं पातु पीयूषविग्रहः ॥ १४॥

सर्वदा मां सदा पातु ज्ञानमण्डपसंस्थितः ।

भूर्जपत्रे लिखित्वेदं यः कण्ठे धारयेन्नरः ॥ १५॥

न भयं जायते तस्य ग्रहरोगपिशाचतः ।

य इदं कवचं पुण्यं महारोगनिवारकम् ॥ १६॥

अपमृत्युहरं सौख्यदायकं भक्तिपूर्वकम् ।

प्रातःकाले च मध्याह्ने सायङ्कालेऽथवा ॥ १७॥

उषःकाले च सङ्ग्रामकाले शयनकालके ।

प्रवासे च पठेद्भक्त्या ध्यात्वा च शारदापतिम् ॥ १८॥

सर्वत्र सुखमाप्नोति गुणेशेन सुरक्षितः ।

मृत्युरोगहरं चैतत् पठनीयं विशेषतः ॥ १९॥

राजानो वश्यतां यान्ति रिपुनो यान्ति दास्यताम् ।

मन्त्रास्सिध्यन्ति गाणेशाः पठनादस्य वर्मणः ॥ २०॥

इदं कवचमज्ञात्वा यो भजेच्छारदापतिम् ।

नच सिद्धिमवाप्नोति मूडो वर्षसहस्रकैः ॥ २१॥

शारदागणनाथस्य भक्तेन भावपूर्वकम् ।

नित्यं जप्यमिदं श्रेष्ठं कवचं सर्वसिद्धिदम् ॥ २२॥

नित्यं जपपरो भक्तो धर्मार्थकाममोक्षकान् ।

विद्यां मेधां श्रियं बुद्धिं यशः कीर्तिमवाप्यच ॥ २३॥

इह भुक्ताखिलान्भोगानन्ते स्वानन्दमाप्नुयात् ।

॥ इति श्रीविनायकतन्त्रे शारदेशकवचं सम्पूर्णम् ॥

*******************************

॥ षोडशगणपतिस्तवम् ॥

प्रथमं बालविघ्नेशं द्वितीयं तरुणं तथा ।

तृतीयं भक्तविघ्नेशं चतुर्थं वीरविघ्नकम् ॥

पञ्चमं शक्तिविघ्नेशं षष्ठं ध्वजगणाधिपम् ।

सप्तमं पिङ्गलं देवं तथा चोच्छिष्टनायकम् ॥

नवमं विघ्नराजेन्द्रं दशमं क्षिप्रदायकम् ।

एकादशं तु हेरम्बं द्वादशं लक्ष्मिनायकम् ॥

त्रयोदशं महासंज्ञं भुवनेशं चतुर्दशम् ।

नृत्ताख्यं पञ्चदशं षोडशोर्ध्वगणाधिपम् ॥

स्तोत्रं तु विघ्नराजस्य कथ्यते षोडशात्मकम् ।

धर्मार्थकाममोक्षार्थं नराणां येन विद्यते ॥

॥ इति षोडशगणपतिस्तवम् सम्पूर्णम् ॥

****************************

॥ सन्तानगणपतिस्तोत्रम् ॥

श्रीगणेशाय नमः ।

नमोऽस्तु गणनाथाय सिद्धिबुद्धियुताय च । सर्वप्रदाय देवाय पुत्रवृद्धिप्रदाय च ॥ १॥

गुरुदराय गुरवे गोप्त्रे गुह्यासिताय ते । गोप्याय गोपिताशेषभुवनाय चिदात्मने ॥२॥ विश्वमूलाय भव्याय विश्वसृष्टिकराय ते । नमो नमस्ते सत्याय सत्यपूर्णाय शुण्डिने ॥ ३॥ एकदन्ताय शुद्धाय सुमुखाय नमो नमः । प्रपन्नजनपालाय प्रणतार्तिविनाशिने ॥ ४॥ शरणं भव देवेश सन्ततिं सुदृढा कुरु।

भविष्यन्ति च ये पुत्रा मत्कुले गणनायक ॥ ५॥ ते सर्वे तव पूजार्थं निरताः स्युर्वरोमतः । पुत्रप्रदमिदं स्तोत्रं सर्वसिद्धिप्रदायकम् ॥ ६॥

इति सन्तानगणपतिस्तोत्रं सम्पूर्णम् ।

************************************

॥ सर्वमङ्गलाष्टकम् ॥

श्रीगणेशाय नमः ।

लक्ष्मीर्यस्य परिग्रहः कमलभूः सूनुर्गरुत्मान् रथः

पौत्रश्चन्द्रविभूषणः सुरगुरुः शेपश्च शय्यासनः ।

ब्रह्माण्डं वरमन्दिरं सुरगणा यस्य प्रभोः सेवकाः स

त्रैलोक्यकुटुम्बपालनपरः कुर्यात् सदा मङ्गलम् ॥ १॥

ब्रह्मा वायुगिरिशशेषगरुडा देवेन्द्रकामौ गुरुश्चन्द्रार्कौ

वरुणानलौ मनुयमौ वित्तेशविघ्नेश्वरौ ।

नासत्यौ निरृतिर्मरुद्गणयुताः पर्जन्यमित्रादयः सस्त्रीकाः

सुरपुङ्गवाः प्रतिदिनं कुर्वन्तु वो मङ्गलम् ॥ २॥

विश्वामित्रपराशरौर्वभृगवोऽगस्त्यः पुलस्त्यः क्रतुः

श्रीमानत्रिमरीचिकौत्सपुलहाः शक्तिर्वसिष्ठोऽङ्गिराः ।

माण्डवयो जमदग्निगौतमभरद्वाजादयस्तापसाः

श्रीमद्विश्णुपदाब्जभक्तिनिरताः कुर्वन्तु वो मङ्गलम् ॥ ३॥

मान्धाता नहुषोऽम्बरीषसगरौ राजा पृथुर्हैहयः श्रीमान्

धर्मसुतो नलो दशरथो रामो ययातिर्यदुः ।

इक्ष्वाकुश्च विभीशणश्च भरतश्चोत्तानपादध्रुवावित्याद्या भुवि

भूभुजः प्रतिदिनं कुर्वन्तु वो मङ्गलम् ॥ ४॥

श्रीमेरुर्हिमवाँश्च मन्दरगिरिः कैलासशैलस्तथा माहेन्द्रो

मलयश्च विन्ध्यनिषधौ सिंहस्तथा रैवतः ।

सह्याद्रिर्वरगन्धमादनगिरिर्मैनाकगोमन्तकावित्याद्या भुवि

भूभृतः प्रतिदिनं कुर्वन्तु वो मङ्गलम् ॥ ५॥

गङ्गा सिन्धुसरस्वती च यमुना गोदावरी नर्मदा कृष्णा

भीमरथी च फल्गुसरयूः श्रीगण्डकी गोमती ।

कावेरीकपिलाप्रयागविनतावेत्रावतीत्यादयो नद्यः

श्रीहरिपादपङ्कजभवाः प्रतिदिनं कुर्वन्तु वो मङ्गलम् ॥ ६॥

वेदाश्चोपनिषद्गणाश्च विविधाः साङ्गा पुराणान्विता वेदान्ता अपि

मन्त्र-तन्त्रसहितास्तर्कस्मृतीनां गणाः ।

काव्यालङ्कृतिनीतिनातकगणाः शब्दाश्च नानाविधाः

श्रीविष्णोर्गुणराशिकीर्तनकराः प्रतिदिनं कुर्वन्तु वो मङ्गलम् ॥ ७॥

आदित्यादिनवग्रहाः शुभकरा मेषादयो राशयो नक्षत्राणि

सयोगकाश्च तिथयस्तद्देवतस्तद्गणाः ।

मासाब्दा ऋतवस्तथैव दिवसाः सन्ध्यास्तथा रात्रयाः सर्वे

स्थावरजङ्गमाः प्रतिदिनं कुर्वन्तु वो मङ्गलम् ॥ ८॥

इत्येतद्वरमङ्गलाष्टकमिदं श्रीवादिराजेश्वरैर्व्याखातं

जगतामभीष्टफलदं सर्वाशुभध्वंसनम् ।

माङ्गल्यादिशुभक्रियासु सततं सन्ध्यासु वा याः

पठेद्धर्मार्थादिसमस्तवाञ्छितफलं प्राप्नोत्यसौ मानवाः ॥ ९॥

इति श्रीमद्वादिराजविरचितं सर्वमङ्गलाष्टकं सम्पूर्णम् ।

*******************************

॥ श्रीगणेश भजनावली ॥

गणेशं गाणेशाः शिवमिति शैवाश्च विबुधाः ।

रविं सौरा विष्णुं प्रथमपुरुषं विष्णु भजकाः ॥

वदन्त्येकं शाक्त जगदुदयमूलां परशिवाम् ।

न जाने किंतस्मै नम इति परब्रह्म सकलम् ॥

जयगजानन

श्री गणेश भजनावलिः

जयतु जयतु श्री सिद्धिगणेश

जयतु जयतु श्री शक्तिगणेश

अक्षररूपा सिद्धिगणेश

अक्षयदायक सिद्धिगणेश

अर्कविनायक सिद्धिगणेश

अमराधीश्वर सिद्धिगणेश

आशापूरक सिद्धिगणेश

आर्यापोषित सिद्धिगणेश

इभमुखरंजित सिद्धिगणेश

इक्षुचापधर सिद्धिगणेश

ईश्वरतनया सिद्धिगणेश

ईप्सितदायक सिद्धिगणेश १०

उद्दण्ड विघ्नप सिद्धिगणेश

उमयापालित सिद्धिगणेश

उच्छिष्टगणप सिद्धिगणेश

उत्साहवर्धक सिद्धिगणेश

ऊष्मलवर्जित सिद्धिगणेश

ऊर्जितशासन सिद्धिगणेश

ऋणत्रयमोचक सिद्धिगणेश

ऋषिगणवन्दित सिद्धिगणेश

एकदन्तधर सिद्धिगणेश

एकधुरावह सिद्धिगणेश २०

ऐहिक फलद सिद्धिगणेश

ऐश्वर्यदायक सिद्धिगणेश

ओंकाररूप सिद्धिगणेश

ओजोवर्धक सिद्धिगणेश

औन्नत्यरहित सिद्धिगणेश

औधार्यमूर्ते सिद्धिगणेश

अंकुषधारिन् सिद्धिगणेश

अंबालालित सिद्धिगणेश

कमलभवस्तुत सिद्धिगणेश

करुणासागर सिद्धिगणेश ३०

कपर्धिगणप सिद्धिगणेश

कलिभयवारण सिद्धिगणेश

खड्गखेटधर सिद्धिगणेश

खलजनसूधन सिद्धिगणेश

खर्जूरप्रिय सिद्धिगणेश

गंकारवाच्य सिद्धिगणेश

गंगाधरसुत स्द्धिगणेश

गगनानन्दद सिद्धिगणेश

गणितज्ञानद सिद्धिगणेश

गरलपुरस्थित सिद्धिगणेश ४०

घटितार्थविधायक सिद्धिगणेश

घनदिव्योदर सिद्धिगणेश

चक्रधरार्चित सिद्धिगणेश

चर्वणलालस सिद्धिगणेश

छंदोविग्रह सिद्धिगणेश

छलनिर्मूलन सिद्धिगणेश

छत्रालंक्रुत सिद्धिगणेश

जगन्मोहन सिद्धिगणेश

जगदुज्जीवन सिद्धिगणेश

जगदाधारक सिद्धिगणेश ५०

झंपालयपद सिद्धिगणेश

झण झण नर्तक सिद्धिगणेश

टंकारितकार्मुक सिद्धिगणेश

टंक्रुति घोशण सिद्धिगणेश

ठवर्णवर्जित सिद्धिगणेश

डम्भविनाशन सिद्धिगणेश

डमरुगधरसुत सिद्धिगणेश

ढक्का रवहित सिद्धिगणेश

ढुंडिविनायक सिद्धिगणेश

णवर्णरंजित सिद्धिगणेश ६०

तरुणेंदुप्रिय सिद्धिगणेश

तनुधनरक्षक सिद्धिगणेश

थळथळलोचन सिद्धिगणेश

थकथक नर्तन सिद्धिगणेश

नवदूर्वाप्रिय सिद्धिगणेश

नवनीतविलेपन सिद्धिगणेश

पंचास्यगणप सिद्धिगणेश

पशुपाश विमोचक सिद्धिगणेश

प्रणतज्ञानद सिद्धिगणेश

फलभक्षणपटु सिद्धिगणेश ७०

फणिपति भूशण सिद्धिगणेश

बदरीफलहित सिद्धिगणेश

बकुळ सुमार्चित सिद्धिगणेश

भवभयनाशक सिद्धिगणेश

भक्तोद्धारक सिद्धिगणेश

मनोरथ सिद्धिद सिद्धिगणेश

महिमान्वितवर सिद्धिगणेश

मनोन्मनीसुत सिद्धिगणेश

यज्ञफलप्रद सिद्धिगणेश

यमसुतवन्दित सिद्धिगणेश ८०

रत्नगर्भवर सिद्धिगणेश

रघुरामर्चित सिद्धिगणेश

रमयासंस्तुत सिद्धिगणेश

रजनीशविशापद सिद्धिगणेश

ललना पूजित सिद्धिगणेश

ललितानंदद सिद्धिगणेश

लक्ष्म्यालिंगित सिद्धिगणेश

वरदा भयकर सिद्धिगणेश

वर मूषकवाहन सिद्धिगणेश

शमीदळार्चित सिद्धिगणेश ९०

शम दम कारण सिद्धिगणेश

शशिधरलालित सिद्धिगणेश

षण्मुख सोदर सिद्धिगणेश

षट्कोणार्चित सिद्धिगणेश

षड्गुणमंडित सिद्धिगणेश

षडूर्मिभंजक सिद्धिगणेश

सप्तदशाक्षर सिद्धिगणेश

सर्वाग्रपूज्य सिद्धिगणेश

संकश्टहरण सिद्धिगणेश

सन्तानप्रद सिद्धिगणेश १००

सज्जनरक्षक सिद्धिगणेश

सकलेष्टार्थद सिद्धिगणेश

संगीतप्रिय सिद्धिगणेश

हरिद्रागणप सिद्धिगणेश

हरिहरपूजित सिद्धिगणेश

हर्षप्रदायक सिद्धिगणेश

क्षतदन्तायुध सिद्धिगणेश

क्षमयापालय सिद्धिगणेश १०८

जयतु जयतु श्री सिद्धिगणेश

जयतु जयतु श्री शक्तिगणेश

॥ श्री सिद्धि एवं शक्ति गणेश चरणारविंदार्पणमस्तु ॥

********************************

॥ श्रीसिद्धिविनायकस्तोत्रम् ॥

जयोऽस्तु ते गणपते देहि मे विपुलां मतिम् ।

स्तवनम् ते सदा कर्तुं स्फूर्ति यच्छममानिशम् ॥ १॥

प्रभुं मंगलमूर्तिं त्वां चन्द्रेन्द्रावपि ध्यायतः ।

यजतस्त्वां विष्णुशिवौ ध्यायतश्चाव्ययं सदा ॥ २॥

विनायकं च प्राहुस्त्वां गजास्यं शुभदायकम् ।

त्वन्नाम्ना विलयं यान्ति दोषाः कलिमलान्तक ॥ ३॥

त्वत्पदाब्जाङ्कितश्चाहं नमामि चरणौ तव ।

देवेशस्त्वं चैकदन्तो मद्विज्ञप्तिं शृणु प्रभो ॥ ४॥

कुरु त्वं मयि वात्सल्यं रक्ष मां सकलानिव ।

विघ्नेभ्यो रक्ष मां नित्यं कुरु मे चाखिलाः क्रियाः ॥ ५॥

गौरिसुतस्त्वं गणेशः शॄणु विज्ञापनं मम ।

त्वत्पादयोरनन्यार्थी याचे सर्वार्थ रक्षणम् ॥ ६॥

त्वमेव माता च पिता देवस्त्वं च ममाव्ययः ।

अनाथनाथस्त्वं देहि विभो मे वांछितं फलम् ॥ ७॥

लम्बोदरस्वम् गजास्यो विभुः सिद्धिविनायकः ।

हेरम्बः शिवपुत्रस्त्वं विघ्नेशोऽनाथबांधवः ॥ ८॥

नागाननो भक्तपालो वरदस्त्वं दयां कुरु ।

सिन्दूरवर्णः परशुहस्तस्त्वं विघ्ननाशकः ॥ ९॥

विश्वास्यं मङ्गलाधीशं विघ्नेशं परशूधरम् ।

दुरितारिं दीनबन्धूं सर्वेशं त्वां जना जगुः ॥ १०॥

नमामि विघ्नहर्तारं वन्दे श्रीप्रमथाधिपम् ।

नमामि एकदन्तं च दीनबन्धू नमाम्यहम् ॥ ११॥

नमनं शम्भुतनयं नमनं करुणालयम् ।

नमस्तेऽस्तु गणेशाय स्वामिने च नमोऽस्तु ते ॥ १२॥

नमोऽस्तु देवराजाय वन्दे गौरीसुतं पुनः ।

नमामि चरणौ भक्त्या भालचन्द्रगणेशयोः ॥ १३॥

नैवास्त्याशा च मच्चित्ते त्वद्भक्तेस्तवनस्यच ।

भवेत्येव तु मच्चित्ते ह्याशा च तव दर्शने ॥ १४॥

अज्ञानश्चैव मूढोऽहं ध्यायामि चरणौ तव ।

दर्शनं देहि मे शीघ्रं जगदीश कृपां कुरु ॥ १५॥

बालकश्चाहमल्पज्ञः सर्वेषामसि चेश्वरः ।

पालकः सर्वभक्तानां भवसि त्वं गजानन ॥ १६॥

दरिद्रोऽहं भाग्यहीनः मच्चित्तं तेऽस्तु पादयोः ।

शरण्यं मामनन्यं ते कृपालो देहि दर्शनम् ॥ १७॥

इदं गणपतेस्तोत्रं यः पठेत्सुसमाहितः ।

गणेशकृपया ज्ञानसिध्धिं स लभते धनम् ॥ १८॥

पठेद्यः सिद्धिदं स्तोत्रं देवं सम्पूज्य भक्तिमान् ।

कदापि बाध्यते भूतप्रेतादीनां न पीडया ॥ १९॥

पठित्वा स्तौति यः स्तोत्रमिदं सिद्धिविनायकम् ।

षण्मासैः सिद्धिमाप्नोति न भवेदनृतं वचः

गणेशचरणौ नत्वा ब्रूते भक्तो दिवाकरः ॥ २०॥

इति श्री सिद्धिविनायक स्तोत्रम् ।

*******************************

॥ विघ्ननिवारकं सिद्धिविनायकस्तोत्रम् ॥

श्री गणेशाय नमः ॥

विघ्नेश विघ्नचयखण्डननामधेय श्रीशङ्करात्मज सुराधिपवन्द्यपाद ।

दुर्गामहाव्रतफलाखिलमङ्गलात्मन् विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ १॥

सत्पद्मरागमणिवर्णशरीरकान्तिः श्रीसिद्धिबुद्धिपरिचर्चितकुङ्कुमश्रीः ।

दक्षस्तने वलयितातिमनोज्ञशुण्डो विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ २॥

पाशाङ्कुशाब्जपरशूंश्च दधच्चतुर्भिर्दोर्भिश्च शोणकुसुमस्रगुमाङ्गजातः ।

सिन्दूरशोभितललाटविधुप्रकाशो विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ ३॥

कार्येषु विघ्नचयभीतविरञ्चिमुख्यैः सम्पूजितः सुरवरैरपि मोदकाद्यैः ।

सर्वेषु च प्रथममेव सुरेषु पूज्यो विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ ४॥

शीघ्राञ्चनस्खलनतुङ्गरवोर्ध्वकण्ठस्थूलोन्दुरुद्रवणहासितदेवसङ्घः ।

शूर्पश्रुतिश्च पृथुवर्तुलतुङ्गतुन्दो विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ ५॥

यज्ञोपवीतपदलंभितनागराजो मासादिपुण्यददृशीकृतऋक्षराजः ।

भक्ताभयप्रद दयालय विघ्नराज विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ ६॥

सद्रत्नसारततिराजितसत्किरीटः कौसुम्भचारुवसनद्वय ऊर्जितश्रीः ।

सर्वत्रमङ्गलकरस्मरणप्रतापो विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ ७॥

देवान्तकाद्यसुरभीतसुरार्तिहर्ता विज्ञानबोधेनवरेण तमोपहर्ता ।

आनन्दितत्रिभुवनेशु कुमारबन्धो विघ्नं ममापहर सिद्धिविनायक त्वम् ॥ ८॥

इति मौद्गलोक्तं विघ्ननिवारकं सिद्धिविनायकस्तोत्रं सम्पूर्णम् ॥

**********************************

॥ श्रीसिद्धिविनायकनामावली ॥

ॐ विनायकाय नमः ।

विघ्नराजाय नमः ।

गौरीपुत्राय नमः ।

गणेश्वराय नमः ।

स्कन्दाग्रजाय नमः ।

अव्ययाय नमः ।

पूताय नमः ।

दक्षाध्यक्ष्याय नमः ।

द्विजप्रियाय नमः ।

अग्निगर्भच्छिदे नमः ।

इंद्रश्रीप्रदाय नमः ।

वाणीबलप्रदाय नमः ।

सर्वसिद्धिप्रदायकाय नमः ।

शर्वतनयाय नमः ।

गौरीतनूजाय नमः ।

शर्वरीप्रियाय नमः ।

सर्वात्मकाय नमः ।

सृष्टिकर्त्रे नमः ।

देवानीकार्चिताय नमः ।

शिवाय नमः ।

शुद्धाय नमः ।

बुद्धिप्रियाय नमः ।

शांताय नमः ।

ब्रह्मचारिणे नमः ।

गजाननाय नमः ।

द्वैमातुराय नमः ।

मुनिस्तुत्याय नमः ।

भक्त विघ्न विनाशनाय नमः ।

एकदंताय नमः ।

चतुर्बाहवे नमः ।

शक्तिसंयुताय नमः ।

चतुराय नमः ।

लंबोदराय नमः ।

शूर्पकर्णाय नमः ।

हेरंबाय नमः ।

ब्रह्मवित्तमाय नमः ।

कालाय नमः ।

ग्रहपतये नमः ।

कामिने नमः ।

सोमसूर्याग्निलोचनाय नमः ।

पाशांकुशधराय नमः ।

छन्दाय नमः ।

गुणातीताय नमः ।

निरंजनाय नमः ।

अकल्मषाय नमः ।

स्वयंसिद्धार्चितपदाय नमः ।

बीजापूरकराय नमः ।

अव्यक्ताय नमः ।

गदिने नमः ।

वरदाय नमः ।

शाश्वताय नमः ।

कृतिने नमः ।

विद्वत्प्रियाय नमः ।

वीतभयाय नमः ।

चक्रिणे नमः ।

इक्षुचापधृते नमः ।

अब्जोत्पलकराय नमः ।

श्रीधाय नमः ।

श्रीहेतवे नमः ।

स्तुतिहर्षताय नमः ।

कलाद्भृते नमः ।

जटिने नमः ।

चन्द्रचूडाय नमः ।

अमरेश्वराय नमः ।

नागयज्ञोपवीतिने नमः ।

श्रीकांताय नमः ।

रामार्चितपदाय नमः ।

वृतिने नमः ।

स्थूलकांताय नमः ।

त्रयीकर्त्रे नमः ।

संघोषप्रियाय नमः ।

पुरुषोत्तमाय नमः ।

स्थूलतुण्डाय नमः ।

अग्रजन्याय नमः ।

ग्रामण्ये नमः ।

गणपाय नमः ।

स्थिराय नमः ।

वृद्धिदाय नमः ।

सुभगाय नमः ।

शूराय नमः ।

वागीशाय नमः ।

सिद्धिदाय नमः ।

दूर्वाबिल्वप्रियाय नमः ।

कान्ताय नमः ।

पापहारिणे नमः ।

कृतागमाय नमः ।

समाहिताय नमः ।

वक्रतुण्डाय नमः ।

श्रीप्रदाय नमः ।

सौम्याय नमः ।

भक्ताकांक्षितदाय नमः ।

अच्युताय नमः ।

केवलाय नमः ।

सिद्धाय नमः ।

सच्चिदानंदविग्रहाय नमः ।

ज्ञानिने नमः ।

मायायुक्ताय नमः ।

दन्ताय नमः ।

ब्रह्मिष्ठाय नमः ।

भयावर्चिताय नमः ।

प्रमत्तदैत्यभयदाय नमः ।

व्यक्तमूर्तये नमः ।

अमूर्तये नमः ।

पार्वतीशंकरोत्संगखेलनोत्सवलालनाय नमः ।

समस्तजगदाधाराय नमः ।

वरमूषकवाहनाय नमः ।

हृष्टस्तुताय नमः ।

प्रसन्नात्मने नमः ।

सर्वसिद्धिप्रदायकाय नमः ।

॥ इति श्रीसिद्धिविनायकाष्टोत्तरशतनामावलिः ॥

********************************

॥ हरिद्रागणेशकवचम् ॥

श्रीगणेशाय नमः ।

ईश्वर उवाच ।

श्रृणु वक्ष्यामि कवचं सर्वसिद्धिकरं प्रिये ।

पठित्वा पाठयित्वा च मुच्यते सर्वसङ्कटात् ॥ १॥

अज्ञात्वा कवचं देवि गणेशस्य मनुं जपेत् ।

सिद्धिर्नजायते तस्य कल्पकोटिशतैरपि ॥ २॥

ॐ आमोदश्च शिरः पातु प्रमोदश्च शिखोपरि ।

सम्मोदो भ्रूयुगे पातु भ्रूमध्ये च गणाधिपः ॥ ३॥

गणाक्रीडो नेत्रयुगं नासायां गणनायकः ।

गणक्रीडान्वितः पातु वदने सर्वसिद्धये ॥ ४॥

जिह्वायां सुमुखः पातु ग्रीवायां दुर्मुखः सदा ।

विघ्नेशो हृदये पातु विघ्ननाथश्च वक्षसि ॥ ५॥

गणानां नायकः पातु बाहुयुग्मं सदा मम ।

विघ्नकर्ता च ह्युदरे विघ्नहर्ता च लिङ्गके ॥ ६॥

गजवक्त्रः कटीदेशे एकदन्तो नितम्बके ।

लम्बोदरः सदा पातु गुह्यदेशे ममारुणः ॥ ७॥

व्यालयज्ञोपवीती मां पातु पादयुगे सदा ।

जापकः सर्वदा पातु जानुजङ्घे गणाधिपः ॥ ८॥

हारिद्रः सर्वदा पातु सर्वाङ्गे गणनायकः ।

य इदं प्रपठेन्नित्यं गणेशस्य महेश्वरि ॥ ९॥

कवचं सर्वसिद्धाख्यं सर्वविघ्नविनाशनम् ।

सर्वसिद्धिकरं साक्षात्सर्वपापविमोचनम् ॥ १०॥

सर्वसम्पत्प्रदं साक्षात्सर्वदुःखविमोक्षणम् ।

सर्वापत्तिप्रशमनं सर्वशत्रुक्षयङ्करम् ॥ ११॥

ग्रहपीडा ज्वरा रोगा ये चान्ये गुह्यकादयः ।

पठनाद्धारणादेव नाशमायन्ति तत्क्षणात् ॥ १२॥

धनधान्यकरं देवि कवचं सुरपूजितम् ।

समं नास्ति महेशानि त्रैलोक्ये कवचस्य च ॥ १३॥

हारिद्रस्य महादेवि विघ्नराजस्य भूतले ।

किमन्यैरसदालापैर्यत्रायुर्व्ययतामियात् ॥ १४॥

॥ इति विश्वसारतन्त्रे हरिद्रागणेशकवचं सम्पूर्णम् ॥

********************************

॥ हेरम्बस्तोत्रं गौरिकृतम् ॥

श्री गणेशाय नमः ।

गौर्युवाच ।

गजानन ज्ञानविहारकारिन्न मां च जानासि परावमर्षाम् ।

गणेश रक्षस्व न चेच्छरीरं त्यजामि सद्यस्त्वयि भक्तियुक्ता ॥ १॥

विघ्नेश हेरम्ब महोदर प्रिय लम्बोदर प्रेमविवर्धनाच्युत ।

विघ्नस्य हर्ताऽसुरसङ्घहर्ता मां रक्ष दैत्यात्वयि भक्तियुक्ताम् ॥ २॥

किं सिद्धिबुद्धिप्रसरेण मोहयुक्तोऽसि किं वा निशि निद्रितोऽसि ।

किं लक्षलाभार्थविचारयुक्तः किं मां च विस्मृत्य सुसंस्थितोऽसि ॥ ३॥

किं भक्तसङ्गेन च देवदेव नानोपचारैश्च सुयन्त्रितोऽसि ।

किं मोदकार्थे गणपाद्धृतोऽसि नानाविहारेषु च वक्रतुण्ड ॥ ४॥

स्वानन्दभोगेषु परिहृतोऽसि दासीं च विस्मृत्य महानुभाव ।

आनन्त्यलीलासु च लालसोऽसि किं भक्तरक्षार्थसुसङ्कटस्थः ॥ ५॥

अहो गणेशामृतपानदक्षामरैस्तथा वाऽसुरपैः स्मृतोऽसि ।

तदर्थनानाविधिसंयुतोऽसि विसृज्य मां दासीमनन्यभावाम् ॥ ६॥

रक्षस्व मां दीनतमां परेश सर्वत्र चित्तेषु च संस्थितस्त्वम् ।

प्रभो विलम्बेन विनायकोऽसि ब्रह्मेश किं देव नमो नमस्ते ॥ ७॥

भक्ताभिमानीति च नाम मुख्यं वेदे त्वभावान् नहि चेन्महात्मन् ।

आगत्य हत्वाऽदितिजं सुरेश मां रक्ष दासीं हृदि पादनिष्ठाम् ॥ ८॥

अहो न दूरं तव किञ्चिदेव कथं न बुद्धीश समागतोऽसि ।

सुचिन्त्यदेव प्रजहामि देहं यशः करिष्ये विपरीतमेवम् ॥ ९॥

रक्ष रक्ष दयासिन्धोऽपराधान्मे क्षमस्व च ।

क्षणे क्षणे त्वहं दासी रक्षितव्या विशेषतः ॥ १०॥

स्तुवत्यामेव पार्वत्यां शङ्करो बोधसंयुतः ।

बभूव गणपानां वै श्रुत्वा हाहारवं विधेः ॥ ११॥

गणेशं मनसा स्मृत्वा वृषारूढः समाययौ ।

क्षणेन दैत्यराजं तं दृष्ट्वा डमरुणाहनत् ॥ १२॥

ततः सोऽपि शिवं वीक्ष्यालिङ्गितुं धवितो।आभवत् ।

शिवस्य शूलिकादीनि शस्त्राणि कुण्ठितानि वै ॥ १३॥

तं दृष्ट्वा परमाश्चर्यं भयभीतो महेश्वरः ।

सस्मार गणपं सोऽपि निर्विघ्नार्थं प्रजापते ॥ १४॥

पार्वत्याः स्तवनं श्रुत्वा गजाननः समाययौ ।

इति मुद्गलपुराणोक्तं हेरम्बस्तोत्रं सम्पूर्णम् ।

*********************************

॥ हेरम्बोपस्थानम् ॥

प्रथमः खण्डः (शशिवदनावृत्तम्)

श्रियमसमानां मम शुभनामा ।

दिशतु गणानां पतिरतिधामा ॥ १॥

विजितजराधिं विनिहतरोगम् ।

द्विरदमुखो मे वितरतु योगम् ॥ २॥

वितरतु मह्यं निजपदभक्तिम् ।

गणपतिरग्र्यामपि भुजशक्तिम् ॥ ३॥

हरतनयो मे विभुरतिहृद्यम् ।

वितरतु भूतप्रविमलविद्याम् ॥ ४॥

मम करिवक्त्रः प्रभुरनवद्याम् ।

दिशतु भविष्यद्विदमुडुविद्याम् ॥ ५॥

निजविषयाजिष्वघहिमभानो ।

इममविजेयं कुरु हरसूनो ॥ ६॥

सुमधुरमाध्वीधरपदजातम् ।

करिमुख दासं कुरु कविमेतत् ॥ ७॥

गणपतिरूपं मनसि करोमि ।

गणपतिकिर्तीं वचसि तनोमि ॥ ८॥

मम गणनाथः शमयतु पापम् ।

सपदि विमुष्णात्वपि परशापम् ॥ ९॥

शशिवदनानां नवकृतिरेषा ।

भजतु गणेशं पतिमिव योषा ॥ १०॥

द्वितीयः खण्डः (मदलेखावृत्तम्)

आह प्राज्ञजनस्त्वां मूलाधारनिशान्तम् ।

मन्दे सुप्तमिभास्य ज्ञे युक्ते विलसन्तम् ॥ ११॥

अस्ति व्योम्नि गुरुर्यस्तस्यैव त्वमिहासि ।

विघ्नेशानविवर्तः सद्भक्तेषु विभासि ॥ १२॥

कोऽपि प्राभवशाली मूलाधारविहारी ।

प्रज्ञासिद्धिवधूभ्यं श्लिष्टो भात्यघहारी ॥ १३॥

आशा मे तव शक्तिं देहे द्रष्टुमपाराम् ।

पातुं चेश्वरसूनो मूर्धन्यामृतधाराम् ॥ १४॥

या चित् सा तव माता यः श्रेष्ठः स पिता ते ।

सिद्धिर्बाह्यमतिर्ये ते नाथ प्रमदे ते ॥ १५॥

या लिप्सा हृदये मे तां पूर्णां कुरु मा वा ।

एषाङ्गीक्रियतां मे मत्तेभानन सेवा ॥ १६॥

ना खे याति सुरो वा त्वं चेत् किञ्चिदुदास्यम् ।

आधारे विदधासि स्कन्दस्याग्रज लास्यम् ॥ १७॥

न स्वार्थे मम यत्नो निःस्वार्थे मम सोऽयम् ।

उद्योगः शिवसूनो सद्यो देहि सहायम् ॥ १८॥

माहात्म्यं ननु वक्तुं कः शक्तः पुरुषस्ते ।

हस्तीन्द्रानन भाग्यं सर्वेषां तव हस्ते ॥ १९॥

एतः सम्मदकत्रीर्हैरम्बीर्मदलेखाः ।

सेवन्तां कविभृङ्गाश्चान्द्रीर्भा इव लेखाः ॥ २०॥

तृतीय खण्डः (इन्द्रवज्रावृत्तम्)

एकादशानां प्रवरं सुतानां रुद्रस्य मन्त्रधिपतिं नमामि ।

शास्त्राणि सर्वाण्यपि यस्य कीलाः सूर्यानपोह्यं तिमिरं हरन्ति ॥ २१॥

प्राज्ञेन बुद्ध्या यदकारि पद्यं सधारणस्तत्र तवोपकारः ।

हेरम्ब यन्मन्त्रमृषिश्चकार व्यक्तोविशिष्टस्तव तत्र यत्र ॥ २२॥

जिह्वास्थलं नाथ विगाहमानं त्वामाहुरुच्छिष्टमयि छलोक्त्या ।

उच्छिष्टता चेत्तव रुद्रसूनो स्वाध्यायनिष्ठीवनतोर्भिदा का ॥ २३॥

सर्वाणि धान्यानि च भक्षयन्तं दन्तैः शितैर्देव सहायवन्तम् ।

एतं बिलस्थं रसनाह्वयं ते वाहं विदो मूषिकमामनन्ति ॥ २४॥

आधारचक्रे वसतो गणेश ज्योतिर्मयाणोर्ज्वलतः सदाते ।

एकः पचत्यन्नमशेषमूष्मा सम्प्रेरयन्त्य इमास्तु वाचः ॥ २५॥

वैश्वानरोऽग्निः सकलस्य जीवो वागिन्द्रियाग्निः शिवनन्दन त्वम् ।

यो वेद नैव युवयोर्विभेदं पिण्डेषु ना मुह्यति स प्रसङ्गे ॥ २६॥

त्वां ब्रह्मणस्पत्यभिधानमाहुः केचिद्विभोरीशपदस्य पुत्रम् ।

अन्यैर्बृहस्पत्यभिधान उक्तो धीरैर्विभोरिन्द्रपदस्य मन्त्री ॥ २७॥

जिह्वैव वेदिस्तव तोयपूता लोकप्रसङ्गस्तव तत्र धूमः ।

ज्वाला जगन्नाथकथा पवित्रा चेतो घृतं जुह्वति यत्र सन्तः ॥ २८॥

विद्युन्मयीमूर्तिरगादि जिष्णोर्या मौनिभिः सैव तव स्वरूपम् ।

इन्द्रस्य भेदस्तव चोदितो यः स प्राणविद्युत्तनुभेदमूलः ॥ २९॥

दिव्याग्निगात्रं धिषणा कलत्रं भर्गस्य पुत्रं प्रणतस्य मित्रम् ।

दिव्याग्निरुचो भजन्तामेताः करीन्द्राननमिन्द्रवज्राः ॥ ३०॥

चतुर्थः खण्दः (वसन्ततिलकवृत्तम्)

किं बृंहितानि कुरुषे कलुषेण भग्ने

मग्ने महाविपदि देव निजे विवर्ते ।

निद्रामि चेद्द्विरद बोधय हस्तघाता -

द्गच्छामि चेदपथमाशु निवर्तयस्व ॥ ३१॥

वेषस्त्वायमपरो यदि देव नाट्य-

मारभ्यतां तदुचित्तं किमुपैषि मौनम् ।

एतां प्रभो यवनिकामपसारयन्तु

सक्षाद्गणास्तव कुतः क्रियते विलम्बः ॥ ३२॥

एतत्तमो नयनशक्तिहरं गुहायं

मर्गं रुणद्धि न विलोकितुमस्मि शक्तः ।

स्नेहोऽस्ति काचन दशास्ति विभो कटाक्ष-

ज्योतिर्लव सदय देहि पुरो व्रजेयम् ॥ ३३॥

घोरं करोमि न तपो यदि तेऽपराधः

किं प्रेरणं न कृतवानसि रुद्रसूनो ।

सम्प्रेरितश्च भवता यदि नाचरेयं

सम्प्रेरणस्य तव का गजवक्त्र शक्तिः ॥ ३४॥

कार्यं न मे किमपि तत् खलु निर्जराणां

रूपं न मे किमपि तत्तव कोऽपि वेषः ।

इष्टं नु कष्टमथ कस्य करीन्द्रवक्त्र

शिष्टं तु मे किमपि नाम नराङ्गसङ्गि ॥ ३५॥

नामापि तत्तव भवत्यथवा गजास्य

चर्चा विनश्वरतमे तनुकञ्चुके का ।

विष्णोरिवेन्दुधवलं भविता यशश्चेत्

तद्दन्तकान्तिषु तवैव लयं प्रयातु ॥ ३६॥

स्थूलां तनूमसुमशेषमनोरथानां

स्थानं मनश्च धिषणां प्रमदं च मूलम् ।

आक्रम्य कोशमखिलं च विभो खलारे

विध्नाधिराज मयि दर्शय ते विभूतिम् ॥ ३७॥

देवी मतिर्जलपत्रविशालनेत्रा

देवी च सिद्धिरकलङ्कसुधाकरास्या ।

छयोष्णता च दिननाथमिव ज्वलन्तं

नित्यं भवन्तमिभवक्त्र विभो भजे ते ॥ ३८॥

सिद्धेन्द्रवेषभृति भूमिहिताय रुद्रे

कैलासशैलमधितिष्ठति वज्रपाणिः ।

धृत्वा गजेन्द्रमुखवेषममुष्य पुत्रो

भूत्वा विभुर्नयति पारिषदानशेषान् ॥ ३९॥

सम्मोदयन्तु हृदयं द्विरदाननस्य

देवस्य सिद्धिधिषणा हृदयेश्वरस्य ।

एता वसन्ततिलकाः कविकुञ्जरेण

गीताः कयाऽप्यमलभावनया युतेन ॥ ४०॥

॥ इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य

नरसिंहसूनोः गणपतेः कृतिर्हेरम्बोपस्थानं समाप्तम् ॥

★★★★★★★★ ★ ★★★★★★★★★

★अशोककाका कुलकर्णी★